# KÂVYAMÂLÂ.



A collection of old and rare Sanskrit Kâvyas, Nâtakas, Champûs, Bhâṇas, Prahasanas, Chhandas, Alankâras &c.

PART I.

EDITED BY

MAHÂMAHOPÂDHYÂYA PAṆḌIT DURGÂPRASÂD

AND

KÂS'ÎNÂTH PÂṆḌURANG PARAB.

Third Edition.

PUBLISHED

BY

PÂNDURANG JÂWAJÎ,

PROPRIETOR OF THE "NIRṆAYA SÂGAR" PRESS,

BOMBAY.

1929.

*Price* 1¼ *Rupee.*

॥ श्रीः ॥

# काव्यमाला ।

नाम

नानाविधप्राचीनकाव्यनाटकचम्पूभाणप्रहसन-
च्छन्दोलंकारादिसाहित्यग्रन्थानां
संग्रहः ।

प्रथमो गुच्छकः ।

जयपूरमहाराजाश्रितेन पण्डितव्रजलालसूनुना पण्डित-
दुर्गाप्रसादेन, मुम्बापुरवासिना परबोपाह्व-
पाण्डुरङ्गात्मजकाशिनाथशर्मणा च
संशोधितः ।

( तृतीयं संस्करणम् )

स च
मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतः ।

शकाब्दः १८५१ सनाब्दाः १९२९.

मूल्यं १। सपादरूप्यकः ।

# अनुक्रमणिका ।

# [1]काव्यमाला ।

## श्रीराघवचैतन्य[2]विरचितं
## महागणपतिस्तोत्रम् ।

तच्छिष्यकृतया टिप्पण्या समेतम् ।

योगं योगविदां विधूतविविधव्यासङ्गशुद्धाशय-
प्रादुर्भूतसुधारसप्रसृमरध्यानास्पदाध्यासिनाम् ।
आनन्दप्लवमानबोधमधुरामोदच्छटामेदुरं
तं भूमानमुपास्महे परिणतं दन्तावलास्यात्मना ॥ १ ॥

दन्तावलो गजस्तस्येवास्यं मुखं यस्य स गजाननस्तदात्मना तद्रूपेण परिणतं तं भूमानं परं ब्रह्मोपास्महे । कीदृशं तम् । आनन्दो ब्रह्मानन्दस्तेन प्लवमानः । लक्षणया पूर्णानन्दाभिन्न इत्यर्थः । ईदृशो यो बोधस्तेन चिदानन्दमयं स्वरूपमुक्तम् । तद्विवर्तरूपः प्रपञ्च एव मधुरामोदच्छटात्वेन रूपितस्तेन मेदुरम् । पुनः कीदृशम् । योगविदां योगम् । कीदृशां योगविदाम् । विधूतो विविधो व्यासङ्गो यैरत एव शुद्धो य आशयस्तस्मिन्प्रादुर्भूतः सुधारसः शान्तिसुखं येषां ते च ते प्रसृमरं प्रसारि ध्यानं यस्मिन्नीदृशं यदास्पदं कंदरादि तदध्यासिनश्च तेषाम् ॥

तारश्रीपरशक्तिकामवसुधारूपानुगं यं विदु-
स्तस्मै स्तात्प्रणतिर्गणाधिपतये यो रागिणाभ्यर्थ्यते ।
आमन्त्र्य प्रथमं वरेति वरदेत्यार्तेन सर्वं जनं
स्वामिन्मे वशमानयेति सततं स्वाहादिभिः पूजितः ॥ २ ॥

---

१. कार्यारम्भे विघ्नविघाताय देवतास्मरणं कर्तव्यमिति शिष्टाचारमनुसरद्भिरस्माभिरपि काव्यमालाप्रारम्भे देवतास्तुतिरूपाण्येव कानिचित्काव्यानि समुद्धृतानीति ज्ञातव्यं सुधीभिः. २. राघवचैतन्यनामा कश्चिन्महाकविः शार्ङ्गधरात्प्राचीन आसीत्, यतः शार्ङ्गधरपद्धतिमध्ये राघवचैतन्यनाम्ना केचिच्छ्लोकाः समुद्धृताः सन्ति. शार्ङ्गधरस्य पितामहो राघवदेवनामा हम्मीरचौहाणसभायामासीत्. हम्मीरस्तु १२९५ मिते खिस्तसंवत्सरे मृतः. राघवदेवस्यैव संन्यासग्रहणानन्तरं राघवचैतन्य इति नाम जातमिति भाति.

महागणपतिमन्त्रमुद्धरति—तारः प्रणवः, श्रीर्लक्ष्मीबीजम्, परशक्तिर्मायाबीजम्, कामः कामबीजम्, वसुधा भूमिबीजम्, इति पञ्चरूपाणां बीजानामनु गमित्यक्षरमेतादृशं यं साधका विदुस्तस्मै गणाधिपतये प्रणतिः स्तादिति योजना । यः सततं स्वाहास्वधादिभिः शक्तिभिः पूजितः । आर्तेन रागिणा प्रथमं वरेति ततो वरदेत्यामन्त्र्याभ्यर्थ्यते । अभ्यर्थनामेवाह—सर्वं जनं स्वामिन्मे वशमानयेति । स्वाहादिभिरित्यनेन स्वाहान्तो मन्त्रः । अत्राधिपदं सर्वमिति च पदं छन्दोनुरोधादुक्तम् । मन्त्रे तु गणपतये तथा सर्वजनमित्येकमेव पदम् । स्वामिन्निति च मन्त्राद्बहिर्भूतम् ॥

कल्लोलाञ्चलचुम्बिताम्बुदतताविक्षुद्रवाम्भोनिधौ
द्वीपे रत्नमये सुरद्रुमवनामोदैकमेदस्विनि ।
मूले कल्पतरोर्महामणिमये पीठेऽक्षराम्भोरुहे
षट्कोणाकलितत्रिकोणरचनासत्कर्णिकेऽमुं भजे ॥ ३ ॥

कल्लोलानां महोर्मीणामञ्चलाः प्रान्तास्तैराश्लिष्टा मेघततिर्येनैतादृश इक्षुरससमुद्रे सुरद्रुमाणां पारिजातादीनां वनं तदामोदेन परिपुष्टे । रत्नमयं द्वीपं वारिमध्यस्थलं तद्गतस्य कल्पतरोर्मूले महामणिमयं पीठं तत्र षट्कोणयुक्तत्रिकोणकर्णीकायुक्तेऽक्षराम्भोरुहे तन्त्रप्रसिद्धे मातृकाकमलेऽमुं महागणपतिं भजे ॥

चक्रप्रासरसालकार्मुकगदासद्बीजपूरद्विज-
व्रीह्यग्रोत्पलपाशपङ्कजकरं शुण्डाग्रजाग्रद्घटम् ।
आश्लिष्टं प्रियया सरोजकरया रत्नस्फुरद्भूषया
माणिक्यप्रतिमं महागणपतिं विश्वेशमाशास्महे ॥ ४ ॥

चक्रं प्रसिद्धम्, प्रासस्त्रिशूलः, रसालकार्मुकमिक्षुधनुः, गदा प्रसिद्धा, बीजपूरो मातुलिङ्गम्, द्विजः स्वकीयो दन्तः, व्रीह्यग्रं शालिमञ्जरी, उत्पलं प्रसिद्धम्, पाशपङ्कजे च प्रसिद्धे, एवं दशायुधानि करेषु यस्य । शुण्डाग्रे पुष्करे जाग्रत्स्थितो घटो रत्नपूर्णो हेमकुम्भो यस्य । कमलहस्तया प्रियया दक्षिणहस्तेनालिङ्गितं माणिक्यप्रतिमं शोणच्छविं सर्वेश्वरं महागणपतिमाशास्महे ॥

दानाम्भःपरिमेदुरप्रसृमरव्यालम्बिरोलम्बभृ-
त्सिन्दूरारुणगण्डमण्डलयुगव्याजात्प्रशस्तिद्वयम् ।
त्रैलोक्येष्टविधानवर्णसुभगं यः पद्मरागोपमं
धत्ते स श्रियमातनोतु सततं देवो गणानां पतिः ॥ ५ ॥

दानाम्भसा मदाम्बुना परिमेदुरं व्याप्तं प्रसृमरान्व्यालम्बिनो रोलम्बान्भ्रमरान्बिभर्तीति प्रसृमरव्यालम्बिरोलम्बभृत् । सिन्दूरेणारुणमेतादृशं कुम्भप्रदेशद्वयं तस्य मिषा-

त्रैलोक्येष्टविधानवर्णसुभगं त्रिभुवनशुभविध्यक्षरमनोज्ञम् । पद्मरागोपमं पद्मरागो लोहितकस्तदुपमं प्रशस्तिद्वयं यो धत्ते स गणानां पतिर्देवः सततं श्रियमातनोतु । यथा मृदम्बुलिप्ते दारुफलके रक्तचूर्णं दत्त्वाक्षराणि, तथा दानाम्बुलिप्ते सिन्दूरवति कुम्भस्थले भ्रमरा इत्युक्तं भवति ॥

भ्राम्यन्मन्दरघूर्णनापरवशक्षीराब्धिवीचिच्छटा-
सच्छायाश्चलचामरव्यतिकरश्रीगर्वसर्वंकषाः ।
दिक्कान्ताघनसारचन्दनरसासाराः श्रयन्तां मनः
स्वच्छन्दप्रसरप्रलिप्तवियतो हेरम्बदन्तत्विषः ॥ ६ ॥

हेरम्बदन्तत्विषो मनः श्रयन्ताम् । किंभूताः । भ्राम्यतो मन्दरस्य घूर्णनाभ्रमतयस्तदायत्तस्य क्षीराब्धेर्वीचयो लहर्यस्तासां छटा अग्रभागास्तैः सदृशाः । पुनः कीदृशाः । चलचामरव्यतिकरश्रीगर्वसर्वंकषाः । व्यतिकरो व्यतिषङ्गः । दिक्कान्तेत्यादिरूपकम् । घनसारः कर्पूरः । तथा स्वच्छन्दप्रसरप्रलिप्तवियतोऽनल्पसंचाराकीर्णाकाशाः । एतेन त्विषां बहुत्वं व्यज्यते ॥

मुक्ताजालकरम्बितप्रविकसन्माणिक्यपुञ्जच्छटा-
कान्ताः कम्बुकदम्बचुम्बितघनाभोगप्रवालोपमाः ।
ज्योत्स्नापूरतरङ्गमन्थरतरत्संध्यावयस्याश्चिरं
हेरम्बस्य जयन्ति दन्तकिरणाकीर्णाः शरीरत्विषः ॥ ७ ॥

मौक्तिकसमूहमिश्रितप्रदीप्तमाणिक्यसमूहच्छटावत्कान्ता मनोहराः । शङ्खसमूहसंगतविस्तीर्णविद्रुमसमाः । ज्योत्स्नापूरतरङ्गे मन्थरं तरन्ती चासौ संध्या च तस्या वयस्याः साम्यात्सख्यः । एतादृशा हेरम्बस्य दन्तकिरणैर्व्याप्ताः शरीरत्विषश्चिरं जयन्ति ॥

शुण्डाग्राकलितेन हेमकलशेनावर्जितेन क्षर-
न्नानारत्नचयेन साधकजनान्संभावयन्कोटिशः ।
दानामोदविनोदलुब्धमधुपप्रोत्सारणाविर्भव-
त्कर्णान्दोलनखेलनो विजयते देवो गणग्रामणीः ॥ ८ ॥

शुण्डाग्रधृतसुवर्णकलशसंगृहीतेन क्षरता बहुत्वाद्बहिरपि निर्गच्छता मुक्तामाणिक्यादिरत्नसमूहेन कोटिशः साधकजनान्संभावयन्नसंख्यातानुपासकान्संपदा वर्धयन् । दानेत्यादि । आमोदो गन्धहर्षयोः । प्रोत्सारणमुच्चाटनं तदर्थमाविर्भवत्कर्णान्दोलनक्रीडः । गणानामिश्वरो देवो विजयते ॥

हेरम्बं प्रणमामि यस्य पुरतः शाण्डिल्यमूले श्रिया
बिभ्रत्याम्बुरुहे समं मधुरिपुस्ते शङ्खचक्रे वहन् ।

न्यग्रोधस्य तले सहाद्रिसुतया शंभुस्तथा दक्षिणे
बिभ्राणः परशुं त्रिशूलमितया पाशाङ्कुशाभ्यां शुभम् ॥ ९ ॥

शाण्डिल्यमूले बिल्ववृक्षस्याधो यस्य महागणपतेः पुरतोऽग्रभागे पद्मे बिभ्रत्या श्रिया समं ते प्रसिद्धे शङ्खचक्रे वहन्मधुरिपुर्विष्णुरस्ति। तथा यस्य दक्षिणे न्यग्रोधस्य तले वटवृक्षाधः पाशाङ्कुशाभ्यामितया सहितयाद्रिसुतया पार्वत्या सह परशुं त्रिशूलं च बिभ्राणः शंभुः शिवोऽस्ति ॥

पश्चात्पिप्पलमाश्रितो रतिपतिर्देवस्य रत्योत्पले
बिभ्रत्या सममैक्षवं धनुरिषून्पौष्पान्वहन्पञ्च च।
वामे चक्रगदाधरः स भगवान्क्रोडः प्रियंगोस्तले
हस्तोद्यच्छुकशालिमञ्जरिकया देव्या धरण्या सह ॥ १० ॥

देवस्य पश्चिमे पिप्पलवृक्षस्याध उत्पले बिभ्रत्या रत्या सममैक्षवं धनुः पञ्च पौष्पानिषूंश्च वहन्रतिपतिः कामदेवोऽस्ति। अस्य च वामे प्रियंगुवृक्षाधो हस्तोद्यच्छुकशालिमञ्जरिकयैकस्मिन्करे कीरमन्यत्र कलमकणिशं बिभ्रत्या धरण्या सह स प्रसिद्धो भगवान्क्रोडो वराहोऽस्ति तं हेरम्बं प्रणमामीति पूर्वेणान्वयः ॥

षट्कोणाश्रिषु षट्सु षड्‌ गजमुखाः पाशाङ्कुशाभीवरा-
न्बिभ्राणाः प्रमदासखाः पृथुमहाशोणाश्मपुञ्जत्विषः।
आमोदः पुरतः प्रमोदसुमुखौ तं चाभितो दुर्मुखः
पश्चात्पार्श्वगतोऽस्य विघ्न इति यो यो विघ्नकर्तेति च ॥ ११ ॥

षट्कोणस्य पीठस्य षट्स्वश्रिषु पालीषु षड् गजमुखा ध्येयाः। कीदृशास्ते। पाशाङ्कुशाभयवरान्हस्तेषु बिभ्राणाः। प्रमदानां सखाय इति प्रमदासखाः। भार्यासहिता इत्यर्थः। पृथुश्चासौ महाशोणाश्मनां पद्मरागाणां पुञ्जस्तद्वत्त्विट् कान्तिर्येषां ते। यदि 'पृथुमहाः' इति विसर्गान्तः पाठस्तदा भिन्नं पदम्। पृथुर्महो येषां ते। अकारान्तोऽपि महशब्दोऽस्ति। तेषां नामान्याह—पुरतोऽग्रकोण आमोदः। तं चामोदमभितः प्रमोदसुमुखौ। पुरः कल्पितपूर्वदिगपेक्षयाग्निकोणे प्रमोदः, एवमीशानकोणे सुमुख इत्यर्थः। पश्चात्पश्चिमकोणे दुर्मुखः। अस्य दुर्मुखस्य विघ्न इति यस्य नाम स एकस्मिन्पार्श्वे, विघ्नकर्तेति यस्य नाम स द्वितीयपार्श्वेऽस्ति। अर्थादेको नैर्ऋत्यकोणे, अपरो वायव्ये वर्तते ॥

आमोदादिगणेश्वरप्रियतमास्तत्रैव नित्यं स्थिताः
कान्ताश्लेषरसज्ञमन्थरदृशः सिद्धिः समृद्धिस्ततः।
कान्तिर्या मदनावतीत्यपि तथा कल्पेषु या गीयते
सान्या यापि मदद्रवा तदपरा द्राविण्यमूः पूजिताः ॥ १२ ॥

कान्तस्य स्वस्वभर्तुरालिङ्गनरसं जानन्त्यत एव-मन्थरा रागिणी दृग्यासां ताः । आमोदादीनां पूर्वश्लोकोक्तानां षण्णां भार्यास्तेषां समीपे स्थिता ध्येयाः । तासां नामानि च—सिद्धिः, समृद्धिः, कान्तिः, मदनावती, मदद्रवा, द्राविणी चेति ॥

आश्लिष्टौ वसुधेत्यथो वसुमती ताभ्यां सितालोहितौ
वर्षन्तौ वसु पार्श्वयोर्विलसतस्तौ शङ्खपद्मौ निधी ।
अङ्गान्यन्वथ मातरश्च परितः शक्रादयोऽब्जाश्रया-
स्तद्बाह्ये कुलिशादयः परिपतत्कालानलज्योतिषः ॥ १३ ॥

वसुधया वसुमत्या च क्रमेणालिङ्गितौ शुक्लरक्तवर्णौ धनं वर्षन्तौ तौ शङ्खपद्मसंज्ञौ प्रसिद्धौ नीधी षट्कोणपार्श्वयोर्विलसतः । तयोर्ध्यानं कुर्यादित्यर्थः । अनु निधिध्यानानन्तरं हृदयादि षडङ्गानि ध्यायेत् । परितो ब्राह्म्याद्या अष्ट मातरो ध्येयाः । षट्कोणाद्बहिःस्थितेऽष्टदलकमल इन्द्रादयो दिक्पालास्तद्बाह्ये तेषां समीप एव परिपतत्कालानलज्योतिषः प्रदीप्तस्वरूपा इन्द्रादीनां हेतयो वज्राद्या ध्येयाः ॥

इत्थं विष्णुशिवादितत्त्वतनवे श्रीवक्रतुण्डाय हुं-
काराक्षिप्तसमस्तदैत्यपृतनाव्राताय दीप्तत्विषे ।
आनन्दैकरसावबोधलहरीविध्वस्तसर्वोर्मये
सर्वत्र प्रथमानमुग्धमहसे तस्मै परस्मै नमः ॥ १४ ॥

'हेरम्बं प्रणमामि' (९।१०) इति श्लोकाभ्यां विष्णुशिवादिस्वरूपैस्तनुर्मूर्तिर्यस्य स तस्मै । आदिपदात्स्मरक्रोडौ । हुंकारमात्रेण निरस्तसमस्तासुरसैन्यसमूहाय दीप्तकान्तये । आनन्देति । निरतिशयसुखस्फुरणतरङ्गैर्दूरीकृतसंपूर्णोर्मये । ऊर्मयः षड्भावविकाराः । ते च—जायते, अस्ति, वर्धते, विपरिणमते, अपक्षीयते, नश्यतीति च । आनन्दैकरसावबोधलहरीभिर्विध्वस्ताः सर्वेषां साधकानामूर्मयः षडिन्द्रियजन्या वृत्तयो यस्मादित्येके । ऊर्मिशब्देनाविद्यादयो योगशास्त्रप्रसिद्धाः क्लेशाः । सर्वत्र प्रथमानं मुग्धं सुन्दरं महो यस्य तस्मै परस्मै जगतोऽन्यस्मै नमः ॥

सेवाहेवाकिदेवासुरनरनिकरस्फारकोटीरकोटी-
कोटिव्याटीकमानद्युमणिसममणिश्रेणिभावेणिकानाम् ।
राजन्नीराजनश्रीसखचरणनखद्योतविद्योतमानः
श्रेयः स्थेयः स देयान्मम विमलदृशो बन्धुरं सिन्धुरास्यः ॥ १५ ॥

सेवायां हेवाकोऽभिलाषो येषाम् । अहमग्रेऽहमग्रे भवामीतीच्छा । अहंपूर्विकेति यावत् । ते च ते देवासुरनराणां समूहास्तेषां देदीप्यमानमुकुटाग्राणां या कोटिः संख्याविशेषस्तत्र व्याटीकमानाः सुसंगताः सूर्यतुल्यरत्नपङ्क्तिकान्तिप्रवाहास्तेषाम् । राजन्ती

नीराजनश्रीरारात्रिकशोभा तस्याः सखायस्ते च ते चरणनखाश्च तेषां द्योतेन प्रकाशेन विद्योतमानः स प्रसिद्धः सिन्धुरास्यो गजमुखः । हे विमलदृशः पण्डिताः । मम बन्धुरं रम्यं स्थेयः स्थिरतरं श्रेयः कल्याणं देयात् । ममेत्यस्य वा विमलदृश इति विशेषणम् । 'विमलदृशा' इति पाठे तु सौम्यावलोकनेन श्रेयो दद्यादित्यर्थः ॥

एतेन प्रकटरहस्यमन्त्रमालागर्भेण स्फुटतरसंविदा स्तवेन ।
यः स्तौति प्रचुरतरं महागणेशं तस्येयं भवति वशंवदा त्रिलोकी ॥१६॥

स्फुटतरसंविदेत्यनेन स्तोत्रे प्रसादगुणः सूचितः । प्रचुरतरं मुहुर्मुहुः । अन्यत्स्पष्टम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवर्यश्रीराघवचैतन्यविरचितं महागणपतिस्तोत्रं तच्छिष्यकृतया टिप्पण्या समेतं समाप्तम् ।

---

## श्रीलङ्केश्वरविरचिता

# शिवस्तुतिः ।

गले[1] कलितकालिम प्रकटितेन्दु भालस्थले
विनाटितजटोत्करं रुचिरपाणिपाथोरुहे ।
उदञ्चितकपालकं जघनसीम्नि संदर्शित-
द्विपाजिनमनुक्षणं किमपि धाम वन्दामहे ॥ १ ॥
वृषोपरिपरिस्फुरद्धवलधाम धामश्रिया
कुबेरगिरि[2]गौरिमप्रभवगर्वनिर्वासि तत् ।
क्वचित्पुनरुमाकुचोपचितकुङ्कुमै रञ्जितं
गजाजिनविराजितं वृजिनभङ्गबीजं भजे ॥ २ ॥
उदित्वरविलोचनत्रयविसृत्वरज्योतिषा
क[3]लाकरकलाकरव्यतिकरेण चाहर्निशम् ।
विकासितजटाटवीविहरणोत्सवप्रोल्लस-
त्तरामरतरङ्गिणीतरलचूडमीडे मृडम् ॥ ३ ॥

---

१. 'गले कलितकालिम' इत्यादि धामविशेषणानि. २. कुबेरगिरिः कैलासः. स च सदैव हिमाच्छादितत्वादतिशुभ्रः. ३. कलानामाकरः कलाकरश्चन्द्रः. रलयोः सावर्ण्यात्कराणामाकरः किरणमाली सूर्योऽपि कलाकरः.

विहाय कमलालयाविलसितानि विद्युन्नटी-
विडम्बनपटूनि मे विहरणं विधत्तां मनः ।
कपर्दिनि कुमुद्वतीरमणखण्डचूडामणौ
कटीतटपटीभवत्करटिचर्मणि ब्रह्मणि ॥ ४ ॥

[1]भवद्भुवनदेहलीविकटतुण्डदण्डाहति-
त्रुटन्मुकुटकोटिभिर्मघवदादिभिर्भूयते ।
व्रजेम भवदन्तिकं प्रकृतिमेत्य पैशाचिकीं
किमित्यमरसंपदः प्रमथनाथ नाथामहे ॥ ५ ॥

त्वदर्चनपरायणप्रमथकन्यकालुण्ठित-
प्रसूनसफलद्रुमं कमपि शैलमाशास्महे ।
अलं तटवितर्दिकाशयितसिद्धसीमन्तिनी-
प्रकीर्णसुमनोमनोरमने[2]मेरुणा मेरुणा ॥ ६ ॥

न जातु हर यातु मे विषयदुर्विलासं मनो
मनोभवकथास्तु मे न च मनोरथातिथ्यभूः ।
स्फुरत्सुरतरङ्गिणीतटकुटीरकोटौ वस-
न्नये शिव दिवानिशं [3]तव भवानि पूजापरः ॥ ७ ॥

विभूषणसुरापगाशुचितरालवालावली-
वलद्बहलसीकरप्रकरसेकसंवर्धिता ।
महेश्वरसुरद्रुमस्फुरितसज्जटामञ्जरी
नमज्जनफलप्रदा [4]मम नु हन्त भूयादियम् ॥ ८ ॥

---

१. अयं श्लोकः श्रीमदप्पयदीक्षितैः कुवलयानन्देऽनुज्ञालंकारोदाहरण उदाहृतः. तत्र च पूर्वार्धोत्तरार्धयोर्व्यत्ययः. व्याख्यातश्चेत्थं कुवलयानन्दटीकायां चन्द्रिकायाम्—'व्रजेमेति । हे प्रमथनाथ हर, पैशाचिकीं पिशाचसंबन्धिनीं प्रकृतिं पिशाचतामेत्य प्राप्य भवतोऽन्तिकं समीपदेशं भजेम । अमरसंपदः किमिति प्रार्थयामहे । यतो मघवादिभिरिन्द्रप्रमुखैरपि भवद्भुवनदेहलीषु विकटतुण्डस्य वक्रतुण्डस्य दण्डाघातैः स्फुटन्मुकुटाग्रैर्भूयत इत्यर्थः ॥'. २. 'छायावृक्षो नमेरुः स्यादिति शब्दार्णवः' इति मेघदूतटीकायां मल्लिनाथः. 'नमेरुः सुरपुंनागवृक्षो रुद्राक्षवृक्षश्च' इति शब्दार्थचिन्तामणिः. ३. 'भव' इति द्वितीयपुस्तकपाठः. ४. 'तदिह किं न भूयामहे' इति द्वितीयपुस्तकपाठः.

बहिर्विषयसंगतिप्रतिनिवर्तिताक्षावलेः
समाधिकलितात्मनः पशुपतेरशेषात्मनः ।
शिरःसुरसरित्तटीकुटिलकल्पकल्पद्रुमं
निशाकरकलामहं वटुविमृष्यमाणां भजे ॥ ९ ॥

त्वदीयसुरवाहिनीविमलवारिधारावल-
ज्जटागहनगाहिनी मतिरियं ममाक्रामतु ।
उपोत्तमसरित्तटीविटपिताटवीप्रोल्लस-
त्तपस्विपरिषत्तुलाममलमल्लिकाभ प्रभो[2] ॥ १० ॥

इति श्रीलङ्केश्वरविरचिता शिवस्तुतिः समाप्ता ।

---

## महाकविश्रीकालिदासकृतं[3]
## श्यामलादण्डकम्[4] ।

माणिक्यवीणामुपलालयन्तीं मदालसां मञ्जुलवाग्विलासाम् ।
माहेन्द्रनीलोपलकोमलाङ्गीं मातङ्गकन्यां सततं स्मरामि ॥

---

१. 'वसुविमृष्यमाणम्' इतिद्वितीयपुस्तकपाठः. २. अष्टमनवमदशमश्लोकाः किंचिदस्फुटा एव सन्तीति विचारयन्तु विद्वांसः. ३. कालिदासस्य समयादिकमद्यापि न निश्चयेन वक्तुं शक्यते. आरोहकभगदत्तजह्लणसंगृहीतसूक्तिमुक्तावली-हरिकविसंगृहीतसुभाषितहारावल्यो राजशेखरनाम्ना समुद्धृतात्। 'एकोऽपि जीयते हन्त कालिदासो न केनचित् । शृङ्गारे ललितोद्गारे कालिदासत्रयी किमु ॥' इत्यस्मात्पद्याज्ज्ञायते यद्राजशेखरात्पूर्वं त्रयः कालिदासाः समुत्पन्नाः. ते च कस्मिन्कस्मिन्देशे काले च प्रादुरभूवन्निति न ज्ञायते. अकबरीयकालिदासस्तु चतुर्थोऽर्वाचीनः राजशेखरस्तु खिस्तसंवत्सरस्य दशमे शतके समुत्पन्न इति पण्डितवर-रामकृष्ण-गोपाल-भाण्डारकरनिर्णयः. ४. मातङ्गीदेवीस्तुतिरूपोऽयं ग्रन्थः. अस्मिन्दण्डके सर्वत्र पादप्रारम्भे नगणद्वयम्. तदनन्तरं चानियतसंख्या रगणाः. तस्मान्मत्तमातङ्गलीलाकर इति नामास्य दण्डकस्य. तल्लक्षणं तु—'यत्र रेफान्कविः स्वेच्छया पाठसौकर्यसापेक्षया रोपयत्येष धीरैः स्मृतो दण्डको मत्तमातङ्गलीलाकरः.' अस्मिन्दण्डके पादपञ्चकं दृश्यते तल्लेखकादिदोषसमुद्भूतम्. अन्यथा तु पादचतुष्टयमेवापेक्षितम्. चण्डवृष्टिप्रपातादिषु तु पादप्रारम्भे नगणद्वयम्. तदनन्तरं सप्ताष्टादिका नियता रगणा भवन्ति. अत्र त्वनियता इति भेदः.

जय मातङ्गतनये जय नीलोत्पलद्युते ।
जय संगीतरसिके जय लीलाशुकप्रिये ॥

जय जननि सुधासमुद्रान्तरुद्यन्मणिद्वीपसंरूढबिल्वाटवीमध्यकल्पद्रुमाकल्पकादम्बकान्तारवासप्रिये कृत्तिवासःप्रिये सर्वलोकप्रिये । सादरारब्धसंगीतसंभावनासंभ्रमालोलनीपस्रगाबद्धचूलीसनाथत्रिके सानुमत्पुत्रिके । शेखरीभूतसीतांशुरेखामयूखावलीबद्धसुस्निग्धनीलालकश्रेणिशृङ्गारिते लोकसंभाविते । कामलीलाधनुःसंनिभभ्रूलतापुष्पसंदोहसंदेहकृल्लोचने वाक्सुधासेचने । चारुगोरोचनापङ्ककेलीललामाभिरामे सुरामे रमे । प्रोल्लसद्वालिकामौक्तिकश्रेणिकाचन्द्रिकामण्डलोद्भासिलावण्यगण्डस्थलन्यस्तकस्तूरिकापत्ररेखासमुद्भूतसौरभ्यसंभ्रान्तभृङ्गाङ्गनागीतसान्द्रीभवन्मन्द्रतन्त्रीस्वरे सुस्वरे भास्वरे । वल्लकीवादनप्रक्रियालोलतालीदलाबद्धताटङ्कभूषाविशेषान्विते सिद्धसंमानिते । दिव्यहालामदोद्वेलहेलालसच्चक्षुरान्दोलनश्रीसमाक्षिप्तकर्णैकनीलोत्पले पूरिताशेषलोकाभिवाञ्छाफले श्रीफले । स्वेदबिन्दूल्लसद्भाललावण्यनिष्यन्दसंदोहसंदेहकृन्नासिकामौक्तिके सर्वविश्वात्मिके कालिके । मुग्धमन्दस्मितोदारवक्त्रस्फुरत्पूगताम्बूलकर्पूरखण्डोत्करे ज्ञानमुद्राकरे सर्वसंपत्करे पद्मभास्वत्करे । कुन्दपुष्पद्युतिस्निग्धदन्तावलीनिर्मलालोकसंमेलनस्मेरशोणाधरे चारुवीणाधरे पक्वबिम्बाधरे ॥ १ ॥

सुललितनवयौवनारम्भचन्द्रोदयोद्वेललावण्यदुग्धार्णवाविर्भवत्कम्बुबिब्बोकभृत्कंधरे सत्कलामन्दिरे मन्थरे । दिव्यरत्नप्रभाबन्धुरच्छन्न[1]हारादिभूषासमुद्द्योतमानानवद्यांशुशोभे शुभे । रत्नकेयूररश्मिच्छटापल्लवप्रोल्लसद्दोर्लताराजिते योगिभिः पूजिते । विश्व[2]दिङ्मण्डलव्यापिमाणिक्यतेजःस्फुरत्कङ्कणालंकृते विभ्रमालंकृते साधकैः सत्कृते । वासरारम्भवेलासमुज्जृम्भमाणारविन्दप्रतिद्वन्द्विपाणिद्वये संततोद्यद्दये अद्वये । दिव्यरत्नोर्मिकादीधितिस्तोमसंध्यायमानाङ्गुलीपल्लवोद्यन्नखेन्दुप्रभामण्डले संनताखण्डले चित्प्रभामण्डले प्रोल्लसत्कुण्डले । तारकाराजिनीकाशहारावलिस्मेरचारुस्तनाभोगभारानमन्मध्यवल्लीबलिच्छेदवीचीसमुल्लाससंदर्शिताकारसौन्दर्यरत्नाकरे व-

१. छन्ननामको हस्तभूषणविशेषः, २. संपूर्णम्.

ल्लकीभृत्करे किंकरश्रीकरे । हेमकुम्भोपमोत्तुङ्गवक्षोजभारावनम्रे त्रिलोकावनम्रे । लसद्वृत्तगम्भीरनाभीसरस्तीरशैवालशङ्काकरश्यामरोमावलीभूषणे मञ्जुसंभाषणे । चारुशिञ्जत्कटीसूत्रनिर्भर्त्सितानङ्गलीलाधनुःशिञ्जिनीडम्बरे दिव्यरत्नाम्बरे । पद्मरागोल्लसन्मेखलाभास्वरश्रोणिशोभाजितस्वर्णभूभृत्तले चन्द्रिकाशीतले ॥ २ ॥

विकसितनवकिंशुकाताम्रदिव्यांशुकच्छन्नचारूरुशोभापराभूतसिन्दूरशोणायमानेन्द्रमातङ्गहस्तार्गले वैभवानर्गले श्यामले । कोमलस्निग्धनीलोपलोत्पादितानङ्गतूणीरशङ्काकरोदारजङ्घालते चारुलीलागते । नम्रदिक्पालसीमन्तिनीकुन्तलस्निग्धनीलप्रभापुञ्जसंजातदूर्वाङ्कुराशङ्कसारङ्गसंयोगरिङ्खन्नखेन्दूज्ज्वले प्रोज्ज्वले निर्मले । प्रह्वदेवेशलक्ष्मीशभूतेशतोयेशवाणीशकीनाशदैत्येशयक्षेशवाय्वग्निकोटीरमाणिक्यसंघृष्टबालातपोद्दामलाक्षारसारुण्यतारुण्यलक्ष्मीगृहीताङ्घ्रिपद्मे सुपद्मे उमे ॥ ३ ॥

सुरुचिरनवरत्नपीठस्थिते सुस्थिते । रत्नपद्मासने रत्नसिंहासने शङ्खपद्मद्वयोपाश्रिते । तत्र विघ्नेशदुर्गाबटुक्षेत्रपालैर्युते । मत्तमातङ्गकन्यासमूहान्विते मञ्जुलामेनकाद्यङ्गनामानिते भैरवैरष्टभिर्वेष्टिते । देवि वामादिभिः शक्तिभिः सेविते । धात्रिलक्ष्म्यादिशक्त्यष्टकैः संयुते । मातृकामण्डलैर्मण्डिते । यक्षगन्धर्वसिद्धाङ्गनामण्डलैरर्चिते । पञ्चबाणात्मिके । पञ्चबाणेन रत्या च संभाविते । प्रीतिभाजा वसन्तेन चानन्दिते । भक्तिभाजां परं श्रेयसे कल्पसे । योगिनां मानसे द्योतसे । छन्दसामोजसा भ्राजसे । गीतविद्याविनोदातितृष्णेन कृष्णेन संपूज्यसे । भक्तिमच्चेतसा वेधसा स्तूयसे । विश्वहृद्येन वाद्येन विद्याधरैर्गीयसे ॥ ४ ॥

श्रवणहरणदक्षिणक्वाणया वीणया किंनरैर्गीयसे । यक्षगन्धर्वसिद्धाङ्गनामण्डलैरर्च्यसे । सर्वसौभाग्यवाञ्छावतीभिर्वधूभिः सुराणां समाराध्यसे । सर्वविद्याविशेषात्मकं चाटुगाथासमुच्चारणं कण्ठमूलोल्लसद्वर्णराजित्रयं कोमलश्यामलोदारपक्षद्वयं तुण्डशोभातिदूरीभवत्किंशुकं तं शुकं लालयन्ती परिक्रीडसे । पाणिपद्मद्वयेनाक्षमालामपि स्फाटिकीं ज्ञानसारात्मकं पुस्तकं चाङ्कुशं पाशमाबिभ्रती येन संचिन्त्यसे तस्य वक्त्रान्तराद्गद्यपद्यात्मिका भारती निःसरेत् ।

येन वा यावकाभाकृतिर्भाव्यसे तस्य वश्या भवन्ति स्त्रियः पूरुषाः । येन वा शातकुम्भद्युतिर्भाव्यसे सोऽपि लक्ष्मीसहस्रैः परिक्रीडते । किं न सिद्ध्येद्वपुः श्यामलं कोमलं चन्द्रचूडान्वितं तावकं ध्यायतः । तस्य लीलासरो वारिधिस्तस्य केलीवनं चन्दनं तस्य भद्रासनं भूतलं तस्य गीर्देवता किंकरी तस्य चाज्ञाकरी श्रीः स्वयम् । सर्वतीर्थात्मिके सर्वमन्त्रात्मिके सर्वतन्त्रात्मिके सर्वयन्त्रात्मिके सर्वशक्त्यात्मिके सर्वपीठात्मिके सर्वतत्त्वात्मिके सर्वविद्यात्मिके सर्वयोगात्मिके सर्वनादात्मिके सर्वशब्दात्मिके सर्वविश्वात्मिके सर्वदीक्षात्मिके सर्वसर्वात्मिके सर्वगे पाहि मां पाहि मां पाहि मां देवि तुभ्यं नमो देवि तुभ्यं नमो देवि तुभ्यं नमः ॥ ५ ॥

माता मरकतश्यामा मातङ्गी मदशालिनी ।
कटाक्षयतु कल्याणी कदम्बवनवासिनी ॥

इति महाकविश्रीकालिदासकृतं श्यामलादण्डकं समाप्तम् ।

---

## श्रीकुलशेखरनृपतिविरचिता
## मुकुन्दमाला[1] ।

वन्दे मुकुन्दमरविन्ददलायताक्षं
कुन्देन्दुशङ्खदशनं शिशुगोपवेषम् ।
इन्द्रादिदेवगणवन्दितपादपीठं
वृन्दावनालयमहं वसुदेवसूनुम् ॥ १ ॥

जयतु[2] जयतु देवो देवकीनन्दनोऽयं
जयतु जयतु कृष्णो वृष्णिवंशप्रदीपः ।
जयतु जयतु मेघश्यामलः कोमलाङ्गो
जयतु जयतु पृथ्वीभारनाशो मुकुन्दः ॥ २ ॥

---

१. यद्यपीयं मुकुन्दमाला कलिकातामुद्रिते काव्यसंग्रहे मुम्बयीमुद्रितेषु स्तोत्रकलापादिषु च मुद्रितास्ति, परंतूभयत्राप्यसंपूर्णाऽशुद्धा च, तस्मादस्माभिः पुनरपि गृहीता. अस्मत्पुस्तकं तु संपूर्णं शुद्धं कश्मीरदेशलिखितमस्ति. २. मुद्रितपुस्तकेषु प्रथमश्लोकादनन्तरमयं श्लोको दृश्यते—

'श्रीवल्लभेति वरदेति दयापरेति भक्तिप्रियेति भवलुण्ठनकोविदेति ।
नाथेति नागशयनेति जगन्निवासेत्यालापिनं प्रतिदिनं कुरु मां मुकुन्द ॥'

मुकुन्द मूर्ध्ना प्रणिपत्य याचे भवन्तमेकान्तमियन्तमर्थम् ।
अविस्मृतिस्त्वच्चरणारविन्दे भवे भवे मेऽस्तु भवत्प्रसादात् ॥ ३ ॥

श्रीमुकुन्दपदाम्भोजमधुनः परमाद्भुतम् ।
यत्पायिनो न मुह्यन्ति मुह्यन्ति यदपायिनः ॥ ४ ॥

नाहं वन्दे तव चरणयोर्द्वन्द्वमद्वन्द्वहेतोः
कुम्भीपाकं गुरुमपि हरे नारकं नापनेतुम् ।
रम्या रामा मृदुतनुलता नन्दने नापि रन्तुं
भावे भावे हृदयभवने भावयेऽहं भवन्तम् ॥ ५ ॥

नास्था धर्मे न वसुनिचये नैव कामोपभोगे
यद्भाव्यं तद्भवतु भगवन्पूर्वकर्मानुरूपम् ।
एतत्प्रार्थ्यं मम बहुमतं जन्मजन्मान्तरेऽपि
त्वत्पादाम्भोरुहयुगगता निश्चला भक्तिरस्तु ॥ ६ ॥

दिवि वा भुवि वा ममास्तु वासो नरके वा नरकान्तक प्रकामम् ।
अवधीरितशारदारविन्दौ चरणौ ते मरणेऽपि चिन्तयामि ॥ ७ ॥

सरसिजनयने सशङ्खचक्रे मुरभिदि मा विरमेह चित्त रन्तुम् ।
सुखकरमपरं न जातु जाने हरिचरणस्मरणामृतेन तुल्यम् ॥ ८ ॥

मा भैर्मन्दमनो विचिन्त्य बहुधा यामीश्चिरं यातना
नामी नः प्रभवन्ति पापरिपवः स्वामी ननु श्रीधरः ।
आलस्यं व्यपनीय भक्तिसुलभं ध्यायस्व नारायणं
लोकस्य व्यसनापनोदनकरो दासस्य किं न क्षमः[1] ॥ ९ ॥

---

१. मुद्रितपुस्तकेषु नवमश्लोकादग्रे प्रक्षिप्तं श्लोकषट्कं वर्तते—
'भवजलधिगतानां द्वन्द्ववाताहतानां सुतदुहितृकलत्रत्राणभारावृतानाम् ।
विषमविषयतोये मज्जतामप्लवानां भवति शरणमेको विष्णुपोतो नराणाम् ॥
रजसि निपतितानां मोहजालावृतानां जननमरणदोलादुर्गसंसर्गगानाम् ।
शरणमशरणानामेक एवातुराणां कुशलपथनियुक्तश्चक्रपाणिर्नराणाम् ॥
अपराधसहस्रसंकुलं पतितं भीमभवार्णवोदरे ।
अगतिं शरणागतं हरे कृपया केवलमात्मसात्कुरु ॥

भवजलधिमगाधं दुस्तरं निस्तरेयं
कथमहमिति चेतो मा स्म गाः कातरत्वम्।
सरसिजदृशि देवे तावकी भक्तिरेका
नरकभिदि निषण्णा तारयिष्यत्यवश्यम् ॥ १० ॥

तृष्णातोये मदनपवनोद्धूतमोहोर्मिमाले
दारावर्ते सहजतनयग्राहसंघाकुले च।
संसाराख्ये महति जलधौ मज्जतां नस्त्रिधाम-
न्पादाम्भोजे वरद भवतो भक्तिनावं प्रसीद ॥ ११ ॥

पृथ्वीरेणुरणुः पयांसि कणिकाः फल्गुः स्फुलिङ्गो लघु-
स्तेजो निःश्वसनं मरुत्तनुतरं रन्ध्रं सुसूक्ष्मं नभः।
क्षुद्रा रुद्रपितामहप्रभृतयः कीटाः समस्ताः सुरा
दृष्टे यत्र स तावको विजयते भूमावधूतावधिः ॥ १२ ॥

आम्नायाभ्यसनान्यरण्यरुदितं कृच्छ्रव्रतान्यन्वहं
मेदश्छेदपदानि पूर्तविधयः सर्वे हुतं भस्मनि।
तीर्थानामवगाहनानि च गजस्नानं विना यत्पद-
द्वन्द्वाम्भोरुहसंस्तुतिं विजयते देवः स नारायणः ॥ १३ ॥

आनन्द गोविन्द मुकुन्द राम नारायणानन्त निरामयेति।
वक्तुं समर्थोऽपि न वक्ति कश्चिदहो जनानां व्यसनानि मोक्षे ॥ १४ ॥

क्षीरसागरतरङ्गशीकरासारतारकितचारुमूर्तये।
भोगिभोगशयनीयशायिने माधवाय मधुविद्विषे नमः ॥ १५ ॥

---

मा मे स्त्रीत्वं मा च मे स्यात्कुभावो मा मूर्खत्वं मा कुदेशेषु जन्म।
मिथ्यादृष्टिर्मा च मे स्यात्कदाचिज्जातौ जातौ विष्णुभक्तो भवेयम् ॥

कायेन वाचा मनसेन्द्रियैर्वा बुध्यात्मना वानुसृतिप्रभावात्।
करोमि यद्यत्सकलं परस्मै नारायणायैव समर्पयामि ॥

यत्कृतं यत्करिष्यामि तत्सर्वं न मया कृतम्।
त्वया कृतं तु फलभुक्त्वमेव मधुसूदन ॥

एषु श्लोकेषु 'भवजलधि–' इत्यादि प्रथमः श्लोकः सुभाषितावलीमध्ये वल्लभदेवेन क्षेमेन्द्रनाम्ना समुद्धृतः. अन्येऽपि केचिच्छ्लोकाः पुराणादिषु लभ्यन्ते. तस्मादत्र प्रक्षिप्ता एवेति ध्येयम्.

१. भवच्चरणारविन्दभक्तिरूपां नौकां देहि.

वात्सल्यादभयप्रदानसमयादार्तार्तिनिर्वापणा-
दौदार्यादघशोषणादगणितश्रेयःपदप्रापणात् ।
सेव्यः श्रीपतिरेव सर्वजगतामेकान्ततः साक्षिणः
प्रह्लादश्च विभीषणश्च करिराट् पाञ्चाल्यहल्या ध्रुवः ॥ १६ ॥

नाथे श्रीपुरुषोत्तमे त्रिजगतामेकाधिपे चेतसा
सेव्ये स्वस्य पदस्य दातरि परे नारायणे तिष्ठति ।
यं कंचित्पुरुषाधमं कतिपयग्रामेशमल्पार्थदं
सेवायै मृगयामहे नरमहो मूढा वराका वयम् ॥ १७ ॥

भो लोकाः शृणुत प्रसूतिमरणव्याधेश्चिकित्सामिमां
योगज्ञाः समुदाहरन्ति मुनयो यां याज्ञवल्क्यादयः ।
अन्तर्ज्योतिरमेयमेकममृतं कृष्णाख्यमापीयतां
यत्पीतं परमौषधं वितनुते निर्वाणमात्यन्तिकम् ॥ १८ ॥

बद्धेनाञ्जलिना नतेन शिरसा गात्रैः सरोमोद्गमैः
कण्ठेन स्वरगद्गदेन नयनेनोद्गीर्णबाष्पाम्बुना ।
नित्यं त्वच्चरणारविन्दयुगलध्यानामृतास्वादिना-
मस्माकं सरसीरुहाक्ष सततं संपद्यतां जीवितम् ॥ १९ ॥

तत्त्वं ब्रुवाणानि परं परस्मादहो क्षरन्तीव सुधां पदानि ।
आवर्तय प्राञ्जलिरस्मि जिह्वे नामानि नारायणगोचराणि ॥ २० ॥

इदं शरीरं परिणामपेशलं पतत्यवश्यं श्लथसंधि जर्जरम् ।
किमौषधैः क्लिश्यसि मूढ दुर्मते निरामयं कृष्णरसायनं पिब ॥ २१ ॥

श्रीमन्नाम प्रोच्य नारायणाख्यं येन प्राप्ता वाञ्छितं पापिनोऽपि ।
हा नः पूर्वं वाक्प्रवृत्ता न तस्मिंस्तेन प्राप्तं गर्भवासादिदुःखम् ॥ २२ ॥

मा द्राक्षं क्षीणपुण्यान्क्षणमपि भवतो भक्तिहीनान्पदाब्जे
मा श्रौषं श्रव्यबद्धं तव चरितमपास्यान्यदाख्यानजातम् ।

---

१. 'वात्सल्यात्' इत्यादिश्लोकमारभ्य समाप्तिपर्यन्तमेकोनविंशतिश्लोका मुद्रितपुस्तकेषु न सन्ति. वात्सल्यादिषु षट्सु प्रह्लादादयः षट् क्रमेण साक्षिणः.

मा स्प्राक्षं माधव त्वामपि भुवनपते चेतसापह्नुवानं
मा भूवं त्वत्सपर्याव्यतिकररहितो जन्मजन्मान्तरेऽपि ॥ २३ ॥
मदन परिहर स्थितिं मदीये मनसि मुकुन्दपदारविन्दधाम्नि ।
हरनयनकृशानुना कृशोऽसि स्मरसि न चक्रपराक्रमं मुरारेः ॥ २४ ॥
दारा वाराकरवरसुता[1] तेऽङ्गजोऽयं विरिञ्चिः
स्तोता वेदस्तव सुरगणो भृत्यवर्गः प्रसादः ।
मुक्तिर्मध्ये जगदविकलं तावके देवकी ते
माता मित्रं बलरिपुसुत[2]स्तत्त्वतोऽन्यन्न जाने ॥ २५ ॥
जिह्वे कीर्तय केशवं मुररिपुं चेतो भज श्रीधरं
पाणिद्वन्द्व समर्चयाच्युतकथां श्रोत्रद्वय त्वं शृणु ।
कृष्णं लोकय लोचनद्वय हरेर्गच्छाङ्घ्रियुग्मालयं
जिघ्र घ्राण मुकुन्दपादतुलसीं मूर्धन्नमाधोक्षजम् ॥ २६ ॥
यत्कृष्णप्रणिपातधूलिधवलं तद्वै शिरः स्याच्छुभं
ते नेत्रे तमसोज्झिते सुरुचिरे याभ्यां हरिर्दृश्यते ।
सा बुद्धिर्नियमैर्यमैश्च विमला या माधवध्यायिनी
सा जिह्वामृतवर्षिणी प्रतिपदं या स्तौति नारायणम् ॥ २७ ॥
भक्तद्वेषिभुजंगगारुडमणिस्त्रैलोक्यरक्षामणि-
र्गोपीलोचनचातकाम्बुदमणिः सौन्दर्यमुद्रामणिः ।
श्रीकान्तामणिरुक्मिणीघनकुचद्वन्द्वैकभूषामणिः
श्रेयो ध्येयशिखामणिर्दिशतु नो गोपालचूडामणिः ॥ २८ ॥
शत्रुच्छेदैकमन्त्रं सकलमुपनिषद्वाक्यसंपूज्यमन्त्रं
संसारोच्चारमन्त्रं समुदितमनसां सङ्गनिर्याणमन्त्रम् ।
सर्वैश्वर्यैकमन्त्रं व्यसनभुजगसंदष्टसंत्राणमन्त्रं
जिह्वे श्रीकृष्णमन्त्रं जप जप सततं जन्मसाफल्यमन्त्रम् ॥ २९ ॥
व्यामोहोद्दलनौषधं मुनिमनोवृत्तिप्रवृत्त्यौषधं
दैत्यानर्थकरौषधं त्रिजगतां संजीवनैकौषधम् ।

---

१. समुद्रसुता लक्ष्मीः. २. अर्जुनः.

भक्तार्तिप्रशमौषधं भवभयप्रध्वंसि दिव्यौषधं
श्रेयःप्राप्तिकरौषधं पिब मनः श्रीकृष्णनामौषधम् ॥ ३० ॥

आश्चर्यमेतद्धि मनुष्यलोके सुधां परित्यज्य विषं पिबन्ति ।
नामानि नारायणगोचराणि त्यक्त्वान्यवाचः कुहकाः[1] पठन्ति ॥ ३१ ॥

लाटीनेत्रपुटीपयोधरघटीरेवातटीदुष्कुटी-[2]
पाटीरद्रुमवर्णनेन कविभिर्मूढैर्दिनं नीयते ।
गोविन्देति जनार्दनेति जगतां नाथेति कृष्णेति च
व्याहारैः समयस्तदेकमनसां पुंसामतिक्रामति ॥ ३२ ॥

अयाच्यमक्रेयमयातयाममपाच्यमक्षय्यमदुर्भरं मे ।
अस्त्येव पाथेयमितः प्रयाणे श्रीकृष्णनामामृतभागधेयम् ॥ ३३ ॥

यस्य प्रियौ श्रुतधरौ कविलोकगीतौ
मित्रे द्विजन्मपरिवारशिवावभूताम् ।
तेनाम्बुजाक्षचरणाम्बुजषट्पदेन
राज्ञा कृता स्तुतिरियं कुलशेखरेण ॥ ३४ ॥

इति श्रीकुलशेखरनृपतिविरचिता मुकुन्दमाला समाप्ता ।

---

## पण्डितराजश्रीजगन्नाथविरचिता[3]
## सुधालहरी[4] ।

उल्लासः[5] फुल्लपङ्केरुहपटलपतन्मत्तपुष्पंधयानां
निस्तारः शोकदावानलविकलहृदां कोकसीमन्तिनीनाम् ।

---

१. मायाविनः. २. लाटदेशस्त्रीणां नेत्रपुटकुचकलशादिवर्णनेन रेवातटस्थितनिकुञ्जचन्दनादिद्रुमवर्णनेन च मूढानां कवीनां दिनान्यतिक्रामन्ति. लाटीत्युपलक्षणम्. ३. तैलङ्गवंशोद्भवः पेरमभट्टसूनुरनेकग्रन्थकर्ता पण्डितराजजगन्नाथो दिल्लीबादशाहस्य शाहजहानसूनोर्दाराशाहस्य सभायामासीत्, यतोऽनेन जगदाभरणकाव्ये दाराशाहस्यैव यशोवर्णनं कृतमस्ति. भामिनीविलाससमाप्तौ च 'दिल्लीवल्लभपाणिपल्लवतले नीतं नवीनं वयः' इत्युक्तम्. स च दाराशाहः १६५९ मितख्रिस्तसंवत्सरपर्यन्तमासीत्. ४. सूर्यस्तवरूपोऽयं ग्रन्थः. ५. रसगङ्गाधरे प्रथमानन उदाहृतोऽयं श्लोकः.

उत्पातस्तामसानामुपहतमहसां चक्षुषां पक्षपातः
संघातः कोऽपि धाम्नामयमुदयगिरिप्रान्ततः प्रादुरासीत् ॥ १ ॥
पद्मद्रोहोद्धुराणां धवलितहरितामैन्दवीनां द्युतीनां
दर्पं[1] द्राग्द्रावयन्तो विदलदरुणिमोद्रेकदेदीप्यमानाः ।
दूरादेवान्धकारान्धितधरणितलद्योतने बद्धदीक्षा-
स्ते दैन्यध्वंसदक्षा मुदमुदयदिनोद्वेल्लदुस्रा[2] दिशन्तु ॥ २ ॥
[3]त्रातामीवार्तलक्षाः प्रतिदिनविहितानेकगीर्वाणरक्षा
भक्तानां कल्पवृक्षाः स्फुरदनलगतस्वर्णभासां सदृक्षाः ।
लोकक्षेमात्तदीक्षा नलिनपरिषदां दत्तसौभाग्यलाक्षा[4]
दुर्वृत्तध्वंसदक्षा मम रविकिरणाः सन्त्वघानां विपक्षाः ॥ ३ ॥
प्रालेयानां करालाः कवलितजगतीमण्डलध्वान्तजालाः
स्नातस्वर्लोकपाला विदलदरुणिमक्षिप्तबालप्रवालाः ।
विश्लिष्यत्कोकबालाज्वरहरणभवत्कीर्तिजालैर्जटाला
व्योमव्याप्तौ विशालास्त्वयि दधतु शिवं भास्वतो भानुमालाः ॥ ४ ॥
निर्भिद्य[5] क्ष्मारुहाणामतिघनमुदरं येषु गोत्रां गतेषु
द्राघिष्ठस्वर्णदण्डभ्रमभृतमनसः संनिधित्सन्ति पादान् ।
यैः संभिन्ने दलाग्रप्रचलहिमकणे दाडिमीबीजबुद्ध्या
चञ्चूचाञ्चल्यमञ्चन्ति च शुकशिशवस्तेंऽशवः पान्तु भानोः ॥ ५ ॥
अह्नि[6] क्रीडोचितानां सरसिरुहलसन्मन्दिराणां प्रभाते
प्रोद्घाट्य द्राक्कपाटान्यथ कुमुदगृहान्मुद्रयन्तो विमुक्तान् ।

---

'उल्लास इति । रविवर्णनम् । उदयाचलप्रान्तभागादयं कोऽपि विलक्षणो धाम्नां तेजसां समूहः प्रादुर्भवति । तत्र रूपकं चतुर्धा । विकसितकमलसमूहमध्यावधिकनिःसरणयुतर-सपानजोन्मादवञ्भ्रमराणामुल्लासः । तादृशकोकीनां निस्तरो दुःखोद्धर्ता । नाशिततेजसां तामसानां तमःसमूहानां उत्पातो नाशकः । नेत्राणां पक्षपातः सहकारी ।' इति तत्र नागेशभट्टव्याख्यानम्.

१. आधिक्य. २. किरणाः. ३. त्रातममीवेन पापेन रोगेण वार्तास्तेषां लक्षं यैः. ४. सौभाग्यवत्यो हस्तपादादिषु लाक्षारसेन रञ्जनं कुर्वन्ति. ५. शुकशावकानां रविकर-णेषु सुवर्णदण्डभ्रान्तिः. किरणकान्त्यरुणीकृतेषु जलकणेषु च दाडिमीबीजभ्रान्तिर्भवति. ६. दिवसे कमलेषु, रात्रौ कुमुदेषु च लक्ष्मीर्निवसतीति प्रसिद्धिः.

सिञ्चन्तः किं च भूमीतलमखिलमपि क्षुण्णकाश्मीरनीरैः
पायासुः श्रीसपर्याविरचनपटवः पद्मबन्धोः करा नः ॥ ६ ॥
आलेपा हिङ्गुलानामिव[1] धरणिभुजामच्छसौधाग्रमौलि-
ष्वग्रेषु क्ष्मारुहाणामभिनवविदलत्पल्लवोल्लासलीलाः ।
प्रौढप्रालेयपुञ्जोपरि चितखदिराङ्गारभारा इवारा-
त्पारावारात्प्रयान्तो दिनकरकिरणा मङ्गलं नः कृषीरन्[2] ॥ ७ ॥
कीलालैः[3] कुङ्कुमानां निखिलमपि जगज्जालमेतन्निषिक्तं
मुक्ताश्चोन्मत्तभृङ्गा विदलितकमलक्रोडकारागृहेभ्यः ।
उत्सृष्टं गोसहस्रं[4] बहलकलकलः श्रूयते च द्विजानां[5]
भाग्यैर्वृन्दारकाणां हरिहयहरिता[6] सूयते पुत्ररत्नम् ॥ ८ ॥
या सूते सर्वभूतेष्वनुदिनमुदये चेतनाया विलासा-
न्यान्ती सायं निकायं जलनिधिजठरं संजरीहर्ति[7] सद्यः ।
अत्यर्थं वर्धयन्ती मणिगणसुषमासंपदं रत्नसानोः[8]
सा नो भानोः प्रभा नो नयनसरणितो दूरतो जातु यातु ॥ ९ ॥
नीहारैर्नीरजानां निबिडतमतमोराशिभिर्लोचनानां
श्रौतस्मार्तक्रियाणामपि खलु निशया नाशमालक्ष्य दूरात् ।
सद्यः सिन्धोः सकाशादधिकतरजवेनागता वासवाशा-
माशापाशानशेषानपहरतुतरां तीक्ष्णभानोः प्रभा नः ॥ १० ॥
शीते शोकं शशाङ्के कृशतमरुचितामाशुनाशं निशायां
धिक्कारं ध्वान्तवर्गे कुमुदपरिषदि प्रोद्गमं दीनतायाः ।
पाण्डित्यं[9] पुण्डरीकेष्वनुदिनमधिकां कान्तिमाशासु तन्व-
न्नन्वञ्चत्यन्वहं[10] द्यामुषसि करुणया विश्ववन्द्यो विवस्वान् ॥ ११ ॥
स्वापं स्वापाकुलानां गदमथ गदिनामन्धकारं त्रिलोक्याः
पापं पापाविलानां सपदि परिहरन्नागतो वासवाशाम् ।

---

१. रक्तवर्णो धातुविशेषः. २. कुर्वन्तु. ३. जलैः. ४. धेनुसहस्रं किरणसहस्रं च. ५. ब्राह्मणानां पक्षिणां च. ६. पूर्वदिशा. ७. हरति. ८. सुमेरोः. ९. विकासम्. १०. प्रतिदिनमाकाशमारोहति.

नित्यप्रस्थानलीलाकुपितकमलिनीनर्मनिर्माणकर्मा
विश्वार्तित्राणधर्मा गगनमणिरसौ पातु शर्मानिशं वः ॥ १२ ॥
अन्तर्नीरं नदीनामनुदिनमुदये बिम्बिता ये समन्ता-
द्गीर्वाणाद्रेरुदञ्चन्मणिगणजटिलां मेदिनीं दर्शयन्ति ।
विप्रप्रोत्क्षिप्तसंध्याञ्जलिजलकणिकाजालमाकाशमध्ये
[1]माणिक्यव्रातयन्तो मम मिहिरकरा मान्द्यमुन्मूलयन्तु ॥ १३ ॥
[2]प्रत्यग्रोढाः प्रगल्भा युवतिपरिषदः प्रोषित[3]प्राणनाथा
यस्मिन्नस्ताद्रिमौलेरुपरिमणिमयच्छत्रलीलां दधाने ।
सत्रासं सप्रसादं परिणतकरुणं लोचनान्युत्क्षिपन्ति
[4]स्थेमानं स प्रियाणां घटयतु भगवान्पद्मिनीवल्लभो वः ॥ १४ ॥
अन्तर्द्यावापृथिव्योरधिरजनि भृतानन्धकारानुदारा-
न्विद्राव्य द्राक्तदीयैरिव जगदरुणं शोणितैर्यद्बिभर्ति ।
सायं प्रातश्च संध्याञ्जलिमवनिसुराः संप्रयच्छन्ति यस्मै
तस्मै कस्मैचिदेतन्मम परमहसे देवतायै नमोऽस्तु ॥ १५ ॥
त्राणं त्रैविष्टपानां तरणमथ [5]पयस्तोमताम्यत्तनूनां
नद्यन्तानामतर्क्यं त्रिगुणमयतया यत्त्रयाणां तुरीयम् ।
तत्तादृक्तुन्दि[6]लायास्तरुणतरतमःसंततेरन्तकृत्त्वां
तेजस्त्रैलोक्यताम्रीकरणचतुरिम त्रायतां तीक्ष्णभानोः ॥ १६ ॥
गीर्वाणग्रामणीभिर्गगनतलगतैर्गीर्भिरुद्गीथ[7]गाभि-
र्गन्धर्वैश्चापि गीता गुणगणगरिमोद्गारिगाथासहस्रैः ।
गाहं गाहं गृहालीरगतिकगदिनां [8]गन्धयन्तो गदार्ति
ग्लानिग्रामं ग्रसन्तां ग्रहरुचिगुरवो गोपतेर्गोविलासाः ॥ १७ ॥
[9]जीवातुर्जाड्यजालाधिकजनितरुजां तप्तजाम्बूनदाभं
[10]जङ्घालं जाङ्घिकानां जलधिजठरतो जृम्भमाणं जगत्याम् ।

---

१. रक्तवर्णत्वान्माणिक्यसमूहसदृशं दर्शयन्तः. २. नवोढाः. ३. विरहिण्यः. ४. स्थैर्यम्. ५. 'तमस्तोम' इत्यपि पाठः. ६. पुष्टायाः. अतिमहत्या इति यावत्. ७. सामभेदः. ८. नाशयन्तः. ९. जीवनौषधम्. १०. जाङ्घिकानां वेगवतां मध्ये जङ्घालं वेगवत्.

जीवाधानं जनानां जनकमथ रुचो जीवं[1]जैवातृकादे-
　ज्योतिर्जाज्वल्यमानं जलजहितकृतो जायतां वो जयाय ॥ १८ ॥
प्रातर्निर्गत्य गोभिः सह रुचिविषये संचरन्त्योऽह्नि ताभिः
　साकं सायं निकायं प्रति पुनरपि याः संप्रयातुं त्वरन्ते ।
यासां दिव्यप्रभावस्त्रिजगदघवनश्रेणिदाहैकदावः
　क्षेमं तन्वन्तु ता वः शिवमयवपुषो वासरेशस्य गावः[2] ॥ १९ ॥
वृन्दैर्वृन्दारकाणां दनुतनुजनुषां रक्षसां च क्षपान्ते
　गन्धर्वाणां धुरीणैः प्रणतमहिवरैः किंनरै[3]र्यन्नरैश्च ।
विद्यां हृद्यां निजेभ्यो वितरदविरतं दीप्तिभिर्दीपयद्वा-
　[4]मद्यादाद्यामविद्यामिदमुदयगिरेरुद्यदर्कस्य बिम्बम् ॥ २० ॥
आ[5] पाथोजासनायुः क्षणलवघटिकाद्यात्मकं कालचक्रं
　प्राहुः पूर्वे पुराणागमविषयविदो यस्य लीलाविलासम् ।
भावानां [6]षड्विकारानथ खलु गतिभिर्यश्च नित्यं प्रसूते
　स प्रातः पौरुहूते परिलसति हरिन्मण्डले चण्डभानुः ॥ २१ ॥
अङ्गानि ब्राह्मणानामुषसि हिमभरासङ्गतो भङ्गुराणि
　व्यालक्ष्य द्राक्प्रपाता रिपुजनितरुषेवारुणा वासवाशाम् ।
घर्मध्वंसोद्धुराणामखिलमपि कुलं [7]जक्षतः शोभितक्ष्मा
　यक्ष्माणं मे हरन्तु त्वरितमघभिदो भानवश्चण्डभानोः ॥ २२ ॥
विश्रान्तिं ब्राह्मणानां सुखमतिशयितं कामिनां स्थायिलीला-
　मम्भोजानां प्रबोधं कुमुदपरिषदां यश्चिकीर्षन्दयार्द्रः ।
निर्यात्यन्तःसमुद्रं सकलमपि नृणां भारमाधाय वह्ना-
　[8]र्वह्नायाह्नामधीशः स भवतु भवतां भूयसे मङ्गलाय ॥ २३ ॥
द्रागाहत्य प्रभाते रजनिहिम[9]वतः कौमुदीः कौतुकेन
　प्रोद्यत्प्रौढानुकम्पाः पुनरपि खलु ये सायमुज्जीवयन्ति ।

---

१. बृहस्पतिचन्द्रादेः. २. किरणाः. ३. यद्बिम्बं नरैरपि प्रणतम्. ४. सनातनमज्ञानं भक्षयतु. ५. ब्रह्मण आयुःपर्यन्तम्. परार्धद्वयपर्यन्तमिति यावत्. ६. जायते, अस्ति, वर्धते, विपरिणमते, अपचीयते, नश्यतीति भावविकारषट्कम्. ७. नाशयन्तः. ८. शीघ्रम्. ९. चन्द्रस्य.

आरुण्ये पल्लवानामथ [1]गुरुचरणाः शक्रगोपावलीनां
ते युष्मद्भावलीनां दिनकरकिरणाः क्लान्तिमुन्मूलयन्तु ॥ २४ ॥
द्रागद्वैतं वितन्वंस्त्रिभुवनमभितः कौङ्कुमीनां द्युतीनां
न्यक्कुर्वन्मान्द्यमुद्रामथ रजनिरुजां कोकसीमन्तिनीनाम् ।
तन्द्रान्धानान्ध्यसिन्धोरिह विततरैरुद्दधानं कराग्रैः
स्वान्तध्वान्तं धुनीतामुदयगिरिशिरश्चुम्बि मार्तण्डबिम्बम् ॥ २५ ॥
[2]शुद्धं ब्रह्मालवालं प्रकृति[3]शबलितं यस्य मूलं करास्त-
द्राघिष्टस्वर्णशाखा विकसदरुणिमा पल्लवानां विलासः ।
नीलं व्योमालिमाला सुरसफलभरो धर्मकामार्थमोक्षाः
स श्रीमान्वाञ्छितार्थं वितरतु सततं सूर्यकल्पद्रुमो वः ॥ २६ ॥
नीहारं निम्नगाभ्यो निखिलनयनतो नीरजेभ्यश्च निद्रां
नीडेभ्यो नीडजानां निकरमुषसि ये नित्यमुद्वासयन्ति ।
सायं तेष्वेव तेषां पुनरपि घृणया कल्पयन्ते च वासं
ते वः सन्तु प्रयासं घृणिघनघृणयो हन्तुमाबद्धकक्षाः ॥ २७ ॥
संहृत्य द्राग्बहिःस्थं तिमिरकुलमथाभ्यन्तरं हर्तुकामा
रन्ध्रालीभिर्गृहाणामुदरमनुदिनं ये विशङ्कं विशन्ति ।
भानोस्तेऽमी हृषीकाण्यखिलतनुभृतां हर्षयन्तो हितेहा
हृद्रोगं संहरन्तां हिममहिमहृतो हेमहृद्याः करा नः ॥ २८ ॥
ब्रह्माण्डं मण्डयन्तो वियति वलयिनो मण्डलैरण्डजानां
पाखण्डान्दण्डयन्तो दनुतनुजनुषां शोभिताखण्डलाशाः ।
ये खण्डान्पौण्डरीकान्विदलयितुमथोद्दण्डपाण्डित्यभाज-
स्ते चण्डांशोरचण्डास्त्वरितमिह कराः पाण्डुतां खण्डयन्तु ॥ २९ ॥
ऊर्ध्वं पापावलिभ्यः स्थित इति जगदे यस्य वेदैरुदाख्या
निन्युः केऽप्यासनार्थं खलु सहचरतां नेत्रयोः पुण्डरीकम् ।

---

१. उपदेष्टारः. अरुणत्वसंपादका इति यावत्. २. शुद्धं ब्रह्म यस्यालवालम्. ३. शबलं ब्रह्म यस्य मूलम्. ४. नीलवर्ण आकाश एव भ्रमरपङ्क्तिः. ५. पक्षिणाम्. ६. सूर्यस्य निबिडाः किरणाः. ७. इन्द्रियाणि. ८. पक्षिणाम्. ९. रोगम्. १०. अन्तिमश्लोकस्त्वस्फुट एव.

ओष्ठावृक्साम यस्य द्रुतकनकनिभश्मश्रुकेशाखिलाङ्गः
सोऽयं सर्वान्तरात्मा तव दिशतुतरां वासरेशः शिवानि ॥ ३० ॥

इति पण्डितराजश्रीजगन्नाथविरचिता सुधालहरी समाप्ता ।

---

## महाकवि[1]श्रीशंभुविरचितो राजेन्द्र[2]कर्णपूरः ।

बद्धस्पर्धः क्षितिधरसुताभ्रूलतावक्रतायं
भूयाद्भूत्यै तव हरशिरःशेखरो रोहिणीशः ।
यं निष्पीड्य स्तनमुखनखोल्लेखरेखासु देव्याः
संभोगान्ते वितरति सुधास्यन्दमर्धेन्दुमौलिः ॥ १ ॥

अव्यात्स वस्ताण्डवविभ्रमेण मौलौ विलीना हरिणाङ्कलेखा ।
सा यस्य वामे कुचमण्डलाग्रे कर्पूरपत्राङ्कुरटङ्क[3]मेति ॥ २ ॥

प्रेमाणं विनिमीलय मल्लिकलिकाकर्णावतंसे रसं
मुक्त्वा मौक्तिककुण्डले कुरुत भोः शंभोर्गिरः कर्णयोः ।
युष्माकं रतिकान्तकार्मुकलताझंकारकान्ते रुते
सोत्कण्ठं कल[4]कण्ठकण्ठकुहरोद्भूतेऽपि मा भून्मनः ॥ ३ ॥

व्याप्तव्योमलते मृगाङ्कधवले निर्धौतदिङ्मण्डले
देव त्वद्यशसि प्रशान्ततमसि प्रौढे जगत्प्रेयसि ।
कैलासन्ति महीभृतः फणभृतः शेषन्ति पाथोधयः
क्षीरोदन्ति सुरद्विप[5]न्ति करिणो हंसन्ति पुंस्कोकिलाः ॥ ४ ॥

---

१. अयं शंभुमहाकविः कश्मीरदेशे श्रीहर्षदेवराज्यसमये समुत्पन्नः. अस्मिन्नेव राजेन्द्रकर्णपूर एकोनविंशे श्लोके श्रीहर्षदेवस्य, द्विचत्वारिंशे श्लोके च कश्मीरदेशस्य नाम गृहीतमस्ति. श्रीहर्षदेवस्य राज्यसमयस्तु १०८८ मितात्खिस्तसंवत्सरादारभ्य ११०० खिस्तसंवत्सरपर्यन्तमासीत्. स एव समयोऽस्य ग्रन्थस्य. श्रीकण्ठचरितस्य पञ्चविंशे सर्गेऽपि शंभुमहाकवेर्नाम गृहीतमस्ति. अस्यैकमेव पुस्तकमस्माभिः कश्मीरदेशे कथंचिदधिगतम्. सुभाषितावलावत्रत्या बहवः श्लोकाः समुद्धृताः सन्ति. २. कश्मीराधिपतेः श्रीहर्षदेवस्य स्तुतिरूपोऽयं ग्रन्थः. ३. शोभातिशयम्. ४. कोकिलः. ५. ऐरावतः शुक्लवर्णोऽस्ति.

कैलासाचलसानुसीमनि मेरुत्सीमन्तिनीभि[1]स्तथा
गीतास्ते कलकण्ठकण्ठनिनदश्रव्यैः स्वरैः कीर्तयः ।
अप्युत्तंसविलासवानपि रते रत्नप्रदीपो यथा
चूडाचन्द्रकलाङ्कुरः पुरजिता[2] सद्यः प्रसादीकृतः ॥ ५ ॥
चौडी[3]चूडाभरणहरणः कीर्णकर्णावतंसः
कर्णाटीनां मुषितमुरली[4]केरलीहारलीलः ।
कुर्वन्नुर्वीतिलक तिलकोत्सृष्ट[5]लाटीललाटं
जीयादेकस्तव नवयशःस्वर्णशाणः कृपाणः ॥ ६ ॥
शान्त्यै दर्पवतां जयाय जगतां संपत्तये याचतां
संमानाय सतां हिताय महतां तापाय पृथ्वीभृताम् ।
सोल्लासेन सकौतुकेन शमितध्यानेन दूरीकृत-
स्वाध्यायेन समाप्तसर्वतपसा त्वं वेधसा निर्मितः ॥ ७ ॥
..........................................
.......................................... ।
किं[6] वान्यद्वसुधापुरंदर पुरस्त्वत्पौरुषस्य क्वचि-
न्नार्हत्यस्खलितक्रमोऽपि गगने त्रैविक्रमो विक्रमः ॥ ८ ॥
देवाकर्णय नाकिनां पुरि नृणां लोके पुरे भोगिनां[7]-
मासन्केचन सन्ति केचन तथा स्थास्यन्ति ये केचन ।
तन्मध्ये न बभूव नास्ति भविता तादृङ् न नीतौ नतौ
कान्तौ काव्यरतौ मतौ रिपुहतौ कीर्तौ च यस्ते समः ॥ ९ ॥
आनन्दं मुचुकुन्द[8]कन्दलि[9] भज स्वस्थासि वासन्तिके
कल्याणं तव मल्लिके कुशलिनी जातासि हे मालति ।
अद्यैतद्यशसि श्रुतिप्रणयितां याते न कुर्वन्ति वः
कर्णोत्तंसरसान्नवीनकलिकाभङ्गं कुरङ्गीदृशः ॥ १० ॥

१. देवाङ्गनाभिः. २. शिवेन. ३. चोलदेशोद्भवा नारी. ४. मुरलकेरलौ च देशविशेषौ. ५. तिलकरहितं लाटदेशाङ्गनाललाटम्. ६. आदर्शपुस्तकेऽस्य श्लोकस्य पूर्वार्धं त्रुटितमस्ति. ७. सर्पाणाम्. ८. पुष्पवृक्षविशेषः. ९. कन्दलं नवाङ्कुरम्. अल्पत्वविवक्षायां स्त्रीलिङ्गम्.

चैत्रं मा स्मर विस्मर स्मर रतिं किं सायकैर्मारकै-
गोंधां[1] मुग्ध मुधा बधान जहिहि ज्याबन्धधीरं धनुः ।
देवेऽस्मिन्हि सकृत्स्मृतेऽपि न मतिर्नैव स्मृतिर्न स्थिति-
र्नासक्तिर्न धृतिर्न निर्वृतिरपि क्वाप्यस्ति वामभ्रुवाम् ॥ ११ ॥

जहाति नगरीं गलत्कनककङ्कणः कौङ्कणो
वनं विशति विह्वलः स्खलितकुन्तलः कौन्तलः[2] ।
किमन्यदुदितक्रुधि त्वयि मृगेन्द्रभीमारवं
तटं विशति मारवं च्युतरमालवो[3] मालवः ॥ १२ ॥

तां संक्रन्दनमन्दिरे सुरवधूकर्णामृतस्यन्दिनीं
त्वत्सौन्दर्यकथां निशम्य गदितामानन्दिभिर्वन्दिभिः ।
चापं मुञ्चति बाणमुज्झति शुचं धत्ते रतिं नेक्षते
चित्रं चैत्रमुपेक्षते परिणमन्मन्दव्यथो मन्मथः ॥ १३ ॥

कीरी[4]हारलतासु केरलवधूधम्मिल्लमालासु या
चोलीदन्त[5]चतुष्किकासु मुरलीलीलास्मितेषु द्युतिः ।
अग्रे त्वद्यशसां सुधाकरकरन्यक्कारपारंगमा-
मप्येतामसितामहो सुकवयो विन्दन्ति निन्दन्ति च ॥ १४ ॥

विषमेषु[6]विगलितरसाश्चपलतरंगालिभिर्जडैः क्षुभिताः ।
तिमिरचितवसतयस्तव रिपुसुदृशो निम्नगा जाताः ॥ १५ ॥

अङ्के केरलसुन्दरीकचभरश्यामं कलङ्कं वह-
न्मिथ्यारोहति पूर्वपर्वतशिखां मुग्धस्तमी[7]बान्धवः ।
यत्तापिच्छतरुच्छदच्छवि तमो लुम्पन्ति लिम्पन्ति च
प्रालेयैरिव पारदैरिव जगत्कोशं भवत्कीर्तयः ॥ १६ ॥

---

१. धनुर्गुणघातवारणाय प्रकोष्ठबद्धा चर्मपट्टी. २. कुन्तलनामकदेशस्य राजा. ३. लक्ष्मीलेशरहितः. ४. कीरदेशोद्भवा स्त्री. ५. मुख्यं दन्तचतुष्टयम्. ६. (रिपुस्त्रीपक्षे) विषमेषुः कामः, रसो रागः, जडैर्मूर्खैर्गालिभिरवाच्यैः क्षुभिताः, तिमिरेण व्याप्ता वसतिर्यासाम्, (नदीपक्षे) विषमेषु नतोन्नतप्रदेशेषु, रसो जलम्, चपलतरङ्गपङ्क्तिभिर्जलैः क्षोभं नीताः, तिमयो मत्स्यास्तै रचिता स्थितिर्यासु. ७. चन्द्रः.

तस्थौ कम्पतरङ्गितस्तनतटं बाष्पाम्बुधौताधरं
शोकाक्रान्तकपोलकीलितकरं द्यां मुञ्जराजे गते ।
संजाते त्वयि हारिहारवलयक्वाणं क्वणत्कङ्कणं
चञ्चत्काञ्चनकाञ्चि सा भगवती नर्नर्ति वाग्देवता ॥ १७ ॥
आलेख्यं चिरमुल्लिलेख विजने सोल्लेखया रेखया
संकल्पानकरोद्विकल्पबहुलाकल्पाननल्पानपि ।
अद्राक्षीदपरप्रजापतिमतं चक्रे च तीव्रव्रतं
त्वन्निर्माणविधौ कियन्न विदधे बद्धावधानो विधिः ॥ १८ ॥
शेष क्लेशमशेषमुत्सृज भज त्वं कूर्म कर्म स्वकं
स्वैरं खेलत सिन्धुसैकतलताकुञ्जेषु दिक्कुञ्जराः ।
अप्येतां सकुलाचलां सनगरां साम्भोनिधिं सापगां
सद्वीपां च भुवं बिभर्ति हि भुजः श्रीहर्षपृथ्वीभुजः ॥ १९ ॥
हेरम्ब त्यज कर्णतालनिनदं चूडापगे गर्ज मा
मा मा काञ्चनकिङ्किणीकलकलं कण्ठे ककुद्मन्कृथाः ।
प्रक्रान्तासु सुरैः पुरः पुररिपोर्युष्मद्यशोगीतिषु
व्यग्रस्येति परिस्फुरन्ति वचनान्यानन्दिनो नन्दिनः ॥ २० ॥
अकङ्कणममेखलागुणमहारमस्ताङ्गदं
व्रजन्ति चतुरैः पदैर्मरुमरातिवामभ्रुवः ।
करोत्यसिलतां करे यदसिगर्वमुर्वीभुजो
भुजस्य परिपन्थिनामयमदक्षिणे दक्षिणे ॥ २१ ॥
राकाकान्तकलाङ्कुरं कुरु चिरं चण्डीश चूडान्तरे
कच्छं गच्छ पुराणकच्छप परं गम्भीरमम्भोनिधेः ।
ध्यानं मुञ्च विरञ्च किं च पयसा सिञ्चासनाम्भोरुहं
येनायं परितः प्रभो प्रसरति प्रौढः प्रतापानलः ॥ २२ ॥

---

१. अतीव गुणिवत्सलो वाक्पतिराजदेवापरनामा श्रीमुञ्जराजः श्रीहर्षदेवात्किंचिदेव पूर्वमासीत्. ख्रिस्तसंवत्सरस्य ९९४ मिते काले श्रीमुञ्जमहीपालो राज्यं कुर्वन्नासीदित्यमितगतिप्रणीतसुभाषितरत्नसंदोहनामकग्रन्थसमाप्तिश्लोकाज्ज्ञायते. २. इदमुत्तरार्धमस्फुटमस्ति.

कंदर्पे नलकूबरे कुमुदिनीकान्तेऽप्यवज्ञावतां
त्वत्सौन्दर्यकथासु तासु मरुतां वृत्तासु कौतूहलात्।
प्राप्ता तानवमुर्वशी रतिरतिक्लान्ता हृता रोहिणी
जाता किं च खरस्मरज्वरभरारम्भापि रम्भातनुः ॥ २३ ॥

सोल्लासा अपि सोद्यमा अपि घनोत्कण्ठा अपि क्वापि नो
यान्ति श्यामनिशान्तरेऽपि रमणोपान्तं कुरङ्गीदृशः।
सद्यस्त्वद्यशसा हि कुञ्जररदच्छेदच्छविच्छादिना
नीतं कान्तपुरंध्रिकुन्तलभरश्यामं विरामं तमः ॥ २४ ॥

न क्वाप्यौर्वज्वलनमहसा यस्य चक्राथ पाथः
शोषं तस्मिन्भजति जलधौ त्वत्प्रतापानलेन।
शङ्के पङ्के पतति यतते बालशैवालमूले
कूले लोलः किमपि कुरुते कर्म वैकुण्ठकूर्मः ॥ २५ ॥

उल्लेखं निजमीक्षते भणितिषु प्रौढिं परां शिक्षते
संधत्ते पदसंपदः परिचयं धत्ते ध्वनेरध्वनि।
वैचित्र्यं वितनोति वाचकविधौ वाचस्पतेरन्तिके
देव त्वद्गुणवर्णनाय कुरुते किं किं न वाग्देवता ॥ २६ ॥

शान्तध्वान्तकलङ्क शंकरशिखालंकार तारापते
राकाकान्त सविभ्रमं भ्रम सदा निःशङ्कमङ्के दिवः।
अद्यैतद्यशसैव सप्तसु कृताँलोकेषु लोकेषु हि
स्वर्भानोर्भवितासि नासि नभसि च्छिन्नाकृतेर्गोचरः ॥ २७ ॥

त्वय्युत्पन्ने गुणवति सतां नाभिरामः स राम-
स्त्यागव्यग्रे भवति भवति म्लानवर्णः स कर्णः।
ब्रूमः किं वा बहु ननु धनुर्वेदविद्याविदस्ते
सङ्ग्रामोर्वीपुरहर पुरः स्यादपार्थः स पार्थः ॥ २८ ॥

---

१. कृतप्रकाशेषु. २. 'असि' इति विभक्तिप्रतिरूपकमव्ययम्. त्वमित्यर्थः. ३. युद्धभूमौ रुद्रतुल्य. ४. निष्फलः. ५. अर्जुनः.

कान्तिं कल्पय तान्तिमल्पय सखि स्वल्पापि नैवास्ति ते
मुक्ताशुक्तिषु वारिराशिरमणि श्रीताम्रपर्णि क्षतिः।
अस्यालोक्य कुरङ्गकेतनकलालावण्यचौरं यशो
वर्तन्ते हि विमुक्तमौक्तिकलतोत्कण्ठाः कुरङ्गीदृशः ॥ २९ ॥

निद्रा न द्रविणाधिपस्य भजते शङ्कां स लङ्कापति-
र्व्योम्नि व्याकुलतामलं कमलिनीकान्तस्य[1] धत्ते वपुः।
किं वान्यत्तव देव वेल्लति[2] यदि भ्रूवल्लरीपल्लवः
सोऽपि क्षामकपोलकीलितकरः संक्रन्दनः क्रन्दति ॥ ३० ॥

अस्तं याति ययातिधाम विगतं दुष्यन्तवार्ताशतैः
शान्तं शंतनुकीर्तिभिर्लघु रघोर्लोकेषु जातं यशः।
किं चान्यत्त्वयि मेदिनीकुमुदिनीराकाशशाङ्कोदये
जाते हन्त तथा कथा अपि विभो रामे विरामं गताः ॥ ३१ ॥

लोलन्मौक्तिकवल्लि वेल्लदलकं वाचालकाञ्चीगुणं
चञ्चत्काञ्चनकङ्कणं च गिरिजा जातोत्सवा नृत्यतु।
त्वत्कीर्तिश्रवणोन्मुखेन विलसत्कल्लोलकोलाहला
यन्मुक्ता मुकुटान्मृगाङ्कशकलोत्तंसेन मन्दाकिनी ॥ ३२ ॥

कर्पूरैरिव पारदैरिव सुधास्यन्दैरिवाप्लाविते
जाते हन्त दिवापि देव ककुभां गर्भे भवत्कीर्तिभिः।
धृत्वाङ्गे कवचं निबध्य शरधिं[3] कृत्वा पुरो माधवं[4]
कामः कैरवबान्धवोदयधिया धुन्वन्धनुर्धावति ॥ ३३ ॥

अधिकंसमाप्तसमरः[5] प्रथितो भुवनेषु गोपनरसोत्कः।
भाति सदानवविजयं कुर्वन्कृष्णस्तवायमसिः ॥ ३४ ॥

---

१. सूर्यस्य. २. चलति. ३. तूणीरम्. ४. वसन्तम्. ५. (राजपक्षे) तवायमसिः खड्गः कृष्णः कृष्णवर्णो भाति. खड्गविशेषणानि—अत्यन्तं समाप्तयुद्धः शत्रूणामभावात्, गोपने रक्षणे यो रसस्तस्मिन्नुत्कण्ठितः, सर्वदा नवीनं विजयं कुर्वन्; (कृष्णपक्षे) अधिकंसं कंसविषये प्राप्तयुद्धः, गोपालरूपनरेषु पुरुषेषूत्कण्ठितः, स प्रसिद्धः, दानवानां विजयं कुर्वन्.

राकाकान्तकलाङ्कुराङ्कितजरत्कीशो निशीथक्षणे
गायन्तीषु सुराङ्गनासु भवतः कैलासकुञ्जे यशः ।
निष्पीड्य प्रियमौलिचन्द्रकलिकां कंदर्पकेलिक्लम-
स्वापं दूरयितुं दृशोर्गिरिजया दत्ताः सुधाबिन्दवः ॥ ३५ ॥
किं तान्तिः किमनिर्वृतिः किमधृतिर्वाग्देवि मुञ्जे गते
किं शून्यासि किमाकुलासि किमिति क्लान्तासि कोऽयं क्रमः ।
एतं विद्धि तमेव सास्य हि मतिः सा विश्रुतिः सा द्युतिः
स त्यागः स नयः स सूक्तिषु रसस्ताः संमताः संपदः ॥ ३६ ॥
कस्मादम्ब विलम्बसे कुरु कृपां केनापि रूपेण मे
जिह्वाग्रे वस संनिधेहि हृदये वाग्देवि तुभ्यं नमः ।
यन्मे साहसिकस्य भूपचरितव्यावर्णने सादरं
सप्रेमप्रसरं सकौतुकरसं सोल्लासमास्ते मनः ॥ ३७ ॥
नाके मुग्धमधुव्रतप्रणयिनीहंकारहारिस्वनै-
श्चारु त्वच्चरितं यदेव चतुरैरुच्चारितं चारणैः ।
कान्तं मौक्तिकदामनद्धचिकुरस्वःसुन्दरीणां[1] पुरः
प्राप्तो देव तदैव सूत्रितशरासारः ससारः स्मरः ॥ ३८ ॥
श्रीखण्डद्रवनिर्झरन्ति हृदये पीयूषकल्लोलिनी-
निःष्यन्दन्ति तनौ रसायनरसस्यन्दन्ति कर्णान्तिके ।
नासीर[2]प्रसरन्ति दिक्परिसरे भूमण्डले मौक्तिक-
प्रस्तारन्ति सुधाकरन्ति गगनोत्सङ्गे भवत्कीर्तयः ॥ ३९ ॥
किं बालेन मृणालतन्तुमलिनच्छायेन खण्डेन्दुना
निःशङ्कोऽद्य वृषाङ्क शेखरपदे राकाशशाङ्कं कुरु ।
देवस्यास्य हि केतकोदरदलच्छायैर्यशोभिर्निशि
व्योम्नः सीम्नि च मण्डले च ककुभां व्यस्तं समस्तं तमः ॥ ४० ॥
नो चैत्रः सहकारकुड्मलकुलैः क्लृप्तं न तत्कार्मुकं
नामी क्रूरशिलीमुखाः शितमुखा नो कोकिलापञ्चमः[3] ।

---

१. 'मौक्तिकदाम–' इत्यादिविशेषणमनुपयुक्तमिव भाति. २. सेनामुखं नासीरमित्युच्यते. ३. स्वरविशेषः.

नैवोद्दामकरः शशी न मकरः केतुस्थितो नो रति
स्तत्रापि त्वमहो समस्तरमणीमानव्यघो मन्मथः ॥ ४१ ॥
तन्मूर्तं भुवने मुहूर्तममृतं मन्ये भृशं वासरं
सारं वेद्मि तदेव सैव च गुणैरायामिनी यामिनी ।
श्रीवासो यशसां पदं सुमनसामप्यास्पदं संपदां
यत्रागच्छति गोचरं नयनयोः काश्मीरमीनध्वजः ॥ ४२ ॥
संजाते जलदात्ययेऽपि फणभृत्पर्यङ्कशय्यातलं
मा मा मुञ्च मुकुन्द कान्तकमलादोःकन्दलालिङ्गितः ।
जागर्ति स्थितये सतां विरतये येनासतामप्ययं
संनद्धो गुणिमौलिमण्डनमणिर्भूमण्डलाखण्डलः ॥ ४३ ॥
श्लाघा राघव लाघवं तव गता दुष्यन्त विंध्वं तव
म्लानिं याति यशो गता तव तथा पार्थ प्रथापार्थताम् ।
जातेऽस्मिन्गुणिबान्धवे नरपतिश्यामाधवे क्ष्माधवे
कस्याप्यत्र न कर्ण कर्णपदवीं याता भवत्कीर्तयः ॥ ४४ ॥
ज्ञाता भूरियमम्बुराशिरसना किं नाम नालोचितं
तत्राखण्डलमण्डले मणिपुरे वार्तापि वृत्तैव नः ।
कान्तौ कीर्तिरतौ नये परिचये काव्यक्रमप्रक्रमे
यावत्क्वापि कदापि कोऽपि भवतः स्पर्धापरो नापरः ॥ ४५ ॥
एवं त्वामहमर्थये विरमितस्वाध्यायकौतूहलो
ब्रह्माण्डोदरमम्बुजासन पुनर्यत्नेन विस्तारय ।
देवस्यास्य यतो न माति विततं राकेन्दुरोचिर्लता-
लीलोन्मीलितकैरवोदरदलद्धौतावदातं यशः ॥ ४६ ॥
उर्वीं मौर्वीकिणभृति भवद्दोष्णि बिभ्रत्यशेषां
शान्तक्लान्तिः किमपि कुरुते नर्मणा कर्म कूर्मः ।
कृत्वा वेलापुलिनलवलीपल्लवग्रासगोष्ठीं
दिङ्मातङ्गाः सममथ सरिन्नाथपाथः पिबन्ति ॥ ४७ ॥

१. संपूर्णम्. २. महीपतिचन्द्रे. ३. हे ब्रह्मदेव.

किं मौनं ननु मेनके किमु शुचं धत्से शचि क्षामता
　केयं वाचि घृताचि साचि किमिदं रम्भे मुखाम्भोरुहम्।
याते त्वच्चरणामृते श्रुतिपथं गीर्वाणवामभ्रुवा-
　मेवं देव खरसरज्वरजुषामुक्ताः सखीभिर्गिरः॥ ४८॥

किं राकेन्दुकरच्छटाभिरुदितं किं मौक्तिकैरुद्गतं
　किं मल्लीमुकुलैः स्मितं विकसितं किं मालतीकुड्मलैः।
किं रूढं रमणीविलासहसितैः किं तत्र कीर्णं सुधा-
　स्यन्दैर्यत्र जगत्त्रयैकतिलक भ्रान्तं भवत्कीर्तिभिः॥ ४९॥

नोद्दामानि दिशां मुखानि न घनाभोगा नभोमण्डली
　नैवोत्तालतलं रसातलमियं पृथ्वी न पृथ्वी पुनः।
एवं देव कथं नु कुञ्जररदच्छेदावदातास्तव
　स्वैरं यान्ति च मान्ति च श्रुतिसुधाधारामुचः कीर्तयः॥ ५०॥

यो वैरिष्वनलो नलो वसुमतीदीपो दिलीपोऽथ यो
　यो मानेन पृथुः पृथुर्जगति यो निर्लाघवो राघवः।
यः कीर्तौ भरतो रतो नृपगुणैर्यः शंतनुः शंतनुः
　संजाते त्वयि कस्य न क्षितिपते सर्वेऽपि ते विस्मृताः॥ ५१॥

अपारपुलिनस्थलीभुवि हिमालये मालये
　निकामविकटोन्नते दुरधिरोहणे रोहणे।
महत्यमरभूधरे गहनकंदरे मन्दरे
　भ्रमन्ति न पतन्त्यहो परिणता भवत्कीर्तयः॥ ५२॥

तात्पर्यं कमलासने विरचितं गौरीहितैः पालिता
　त्रैलोक्याद्भुतकृत्सदानवजये दोर्विक्रमो दर्शितः।

---

१. तिर्यक्. २. कल्याणशरीरः. ३. लक्ष्मीनिवासभूते. ४ अन्यस्तु परिणतो वृद्धश्चेत्पर्वतारोहणावसरे पतत्येव. ५. कमलाया लक्ष्म्या असने क्षेपणे. याचकेभ्यो दान इति यावत्; अथ च कमलरूपे विष्टरे. ब्रह्मणः पद्मासनत्वात्. ६. गौः पृथ्वी, ईहितैरभीष्टैः; (पक्षे) गौरी पार्वती, हितैः प्रेमभिः. ७. सर्वदा नवीने जये; (पक्षे) स प्रसिद्धः, दानवानां जये.

एकेनैव कृतं तु देव भवता तत्रापि ते न स्मयो[1]
यद्वेधाश्च पुरान्तकश्च[2] कमलाकान्तश्च देवोऽकरोत् ॥ ५३ ॥
औदार्यं सधने नयो गुणिजने लज्जा कुलस्त्रीजने
सत्काव्यं वदने मदो द्विरदने पुंस्कोकिलः कानने ।
रोलम्बः कमले नखाङ्करचना कान्ताकपोलस्थले
तन्वी तल्पतले भवानपि विभो भूमण्डले मण्डनम् ॥ ५४ ॥
जाता तामरसोदरे[3] भगवतो धातुः कृतार्था स्थिति-
र्युक्तं यद्यचिरात्करोति जलधौ संस्थां रमावल्लभः ।
सर्वत्रैव विभो तव प्रसरति प्रौढे प्रतापानले
धत्ते सोऽपि पिनाकिनः सफलतां मौलीन्दुरेखाङ्कुरः ॥ ५५ ॥
कण्ठान्तःक्वणितं दिवाकरकरक्लान्त्या रजोविप्लवै-
स्तन्नेत्राञ्चलकुञ्चनं शितकुशप्रान्तक्षतैः सीत्कृतिः ।
श्वासोर्मिप्रभवो वनेचरभिया त्वद्वैरिवामभ्रुवा-
मेवं देव मरोस्तटेऽपि सुरत[4]क्रीडानुरूपः क्रमः ॥ ५६ ॥
संदिष्टं वसुधासुधाकर शचीकान्तेन मुञ्चोद्यमं
देव त्वं प्रबलप्रतापदहनोद्रेकाय बद्धा[5]ञ्जलिः ।
एते मानुभवन्तु नाकतरुणीकर्णावतंसोचिताः
क्लान्ति नन्दनकन्दलीषु कलितव्यापल्लवाः पल्लवाः ॥ ५७ ॥
शक्तिं मानसतीव्रतापदहने धत्ते गलत्संयमा
कामाशां प्रकटीकरोति न सतां सर्वत्र[6]पापासनात् ।
प्रेम प्रौढमनारतं वितनुते वृद्धेति शुद्धेति च
प्रख्यातापि महीमनोभव भवत्कीर्तिर्विचित्राः स्त्रियः ॥ ५८ ॥
रूपं यन्मदने द्युतिः शशिनि या गम्भीरता याम्बुधौ
यो मेरौ गरिमास्ति या कमलिनीकान्ते प्रतापोन्नतिः ।

---

१. गर्वः. २. शिवः. ३. कमलमध्ये. ४. सुरतेऽपि कण्ठकूजितं नेत्रकुञ्चनं सीत्कारः श्वासाधिक्यं च भवत्येव. ५. क्रियाविशेषणम्. ६. सर्वस्यास्त्रपाया अपासना-दूरीकरणात्; (पक्षे) सर्वत्र पापस्यासनात्.

यो लक्ष्मीरमणेऽपि विक्रमगुणस्तत्सर्वमेकत्र चे-
द्द्रष्टुं वाञ्छसि दृश्यतामयमये देवस्त्रिलोकीमणिः ॥ ५९ ॥
स ख्यातो जगति त्रिविक्रम इति त्वद्विक्रमा भूरय-
स्तेनैको निहतो बलिर्बलिशतध्वंसी भुजस्तावकः ।
तं वैकुण्ठमवैति को न जगतीं जेतुं त्वकुण्ठो भवा-
नस्त्येवं महदन्तरं तव तथा देवस्य दैत्यद्रुहः ॥ ६० ॥
चक्रे यत्र मदोर्जितार्जुनभुजस्तम्भाहतिं भार्गवो
यत्रासीद्दशकण्ठकण्ठविपिनच्छेदी रघूणां पतिः ।
पार्थेनापि जितः स यत्र गिरिजाकान्तः किराताकृति-
र्गीतः पल्लविताद्भुतैस्तव न कैस्तत्रापि दोर्विक्रमः ॥ ६१ ॥
राकेन्दोरुदयभ्रमेण मुखतो मुक्त्वा मृणालाङ्कुरं
तान्तिं तत्र वहन्ति हन्त विलसद्भृङ्गा रथाङ्गाङ्गनाः ।
किं चोदञ्चितचञ्चुरञ्चति शरच्चन्द्रप्रभा[भ्रान्तितो
हर्षं हन्त] चकोरपङ्क्तिरमलं यत्रोदितं ते यशः ॥ ६२ ॥
प्रालेयैः स्नपयन्ति कल्पलतिकाः सेकाननेकानथ
श्रीखण्डाम्बुगलज्जलैरविरलैस्तन्वन्ति संतानके ।
सान्द्रैश्चन्द्रमणिद्रवैरपि विभो मन्दारवल्लीमलं
सिञ्चन्त्यद्य भवत्प्रतापदहनत्रासेन नाकाङ्गनाः ॥ ६३ ॥
यातं रामविरामविक्लवतया दुष्यन्तविश्रान्तिजः
संतापो विगतो [विलीनमखिलं दुःखं नलाभावजम्] ।
किं चान्यत्त्वयि देव बिभ्रति महासाम्राज्यलक्ष्मीमिमां
शान्तः शांतनवोऽपि कोऽपि विपुलभोगो वियोगो भुवः ॥६४॥
किंचित्कुड्मलितैकलोचनपुटं कण्डूं मुहुर्गण्डयो-
र्झम्पाकम्पितकुड्मले कुरबके निर्वाप्य वन्यद्विपैः ।

---

१. वै निश्चयेन कुण्ठं जडम्; (पक्षे) वैकुण्ठनायकम्. २. विष्णोः. ३. परशुरामः. ४. दुष्यन्तमहीपालवियोगजनितः.

विधवा तरुणी सधना वाञ्छति दिव्यं भवद्विधं रमणम् ।
धूर्तो जडमित्युक्त्वा सर्वस्वं तस्य भक्षयति ॥ २४ ॥
प्रत्यहवेतनयुक्ताः कर्मसु ये कारुशिल्पिनो धूर्ताः ।
विलसन्ति कर्मविघ्नैर्विज्ञेयाः कालचौरास्ते ॥ २५ ॥
अक्षव्याजैर्विविधैर्गणनाहस्तादिलाघवैर्निपुणाः ।
धूर्ताश्चरन्ति गूढं प्रसिद्धकितवा विदेशेषु ॥ २६ ॥
भोजनमात्रोत्पत्तिर्बहुव्ययो द्यूतमद्यवेश्याभिः ।
विज्ञेयो गृहचौरो बन्धुजनो वेश्मदासो वा ॥ २७ ॥
कृतकं शास्त्रमसत्यं साक्षाद्दृष्टश्च केन परलोकः ।
इति वदति यः स शङ्क्यो निरङ्कुशो मत्तमातङ्गः ॥ २८ ॥
बहुलाभलुब्धमनसां हरन्ति ये दुःसहेन लाभेन ।
ऋणधनमधिकविदग्धा विज्ञेया लाभचोरास्ते ॥ २९ ॥
अधिकरणाम्बुधिमध्ये ज्वलन्ति वडवाग्नयः सततभक्षाः ।
जनधनघनमनसो ये भट्टाख्या न्यायचोरास्ते ॥ ३० ॥
विभवाम्भोरुहमधुपा दुःसहविपदनिलवेगविमुखा ये ।
सुहृदस्ते सुखचौराश्चरन्ति लक्ष्मीलताहूताः ॥ ३१ ॥
यद्यत्किंचिदपूर्वं परिचरितं कल्पनादसंबद्धम् ।
वर्णयति हर्षकारी बहुवचनः कर्णचौरोऽसौ ॥ ३२ ॥
दोषेषु गुणस्तुतिभिः श्रद्धामुत्पाद्य चतुरवचना ये ।
कुर्वन्त्यभिनवसृष्टिं स्थितिचौरास्ते निराचाराः ॥ ३३ ॥
आत्मगुणख्यातिपराः परगुणमाच्छाद्य विपुलयत्नेन ।
प्रभवन्ति परमधूर्ता गुणचौरास्ते विमूढहृदयेषु ॥ ३४ ॥
वल्लभतामुपयाताः परवाल्लभ्यं विचित्रपैशुन्यैः ।
ये नाशयन्ति धूर्ता मात्सर्याद्वृत्तिचौरास्ते ॥ ३५ ॥
शमदमभक्तिविहीनस्तीव्रव्रतदुर्ग्रहग्रस्तः ।
अभिभवति प्रतिपत्त्या साधुजनं कीर्तिचौरोऽसौ ॥ ३६ ॥

देशान्तरसंभवविभिभोंगवरैर्वर्णनारम्यैः ।
येऽपि नयन्ति विदेशं पशुसदृशान्देशचौरास्ते ॥ ३७ ॥
नानाहासविकारैर्बहुवैदग्ध्यैः सनर्मवैचित्र्यैः ।
रमयति दिवसमशेषं प्रकृतिव्यापारचौरोऽसौ ॥ ३८ ॥
भक्षितनिजबहुविभवाः परविभवक्षपणदीक्षिताः पश्चात् ।
अनिशं वेश्यावेशस्तुतिमुखरमुखा विटाश्चिन्त्याः ॥ ३९ ॥
अतिशुचितया न वित्तं गृह्णाति करोति चाग्र्यमधिकारम् ।
यो नियमसलिलमत्स्यः परिहार्यो निःस्पृहनियोगी ॥ ४० ॥
रथ्यावणिजः पापाः स्वयमेत्य गृहेषु यत्प्रयच्छन्ति ।
तत्स्वकरार्पितमखिलं भवति परं काचशकलमपि ॥ ४१ ॥
छन्दानुवर्तिनो ये श्वभ्रापातेऽपि साधुवादपराः ।
सर्वस्वहारिणस्ते मधुरा विषवद्विशन्त्यन्तः ॥ ४२ ॥
तव नरपतिः प्रसादी गुणगणनपरः परं विजने ।
उक्त्वेति राजदासैः सेवकलोकः सदा मुषितः ॥ ४३ ॥
स्वप्ने मयाब्जहस्ता दृष्टा श्रीस्त्वद्गृहं प्रविष्टा सा ।
मासोपवासतुष्टा देवी श्रीः सादरा प्राह ॥ ४४ ॥
मद्भक्तस्ते दास्यति सर्वं तत्त्वं मया लब्धः ।
इत्युक्त्वा सरलानां विलसन्ति गृहे गृहे धूर्ताः ॥ ४५ ॥
पुरविप्लवनगरोदययज्ञविवाहोत्सवादिजनसङ्घे ।
प्रविशन्ति बन्धुवेषाः परेऽपि सर्वापहाराय ॥ ४६ ॥
परिजनपानावसरे पिबति न मद्यं निशासु जागर्ति ।
ध्यानपरः सेवार्थी किमपि च कर्तुं कृतोद्योगः ॥ ४७ ॥
न ददाति प्रतिवचनं ददाति वा गद्गदाक्षरैर्विषमम् ।
नष्टमुखः सोच्छ्वासः प्रवेपते तत्क्षणं चोरः ॥ ४८ ॥
यश्चाधिकपरिशुद्धिं प्रार्थयते रटति यश्च साटोपः ।
चोरापह्नवकारी शङ्कायतनं स पापः स्यात् ॥ ४९ ॥

प्रत्यक्षेऽपि परोक्षे कृतमकृतं कथितमप्यनुक्तं च ।
यः कुरुते निर्विकृतिः स परं पुंसां भयस्थानम् ॥ ५० ॥
कृतकृतकमुग्धभावः षण्ढ इव स्त्रीस्वभावसंलापः ।
विचरति यः स्त्रीमध्ये स कामदेवो गृहे धूर्तः ॥ ५१ ॥
सततमधोमुखदृष्टिः सति विभवे मलिनदशनवसनश्च ।
विलिखन्कोषनियुक्तः कोषगृहे मूषकश्चिन्त्यः ॥ ५२ ॥
तिष्ठति यः सकलदिनं गृहदासः प्रीतवेश्मभवनेषु ।
गृहदीर्घकथाः कथयन्स चरः सर्वात्मना त्याज्यः ॥ ५३ ॥
निन्द्ये बहुदण्डार्हे कर्मणि यः सर्वथा प्रतारयति ।
आजीवभीतिभोज्यस्तेन निबद्धः स्थिरो राशिः ॥ ५४ ॥
दृष्ट्वा गुह्यमशेषं तस्य रहस्यं च लीलया लब्ध्वा ।
धूर्तेन मुग्धलोकस्तेन शिलापट्टके लिखितः ॥ ५५ ॥
राजविरुद्धं द्रव्यं रूपं[1] वा कूटलेख्यमन्यद्वा ।
निःक्षिप्य यात्यलक्ष्यं धूर्तो धनिनां विनाशाय ॥ ५६ ॥
क्षुद्रः क्षीणोऽपि गृहे लब्धास्वादः कृतो धनैर्येन ।
शस्त्रविषपाशहस्तः स [2]पाशहस्तो धृतस्तेन ॥ ५७ ॥
लज्जाधनः कुलीनः संभावितशुद्धशीलमर्यादः ।
नारीक्रियते धूर्तैः प्रायेण सगर्भनारीभिः ॥ ५८ ॥
दृष्टाभिरदृष्टाभिः क्रूराभिः कृतकवचनमुद्राभिः ।
धूर्तो मुष्णाति वधूं मुग्धां विप्रोषिते पत्यौ ॥ ५९ ॥
सज्जनेऽपि साधुवेषा विधृताभरणाश्च हेलया धूर्ताः ।
धीरा हरन्ति सकलं दृष्टे हासोऽन्यथा लाभः ॥ ६० ॥
[3]देशे कृत्वा स्फीते कुम्भघनो डम्बरैर्गृहं पूर्णम् ।
निःक्षेपलक्षहारी वर्षेण पलायते धूर्तः ॥ ६१ ॥

---

१. राजकीयटङ्कशालातोऽन्यस्थले स्वगृहादौ निर्मितं रजतमुद्रादि. २. पाशहस्तो यमः.
३. यथा मरुस्थलादिदेशवासिनः केचिद्वणिजो देशान्तरे गत्वा महता डम्बरेण धनवत्त्वख्या-

शुंचितरकनकविभूषणतनुवस्त्राः संभ्रमेण पूज्यन्ते ।
रिपुभग्नराजपुत्रव्याजेन गृहे गृहे धूर्ताः ॥ ६२ ॥

आदाय देशवृषभं पुण्यं छागं च धूर्तविक्रीतम् ।
मुग्धस्य दुःखपाकः समर्घलाभोदितो हर्षः ॥ ६३ ॥

साधिक्षेपत्यागो महतां संपत्सु यः कृतासूयः ।
तस्मै भयेन वित्तं रिक्तोऽपि ददाति यत्नेन ॥ ६४ ॥

निःसारभूर्जसारैः कृत्वा युक्तं महासार्थम् ।
धूर्तो दिशि दिशि विचरन्धनिकसहस्राणि मुष्णाति ॥ ६५ ॥

धूर्तो वसन्विदेशेषूद्दिश्य सुरापगागयायात्राम् ।
मृतबन्धूनामर्थे द्रविणं गृह्णाति मुग्धेभ्यः ॥ ६६ ॥

मुष्णाति सार्थरमणी शाटीमादाय निद्रया मुग्धान् ।
धूर्तेन कूटरूपं दत्त्वा निशि वञ्चते सापि ॥ ६७ ॥

बधिरं वा मूकं वा वणिजं निःक्षिप्य भाण्डशालायाम् ।
धूर्तो नयति त्वरया बहुमूल्यं वर्णकद्रव्यम् ॥ ६८ ॥

किंचित्परिचयमात्रैः किंचिद्धार्ष्ट्यैः सकल्पनैः किंचित् ।
किंचिद्विवादकलहैः सर्वज्ञो वञ्चकश्चरति ॥ ६९ ॥

मिथ्याडम्बरधनिकः पुस्तकविद्वान्कथाज्ञानी ।
वर्णनशूरश्चपलश्चतुर्मुखो जृम्भते धूर्तः ॥ ७० ॥

सर्वावयवविधूननकृतसंकेतान्विसृज्य गेहेषु ।
भोक्तुं व्रजति दिगन्तान्स्वेच्छाचारी महाधूर्तः ॥ ७१ ॥

शतवार्षिकमामलकं भुक्त्वा श्रीपर्वतादहं प्राप्तः ।
धूर्तो वदति गुरूणां पुरतः शकुनं स्मरामीति ॥ ७२ ॥

---

तिं संपाद्य बहूनां निःक्षेपधनानि भक्षयित्वा कुम्भादिषु गुप्ततया संस्थाप्य पश्चात् 'दि-वाला'निष्कासनं कुर्वन्ति.

१. यथाधुनापि केचित् 'दिल्लीबादशाहशाहजादा'नामकाः, केचिच्च 'लखनऊनवाब'— तनूजन्मानो भूत्वा मुग्धधनिकान्वञ्चयन्तः परिभ्रमन्ति. २. वेश्या. ३. 'खोटा रुपया' इति प्रसिद्धं कांस्यादिनिर्मितं रूपकम्.

एता लेशेन मया कथिता मायाश्चतुःषष्टिः ।
को वेद वञ्चकानां मायानां शतसहस्राणि ॥ ७३ ॥

इति महाकविश्रीक्षेमेन्द्रविरचिते कलाविलासे नानाधूर्तवर्णनं नाम नवमः सर्गः ।

---

दशमः सर्गः ।

एता वञ्चकमाया विज्ञेया न तु पुनः स्वयं सेव्याः ।
धर्म्यः कलाकलापो विदुषामयमीप्सितो भूत्यै ॥ १ ॥
धर्मस्य कला ज्येष्ठा भूतदयाख्या परोपकारश्च ।
दानं क्षमानसूया सत्यमलोभः प्रसादश्च ॥ २ ॥
अर्थस्य सदोत्थानं नियमपरीपालनं क्रियाज्ञानम् ।
स्थानत्यागः पटुतानुद्वेगः स्त्रीष्वविश्वासः ॥ ३ ॥
कामस्य वेषशोभा पेशलता चारुता गुणोत्कर्षः ।
नानाविधाश्च लीलाश्चित्तज्ञानं च कान्तानाम् ॥ ४ ॥
मोक्षस्य विवेकरतिः प्रशमस्तृष्णाक्षयश्च संतोषः ।
सङ्गत्यागः स्वलयस्थानं परमप्रकाशश्च ॥ ५ ॥
एताश्चतुष्टयकला द्वात्रिंशत्क्रमधृताः समस्ता वा ।
संसारवञ्चकानां विद्या विद्यावतामेव ॥ ६ ॥
मात्सर्यस्य त्यागः प्रियवादित्वं सधैर्यमक्रोधः ।
वैराग्यं च परार्थे सुखस्य सिद्धाः कलाः पञ्च ॥ ७ ॥
सत्सङ्गः कामजयः शौचं गुरुसेवनं सदाचारः ।
श्रुतममलं यशसि रतिर्मूलकलाः सप्त शीलस्य ॥ ८ ॥
तेजः सत्त्वं बुद्धिर्व्यवसायो नीतिरिङ्गितज्ञानम् ।
प्रागल्भ्यं सुसहायः कृतज्ञता मन्त्ररक्षणं त्यागः ॥ ९ ॥
अनुरागः प्रतिपत्तिर्मित्रार्जनमानृशंस्यमस्तम्भः ।
आश्रितजनवात्सल्यं सप्तदश कलाः प्रभावस्य ॥१०॥ (युग्मम्)
मौनमलौल्यमयाच्ञा मानस्य च जीवितं कलात्रितयम् ।
एताः कला विदग्धैः स्वगताः कार्याश्चतुःषष्टिः ॥ ११ ॥

शक्तविरोधे गमनं तत्प्रणतिर्वा बलोदये वैरम् ।
आर्तस्य धर्मचर्या दुःखे धैर्यं सुखेष्वनुत्सेकः ॥ १२ ॥
विभवेषु संविभागः सत्सु रतिर्मन्त्रसंशये प्रज्ञा ।
निन्द्येषु पराङ्मुखता भेषजमेतत्कलादशकम् ॥ १३ ॥
गुरुवचनं सत्यानां कार्याणां गोद्विजातिसुरपूजा ।
लोभः पापतमानां क्रोधः सर्वोपतापजनकानाम् ॥ १४ ॥
प्राज्ञः सर्वगुणानां यशस्विता विपुलवित्तविभवानाम् ।
सेवा दुःखतमानामाशा पृथुकालभुजगपाशानाम् ॥ १५ ॥
दानं रत्ननिधीनां निर्वैरत्वं सुखप्रदेशानाम् ।
याच्ञा मानहराणां दारिद्र्यं चोपतापसार्थानाम् ॥ १६ ॥
धर्मः पाथेयानां सत्यं मुखपद्मपावनकराणाम् ।
व्यसनं रोगगणानामालस्यं गृहसमृद्धिनाशानाम् ॥ १७ ॥
निःस्पृहता श्लाघ्यानां प्रियवचनं सर्वमधुराणाम् ।
दर्पस्तिमिरकराणां दम्भः सर्वोपहासपात्राणाम् ॥ १८ ॥
अद्रोहः शौचानामचापलं व्रतविशेषनियमानाम् ।
पैशुन्यमप्रियाणां वृत्तिच्छेदो नृशंसचरितानाम् ॥ १९ ॥
कारुण्यं पुण्यानां कृतज्ञता पुरुषचिह्नानाम् ।
माया मोहमतीनां कृतघ्नता नरकपातहेतूनाम् ॥ २० ॥
मदनश्छलचौराणां स्त्रीवचनं ज्ञातिभेदानाम् ।
क्रूरश्चण्डालानां मायावी कलियुगावताराणाम् ॥ २१ ॥
शास्त्रं मणिदीपानामुपदेशश्चाभिषेकाणाम् ।
वृद्धत्वं क्लेशानां रोगित्वं मरणतुल्यदुःखानाम् ॥ २२ ॥
स्नेहो विषमविषाणां वेश्यारागो विसर्पकुष्ठानाम् ।
भार्या गृहसाराणां पुत्रः परलोकबन्धूनाम् ॥ २३ ॥
शत्रुः शल्यशतानां दुष्पुत्रः कुलविनाशानाम् ।
तारुण्यं रमणीनां रूपं रुचिरोपचारवेषाणाम् ॥ २४ ॥

संतोषो राज्यानां सत्सङ्गश्चक्रवर्तिविभवानाम् ।
चिन्ता शोषकराणां विद्वेषः कोटराग्निदाहानाम् ॥ २५ ॥
मैत्री विस्रम्भानां निर्यन्त्रणता महार्हभोगानाम् ।
संकोचो व्याधीनां कौटिल्यं निर्जलान्धुकूपानाम् ॥ २६ ॥
आर्जवममलकराणां विनयो वररत्नमुकुटानाम् ।
द्यूतं दुर्व्यसनानां स्त्रीजितता मरुतटीपिशाचानाम् ॥ २७ ॥
त्यागो मणिवलयानां श्रुतमुज्ज्वलकर्णरत्नानाम् ।
खलमैत्री चपलानां दुर्जनसेवा वृथाप्रयासानाम् ॥ २८ ॥
निर्वृतिरुद्यानानां प्रियदर्शनममृतवर्षाणाम् ।
तत्त्वरतिर्लभ्यानां मूर्खसभा सद्विवेकनाशानाम् ॥ २९ ॥
कुलजः सफलतरूणां सौभाग्यं कृतयुगावताराणाम् ।
राजकुलं शङ्क्यानां स्त्रीहृदयं प्रकृतिकुटिलानाम् ॥ ३० ॥
औचित्यं स्तुत्यानां गुणरागश्चन्दनादिलेपानाम् ।
कन्या शोककराणां बुद्धिविहीनोऽनुकम्प्यानाम् ॥ ३१ ॥
विभवः सौभाग्यानां जनरागः कीर्तिकन्दानाम् ।
मद्यं वेतालानां मृगया गजगहनयक्षाणाम् ॥ ३२ ॥
प्रशमः स्वास्थ्यकराणामात्मरतिस्तीर्थसेवानाम् ।
लुब्धः फलरहितानामाचारविवर्जितः श्मशानानाम् ॥ ३३ ॥
नीतिः स्त्रीरक्षाणामिन्द्रियविजयः प्रभावाणाम् ।
ईर्ष्या यक्ष्मशतानामयशः कुस्थानमरणानाम् ॥ ३४ ॥
माता मङ्गल्यानां जनकः सुकृतोत्सवोपदेशानाम् ।
घातस्तीक्ष्णतराणां छेदस्तीक्ष्णासिशस्त्राणाम् ॥ ३५ ॥
प्रणतिर्मन्युहराणां सौहार्दं कृच्छ्रयाच्ञानाम् ।
मानः पुष्टिकराणां कीर्तिः संसारसाराणाम् ॥ ३६ ॥
प्रभुभक्तिर्नीतीनां युधि निधनं सौख्यवीथीनाम् ।
विनयः कल्याणानामुत्साहः सर्वसिद्धीनाम् ॥ ३७ ॥

पुण्यं प्राप्यतमानां ज्ञानं परमप्रकाशानाम् ।
कीर्तिः संसारेऽस्मिन्सारतरा[1] सर्वलोकानाम् ॥ ३८ ॥ ( कुलकम् )

ज्ञेयः कलाकलापे कुशलः सर्जार्थतत्त्वविज्ञानी ।
प्रवरतरो लोकेऽस्मिन्ब्राह्मण इव सर्ववर्णानाम् ॥ ३९ ॥

इत्युक्तं शतमेतद्यो वेत्ति शुभाशुभोदयकलानाम् ।
तस्यैव व्यवहारे दृष्टा दृष्टप्रयोजना लक्ष्मीः ॥ ४० ॥

उक्त्वेति मूलदेवो विसृज्य शिष्यान्कृतोचिताचारः ।
किरणकलिकाविकासां निनाय निजमन्दिरे रजनीम् ॥ ४१ ॥

केलीमयः स्मितविलासकलाभिरामः
सर्वाश्रयान्तरकलाप्रकटप्रदीपः ।
लोकोपदेशविषयः सुकथाविचित्रो
भूयात्सतां दयित एष कलाविलासः ॥ ४२ ॥

कलाविलासः क्षेमेन्द्रप्रतिभाम्भोधिनिर्गतः ।
शशीव मानसानन्दं करोतु सततं सताम् ॥ ४३ ॥

इति महाकविश्रीक्षेमेन्द्रविरचिते कलाविलासे सकलकलानिरूपणं नाम दशमः सर्गः ।

---

## [2]पण्डितराजश्रीजगन्नाथविरचितं

## [3]प्राणाभरणम् ।

तत्कृतयैव टिप्पण्या समेतम् ।

विद्वांसो वसुधातले परवचःश्लाघासु वाचंयमा
भूपालाः कमलाविलासमदिरोन्मीलन्मदाघूर्णिताः ।

---

१. 'सारतरा' इत्यस्य लिङ्गविपरिणामेन सर्वत्रान्वयः. २. जगन्नाथपण्डितकृता बहवो ग्रन्थाः सन्ति, तन्मध्यादद्यावधि ज्ञाता ग्रन्थास्त्वेते—(१) अमृतलहरी, (२) आसफविलासः, (३) करुणालहरी, (४) चित्रमीमांसाखण्डनम्, (५) जगदाभरणकाव्यम्, (६) पीयूषलहरी, (७) प्राणाभरणकाव्यम्, (८) भामिनीविलासः, (९) मनोरमाकुचमर्दनम्, (१०) यमुनावर्णनचम्पूः, (११) लक्ष्मीलहरी, (१२) सुधालहरी, (१३) रसगङ्गाधरः. ३. कामरूपदेशाधीशस्य प्राणनारायणमहीपस्य स्तुतिरूपोऽयं ग्रन्थः.

आस्ये धास्यति कस्य लास्यमधुना धन्यस्य कामालस-
स्वर्वामाधरमाधुरीमधरयन्वाचां विलासो मम ॥ १ ॥

विद्वांस इत्यादि प्रायदर्शनाभिप्रायमेतत् । तेन सहृदयैर्न मनागपि विमनायितव्यम् । भावध्वनिश्चायम् । उत्तरार्धप्रतिपाद्यार्थालम्बनाया एतत्पद्यप्रयोगानुभावाया: कविगतचिन्ताया: प्राधान्येनाभिव्यक्ते: । अनुपात्तोभयनिमित्तको व्यतिरेक: स्फुटोऽलंकार: । कामालसत्वं वामाविशेषणमधरमाधुरीप्रकर्षकम् ॥

विद्वाणैव गुणज्ञता समुदितो भूयानसूयाभर:
कालोऽयं कलिराजगाम जगतीलावण्यकुक्षिंभरि: ।
एवं भावनया मदीयकविते मौनं किमालम्बसे
जागर्तु क्षितिमण्डले चिरमिह श्रीकामरूपेश्वर: ॥ २ ॥

कविगतराजविषयकरतिभावध्वनिश्चायम् । इत ऊर्ध्वमयमेव आ चरमपद्यमनुवर्तिष्यते । अस्य चात्र मौनानुभावितो वर्णनीयालम्बनो निर्वेदो गुण इति प्रेयोलंकारास्पदम् । अत्र चाचेतनायां कवितायां चेतनत्वाध्यवसायमूलासंबन्धे संबन्धात्मिकातिशयोक्तिर्विवक्षिता । तेन भावनामौननिर्वेदानां संबोधनस्य च नानुपपत्ति: ॥

पारीन्द्राणां धुरीणैरवनितलगुहागर्भत: संपतद्भि:
स्वापभ्रंशापराधप्रचलितनयनप्रान्तमाकर्ण्यमान: ।
त्वत्प्रस्थानान्तरुद्यत्प्रलयजलधरध्वानधिक्कारधीरो
घृष्टक्षीरोदतीरो जगति विजयते दुन्दुभिद्वन्द्वनाद: ॥ ३ ॥

अत्र राजालम्बनस्य तादृशनादश्रवणोद्दीपितस्य नयनप्रचलनानुभावितस्य गिरिगुहागर्भोत्पतनाभिव्यक्तेनामर्षेण संचारिणा परिपोषितस्य पारीन्द्रगतोत्साहस्य स्थायिनो राजविषयकरतिभावाङ्गत्वाद्रसालंकारत्वम् । यदाहु:—'प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादय: । काव्ये तस्मिन्नलंकारो रसादिरिति मे मति: ॥' इति । तृतीयचतुर्थचरणयोस्तु स्फुटावेव व्यतिरेकातिशयौ । घृष्टशब्देन तादृशनादो वेलाचलप्रतिबद्धत्वादग्रे न गत: । अन्यथा लोकालोकाचलमपि स्पृशेदिति गम्यते । एव मृष्टेति नोक्तम् । तथा सति शैथिल्यप्रत्ययापत्ते: ॥

किं[1] ब्रूमस्तव वीरतां वयममी यस्मिन्धराखण्डल
क्रीडाकुण्डलितभ्रु शोणनयनं दोर्मण्डलं पश्यति ।

१. उदाहृतोऽयं श्लोको रसगङ्गाधरे प्रथमानने. 'हे पृथ्वीन्द्र, यस्मिंस्त्वयि क्रीडया तस्यां वा कुण्डलिते भ्रुवौ शोणनयने च यस्य तस्मिन्सति । दोर्मण्डलं दोर्युगमं पश्यति च सति । तत्कालं तस्मिन्नेव समये । रक्तमणिसमुद्रकान्तिमिश्रितैर्भूषणानन्तसमूहैर्विन्ध्या-

माणिक्यावलिकान्तिदन्तुरतरैर्भूषासहस्रोत्करै-

विंन्ध्यारण्यगुहागृहावनिरुहास्तत्कालमुल्लासिताः ॥ ४ ॥

अत्र विन्ध्यारण्यगतानां गुहागृहाणामवनिरुहां च विन्ध्यगतानां गुहागृहाणामरण्यगतानामवनिरुहाणां वा भूषणेन कार्येणाप्रस्तुतेन त्वदरिनारीणां स्वनगराणि परित्यज्य निशि गुहागृहेषु तरुतलेषु च विन्यस्य सकलाभरणानि कृतशयनानां प्रातस्त्वदागमनसंभ्रमेण तत्कर्मकं विस्मरणं भारवशात्परित्यागो वा प्रस्तुतो गम्यत इत्यप्रस्तुतप्रशंसा। कार्यस्य यथाकथंचित्प्रस्तुतत्वे तु पर्यायोक्तमलंकारः ॥

माहात्म्यस्य परोऽवधिर्निजगृहं गम्भीरतायाः पिता

रत्नानामहमेक एव भुवने को वापरो मादृशः ।

इत्येवं परिचिन्त्य मा स्म सहसा गर्वान्धकारं गमो

दुग्धाब्धे भवता समो विजयते श्रीप्राणनारायणः ॥ ५ ॥

अत्रोपमानस्य गुणविशेषप्रयुक्तसादृश्याभावनिबन्धनमुत्कर्षं परिहर्तुं वर्ण्यमानसादृश्यात्मकः प्रतीपालंकारभेदः । स चोपमाविशेष इत्येके । विच्छित्तिवैलक्षण्यादतिरिक्त एवेत्यपरे ॥

त्वत्तो जन्म सितांशुशेखरतनुज्योत्स्नानिमग्नात्मनो

दुग्धाम्भोनिधिमुग्धवीचिवलयैः साकं परिक्रीडनम् ।

संवासः सुरलोकसिन्धुपुलिने वादः सुधांशोः करैः

कस्मान्नोज्ज्वलिमानमञ्चतुतमां देव त्वदीयं यशः ॥ ६ ॥

अत्र यशसि धवलतातिशयस्तद्धर्मिसंबन्धप्रयुक्तत्वेन कथित इति समस्य विषयः । अंशुकृतश्चन्द्रे तत्कृतश्च भगवति भगवत्कृतश्च राजनीत्येवमुत्तरोत्तरमुपचीयमानो राजगत उत्कर्षः प्रतीयत इति सारविषयः ॥

आवध्नास्यलकान्निरस्यसितमां चोलं रसाकाङ्क्षया

लङ्कायावशतां तनोषि कुरुषे जङ्घाललाटक्षतम् ।

---

द्रेर्वनगुहागृहवृक्षाश्चत्वार उल्लासिताः । अतस्तव वीरतां अमी वयं किं ब्रूम इत्यर्थः । क्रीडायां तथा कृतं श्रुत्वा शत्रवः पलाय्य विन्ध्यप्रदेशं संगता इति भावः' इति तत्र नागेशभट्टव्याख्यानम्. १. वामानां शत्रूणाम्. (तत्पक्षे) अलकां नगरीविशेषम्, चोलं देशविशेषम्, रसाया भूमेः, लङ्काया नगरीविशेषस्य, जङ्घालस्य वेगवतो लाटदेशस्य, प्रत्यङ्गमङ्गदेशं प्रति; अथ च वामानां स्त्रीणाम्. (तत्पक्षे) अलकांश्चूर्णकुन्तलान्, चोलं वस्त्रविशेषम्, रसस्य शृङ्गारस्य, अलं कायावशतामत्यर्थं तासां शरीरस्यावशताम्, जङ्घयोर्ललाटे च क्षतं नखक्षतं कुरुषे कामशास्त्रोक्तत्वात्, प्रत्यङ्गं सर्वाङ्गेषु.

प्रत्यङ्गं परिमर्दनिर्दयमहो चेतः समालम्बसे
वामानां विषये नृपेन्द्र भवतः प्रागल्भ्यमत्यद्भुतम् ॥ ७ ॥

अत्र प्रकृतधर्मिगतयोः प्रकृताप्रकृतयोः प्रकृतयोरेव वा वृत्तान्तयोः श्लेषः। स च षट्सु स्थलेषु शब्दनानात्वनिबन्धनो द्वयोश्चार्थनानात्वनिबन्धनः। द्वावप्येतौ शब्दालंकाराविति प्राञ्चः। आद्यो जतुकाष्ठन्यायेन शब्दश्लेषणाच्छब्दालंकारः, द्वितीयस्त्वेकवृन्तगतफलद्वयन्यायेनार्थश्लेषणादर्थालंकार इति नव्याः॥

देव त्वां परितः स्तुवन्तु कवयो लोभेन किं तावता
स्तव्यस्त्वं भवितासि यस्य तरुणश्चापप्रतापोऽनिशम्।
क्रोडान्तः कुरुतेतरां वसुमतीमाशाः समालिङ्गति
द्यां चुम्बत्यमरावती च सहसा गच्छत्यगम्यामपि ॥ ८ ॥

अत्र प्रतापगतः पृथिव्यादिसंबन्धो लिङ्गविशेषावच्छिन्नतत्तत्साधारणविशेषणाभिव्यक्तकामुकवृत्तान्ताभिन्नतया स्थित इति समासोक्तिः कार्यरूपधर्मप्रयुक्तशुद्धसाधारण्येन विशेषणसाम्यमालम्ब्य प्रवृत्ता। सा च निन्दोत्थापकत्वाद्व्याजस्तुतौ गुणः॥

लोकानां विपदं धुनोषि कुरुषे संपत्तिमत्युत्कटा-
मित्यल्पेतरजल्पितैर्जडधियां भूपाल मा गा मदम्।
यत्कीर्तिस्तव वल्लभा लघुतरब्रह्माण्डभाण्डोदरे
पिण्डीकृत्य महोन्नतामपि तनुं कष्टेन हा वर्तते ॥ ९ ॥

अत्रापि प्राग्वत्। परं त्वाधाराधेयान्यतरविस्तृतत्वसिद्धिफलकान्यतरन्यूनत्वकल्पनात्माधिकालंकारोऽपि तस्यां गुणः॥

क्षोणीं शासति मय्युपद्रवलवः कस्यापि न स्यादिति
प्रौढं व्याहरतो वचस्तव कथं देव प्रतीमो वयम्।
प्रत्यक्षं भवतो विपक्षनिवहैर्द्यामुत्पतद्भिः क्रुधा
यद्युष्मत्कुलकोटिमूलपुरुषो निर्भिद्यते भास्करः ॥ १० ॥

इह लघिकसमासोक्तिभ्यामनालिङ्गितैव सा [व्याजस्तुतिः]॥

आस्वादेन रसो रसेन कविता काव्येन वाणी तया
लोकान्तःकरणानुरागरसिकः सभ्यः सभा चामुना।
दारिद्र्यानलदह्यमानजगतीपीयूषधाराधर
क्षोणीनाथ तथा भवांश्च भवता भूमण्डलं भासते ॥ ११ ॥

मालादीपकमेतदिति प्राञ्चः । दीपकस्य सादृश्यमूलकतानियमान्न मालादीपकमपि त्वेकावलीभेद इति तु वयम् ॥

अम्लायन्यदरातिकैरवकुलान्यम्लासिषुः सत्वरं
दैन्यध्वान्तकदम्बकानि परितो नेशुस्तमां तामसाः ।
सन्मार्गाः प्रसरन्ति साधुनलिनान्युल्लासमातन्वते
तन्मन्ये भवतः प्रतापतपनो देव प्रभातोन्मुखः ॥ १२ ॥

इह रूपकनिष्पादितलिङ्गकमनुमानं निमित्तविरहादुत्प्रेक्षाया अयोगाद्वाचकमनुमितिपरम् ॥

उत्क्षिप्ताः[1] कबरीभरं विवलिताः पार्श्वद्वयं न्यक्कृताः
पादाम्भोजयुगं रुषा परिहृता दूरेण चेलाञ्चलम् ।
गृह्णन्ति त्वरया भवत्प्रतिभटक्ष्मापालवामभ्रुवां
यान्तीनां गहनेषु कण्टकचिताः के के न भूमीरुहाः ॥ १३ ॥

अत्र कण्टकचितत्वेन कबरीग्रहणादेः संकीर्णत्वात्कार्यधर्मान्तरा संकीर्णशुद्धसाधारण्येन विशेषणसाम्यमालम्ब्य प्रवृत्ता समासोक्तिः ॥

दृष्टिः संभृतमङ्गला बुधमयी देव त्वदीया सभा
काव्यस्याश्रयभूतमास्यमरुणा[2]धारोऽधरः सुन्दरः ।
क्रोधस्तेऽशनि[3]भूरुदारधिषणं[4] स्वान्तं तु सोमास्पदं
राजन्नूनमनूनविक्रम भवान्सर्वग्रहालम्बनम् ॥ १४ ॥

अत्रोत्प्रेक्ष्यमाणसर्वग्रहालम्बनत्वस्य समानाधिकरणेषु धर्मेषु तत्तद्ग्रहाश्रिताङ्गकत्वेषु विशेषणीभूतैस्तत्तद्ग्रहैः सह विषयस्य राज्ञो कल्याणाश्रयत्वादिषु विशेषणानां कल्याणादीनां श्लेषेणाभेदसंपादनद्वारा तादृशधर्मसाधारणतासंपत्तौ तन्निमित्तकोत्प्रेक्षासिद्धिः ॥

सृष्टः सृष्टिभुवा पुरा किल परित्रातुं जगन्मण्डलं
त्वं चण्डा[5]तपनिर्दयं तपसि यज्ज्वालाजटालैः करैः ।
संरम्भारुणलोचनो रणभुवि प्रस्थातुकामोऽधुना
जानीमो भवता न हन्त विदितः श्रीकामरूपेश्वरः ॥ १५ ॥

---

१. उदाहृतोऽयं श्लोको रसगङ्गाधरे प्रथमानने. 'उत्क्षिप्ता उन्नतीकृताः । विवलिता वक्रीकृताः । न्यक्कृता अधरीकृताः । ग्रहणे हेतुगर्भं विशेषणं कण्टकचिता इति । कण्टकव्याप्ता इत्यर्थः' इति तत्र टीका. २. अरुणः सूर्यः. ३. अशनिर्वज्रम्. ग्रहगणनायां तु शनिरित्येव. ४. धिषणा बुद्धिः, धिषणो गुरुः. ५. हे सूर्य.

अत्र राजवर्णनाङ्गत्वेन रवेर्भयोत्पादने वर्ण्यत्वेन प्रस्तुते साक्षात्तदननुगुणत्वेनाप्रस्तुतेन प्रस्थानेन साक्षात्तदनुगुणं रिपुकर्तृकं सूर्यमण्डलभेदनं कार्यं गम्यते ॥

आयाता कमलासनस्य भवनाद्द्रष्टुं त्रिलोकीतलं
गीर्वाणेषु दिनानि कानिचिदहो नीत्वा पुनः कौतुकात्।
भ्रान्त्वा भूवलये महाकविकुलोपास्या तवास्याम्बुजे
राजन्संप्रति सत्यधामनि गिरां देवी सुखं वर्तते ॥ १६ ॥

अत्रैकस्याधेयस्यानेकाधारसंबन्धात्पर्यायः । तत्र प्रथमचरणगतमधिकरणमार्थं विश्लेषावधिकपञ्चम्या विश्लेषस्योपश्लेषापेक्षत्वेनौपश्लेषिकाधिकरणस्याक्षेपगम्यत्वात्। सत्यधामनीति श्लेषमित्तिकाभेदाध्यवसानेन मुखस्य सत्यलोकतासिद्धौ सुखवर्तनसिद्धिः ॥

विद्वद्दैन्यतमिस्रमूर्तिरथवा वैरीन्द्रवंशाटवी-
दावाग्निः किमहो महोज्ज्वलयशःशीतांशुदुग्धाम्बुधिः।
किं वानङ्गभुजंगदष्टवनिताजीवातुरेवं नृणां
केषामेष नराधिपो न जनयत्यल्पेतराः कल्पनाः ॥ १७ ॥

अत्र कोटीनामारोपान्तरमूलकत्वात्परम्परितसंशयः स चाहार्यः, मूलारोपस्य तथात्वात्। कवाविव कविनिबद्धप्रमात्रन्तरेऽप्याहार्यबुद्धेरविरोधात् ॥

नदन्ति मददन्तिनः परिलसन्ति वाजिव्रजाः
पठन्ति बिरुदावलीमहितमन्दिरे वन्दिनः।
इदं तदवधि प्रभो यदवधि प्रवृद्धा न ते
युगान्तदहनोपमा नयनकोणशोणद्युतिः ॥ १८ ॥

अत्र मुख्यार्थस्य राजविषयायाः कविरतेरुपकारकस्य यदैव तव कोपोदयस्तदैव तव रिपूणां संपदो भस्मसाद्भविष्यन्तीति वस्तुन उपकारिका नयनकोणशोणद्युतेर्युगान्तदहनोपमा ॥

मयि त्वदुपमाविधौ वसुमतीश वाचंयमे
न वर्णयति मामयं कविरिति क्रुधं मा कृथाः।
चराचरमिदं जगज्जनयतो विधेर्मानसे
पदं न विदधेतरां तव समो द्वितीयो नरः ॥ १९ ॥

अत्र त्वत्समोऽन्यो नास्तीति प्रत्ययादुपमानलुप्तोपमा व्यज्यतेति प्राञ्चः। सर्वथैव सा-

१. सूर्यः. २. जीवनौषधम्.

म्यस्याप्रतिष्ठानान्नेयमुपमा । अन्यथा व्यतिरेकस्यापि तत्त्वापत्तेः । '[1]ढुंढोल्लन्तो मरिससि कंटककलिआइं केअइवणाइं । मालइकुसुमसरिच्छं भमर भमंतो ण पावेसि ॥' इत्यत्र तु न प्राप्स्यसीत्युक्त्वा क्वचित्त्वदगोचरे स्थले भविष्यतीति प्रतीतेः सादृश्यप्रतिष्ठानाल्लुप्तोपमास्तु । तस्मादसमालंकार एवायमिति तु नव्याः ॥

भुजभ्रमितपट्टिशोद्दलितदृप्तदन्तावलं
भवन्तमरिमण्डलक्षथन पश्यतः संगरे ।
करालकुलिशाहतिस्फुटविभिन्नविन्ध्याचलो
न कस्य हृदयं झटित्यधिरुरोह जम्भाहितः[2] ॥ २० ॥

अत्र स्मरणालंकारः परंतु लक्ष्यः ॥

यमः प्रतिमहीभृतां हुतवहोऽसि तन्नीवृतां[3]
सतां खलु युधिष्ठिरो धनपतिर्[4]धनाकाङ्क्षिणाम् ।
गृहं शरणमिच्छतां कुलिशकोटिभिर्निर्मितं
त्वमेक इह भूतले बहुविधो विधात्रा कृतः ॥ २१ ॥

अत्र कविना यमत्वादिना रूपेण राज्ञो रूपवतः करणाद्रूपकेण विपक्षभूपालादीनामेतस्मिन्नागते यमत्वादिना भ्रान्तेरपि संभवाद्भ्रान्तिमता तैरेवानेकैर्ग्रहीतृभिरनेकैर्धर्मैरुल्लेखनादुल्लेखविशेषेण च सह संकीर्णोऽपि संबन्धिषष्ठ्यन्तभेदप्रयुक्तवर्ण्यानेकविधत्वरूप उल्लेखः ॥

द्विनेत्र इव वासवो मितकरो विवस्वानिव
द्वितीय इव चन्द्रमाः श्रितवपुर्मनोभूरिव ।
नराकृतिरिवाम्बुधिर्गुरुरिव क्षमामागतो
नुतो निखिलभूसुरैर्जयति कामरूपेश्वरः ॥ २२ ॥

अत्र राजगतानां द्विनेत्रत्वादीनां वासवादितादात्म्यविरोधिनां विरोधनिवर्तनाय विषयिषु वासवादिष्वारोपेण साधारणीकरणात्तन्निमित्तकोत्प्रेक्षा । सा चेह मालारूपा । न चात्रोपमा शक्यरूपणा । द्विनेत्रत्वाद्युक्तेर्निष्प्रयोजनकत्वापत्तेः । न चोपमानिष्पादकं तेषां साधारण्यं तदभावेऽपि परमैश्वर्यादिभिः प्रतीयमानैस्तस्या निष्पत्तेः । असुन्दरत्वेनोपमानिष्पादकतया कवेरनभिप्रेतत्वाच्च । एवं द्वितीयादीनां चन्द्रादिष्वारोपोऽप्युपमायां सत्यामनर्थक एव स्यात् ॥

---

१. 'अन्विष्यन्मरिष्यसि कण्टककलितानि केतकीवनानि । मालतीकुसुमसदृशं भ्रमर भ्रमन्न प्राप्स्यसि ॥' इत्यस्य छाया. २. इन्द्रः. ३. देशानाम्. ४. कुबेरः.

दीनव्राते दयार्द्रा निखिलरिपुकुले निर्दया किं च मृद्वी
काव्यालापेषु तर्कप्रतिवचनविधौ कर्कशत्वं दधाना।
लुब्धा धर्मेष्वलुब्धा वसुनि परविपद्दर्शने कांदिशीका
राजन्नाजन्मरम्य स्फुरति बहुविधा तावकी चित्तवृत्तिः॥ २३॥

अत्र विषयानेकत्वप्रयुक्तचित्तवृत्तेरनेकविधत्वमित्युल्लेखः। तत्र च तदीयचित्तवृत्तित्वे-नैकत्वाध्यवसानं तन्त्रम्॥

देवाः के पूर्वदेवाः[1] समिति मम नरः सन्ति के वा पुरस्ता-
देवं जल्पन्ति तावत्प्रतिभटपृतनावर्तिनः क्षत्रवीराः।
यावन्नायाति राजन्नयनविषयतामन्तकत्रासिमूर्ते-
र्मुग्धारिप्राणदुग्धाशनमसृणरुचिस्त्वत्कृपाणो भुजंगः॥ २४॥

अत्र शुद्धपरम्परितरूपकम्॥

प्राचीसंध्यासमुद्यन्महिमदिनमणेर्मानमाणिक्यकान्ति-
र्ज्वालामाला कराला कवलितजगतः क्रोधकालानलस्य।
आशाकान्तापदाम्भोरुहतलविगलन्मञ्जुलाक्षारसाभा
सा भाति क्षोणिशोभाकरण तव दृशोः संगरे शोणिमश्रीः॥ २५॥

अत्रापि तदेव परंतु मालात्मकम्॥

त्वां सुन्दरीनिवहनिष्ठुरधैर्यगर्व-
निर्वासनैकरसिकं समरे निरीक्ष्य।
का वा रिपुक्षितिभृतां बत राजलक्ष्मीः
स्वामिव्रतत्वमपरिस्खलितं बभार॥ २६॥

अत्र शत्रूणां राज्यलक्ष्मीस्त्वां प्राप्तेति विवक्षितोऽर्थः पातिव्रत्यस्खलितरूपेणाभिहित इति पर्यायोक्तम्। तच्च राज्यलक्ष्म्या नायिकात्वसिद्ध्यर्थं समासोक्तिमपेक्षत इति सा तत्र गुणः॥

नासत्ययोगो[3] वचनेषु कीर्तौ तथार्जुनः[4] कर्मणि चापि धर्मः[5]।
चित्ते जगत्प्राणभवो[6] यदास्ते वशंवदास्ते किमु पाण्डुपुत्राः[2]॥ २७॥

---

१. दैत्याः. २. बहुवचनम्. ३. असत्यस्य योगो न; (पक्षे) नासत्यौ नकुलसहदेवौ. ४. शुभ्रो मध्यमपाण्डवश्च. ५. युधिष्ठिरोऽपि. ६. परमेश्वरः; (पक्षे) जगत्प्राणस्य पवनस्य सूनुर्भीमः.

अत्र पाण्डुपुत्रेषु विषयेषु राजवशंवदतादात्म्योत्प्रेक्षायां राजाश्रितलरूपो विषयिधर्मः श्लेषेण विषयाणां तदाश्रितानां चासत्याभावशुक्लगुणपुण्यपरमेश्वराणामभेदसंपादनद्वारा विषयसाधारणीकृतः ॥

मन्थाचलभ्रमणवेगवशंवदा ये
दुग्धाम्बुधेरुदपतन्नणवः सुधायाः ।
तैरेकतामुपगतैर्विविधौषधीभि-
र्धाता ससर्ज तव देव दयादृगन्तान् ॥ २८ ॥

अत्र दृगन्तेषु न केवलं संजीवकत्वादयोऽमृतमात्रगुण एव कवेर्बुबोधयिषिता अपि तु निखिलजनवशीकारत्वादयोऽन्येऽपीति सुधाकणेष्वोषधीसंसर्गोऽतिशयार्थमुपात्तः ॥

केशैर्वधूनामथ सर्वकोषैः प्राणैश्च साकं प्रतिभूपतीनाम् ।
त्वया रणे निष्करुणेन गाढं चापस्य जीवा चकृषे जवेन ॥ २९ ॥

अत्र चापकर्षणकार्याणानां केशाकर्षणादीनां पौर्वापर्यविपर्ययात्मनातिशयेनानुप्राणिता सहोक्तिः ॥

महेन्द्रतुल्यं कवयो भवन्तं वदन्तु किं तानिह वारयामः ।
भवान्सहस्रैः समुपास्यमानः कथं समानस्त्रिदशाधिपेन ॥ ३० ॥

अत्र श्लेषोत्थापितत्रिदशत्वसंख्यामादाय व्यतिरेक उपात्तोभयनिमित्तकः ॥

स तु वर्षतु वारि वारिदस्त्वमुदाराशय रत्नवर्षणः ।
स कुहूरजनीमलीमसस्त्वमिहान्तर्बहिरेव निर्मलः ॥ ३१ ॥

अत्रापि स एव परं तु श्लेषोऽत्रानुत्थापको निषिध्यमानं साम्यं च न शाब्दमिति विशेषः ॥

कतिपयैर्निरणायि जनाधिपस्तदपरैरुदटङ्कि धनाधिपः ।
अजनि केवलमेष गिरां पतिर्भुवि मदेकमते कमतेश्वरः ॥ ३२ ॥

अत्र नायं राजा किं तु गिरां पतिरित्याकारापह्नुतिः । तत्र निषेधभागः परमतत्वोक्त्या पूर्वार्धेन गम्यते । आरोपांशस्तूत्तरार्धेन ॥

मकरप्रतिमैर्महाभटैः कविभी रत्ननिभैः समन्वितः ।
कवितामृतकीर्तिचन्द्रयोस्त्वमिहोर्वीरमणासि भाजनम् ॥ ३३ ॥

अत्र राज्ञो जलध्युपमायाः शब्देनाभिधानेऽप्यङ्गोपमाभिराक्षेपादेकदेशविवर्तिन्युपमा तेनोत्तरार्ध उपमितसमास एव । विशेषणसमासवेद्यस्य तादात्म्यस्य प्रकृतेऽनुपयोगात् ॥

---

१. बोधयितुमिष्टाः.

पुरः पुरस्तादरिभूपतीनां भवन्ति भूवल्लभ भस्मशेषाः ।
अनन्तरं ते भ्रुकुटीविटङ्कात्पतन्ति रोषानलविस्फुलिङ्गाः ॥ ३४ ॥

अत्र प्रयोजकातिशयकृतः प्रयोज्यशैघ्र्यातिशयो गम्यः । कार्यकारणपौर्वापर्यविपर्ययरूपा चेयमतिशयोक्तिः ॥

भुवनत्रितयेऽपि मानवैः परिपूर्णे विबुधैश्च दानवैः ।
न भविष्यति नास्ति नाभवन्नृप यस्ते भजते तुलास्पदम् ॥ ३५ ॥

अत्रोपमानलुप्तोपमेति प्राञ्चः । असमाख्यमलंकारान्तरमिति तु वयम् ॥

पीयूषयूषकल्पामल्पामपि ते गिरं निपीतवताम् ।
तोषाय कल्पते नो योषाधरबिम्बमधुरिमोद्रेकः ॥ ३६ ॥

अत्र संबन्धेऽप्यसंबन्ध इत्यतिशयोक्तिभेदः । उपमेयोपमानविशेषणाभ्यामल्पत्वोद्रिक्तत्वाभ्यामल्पयापि सह भूयानपि मधुरिमा साम्यं कर्तुं यत्रानीशस्तत्र किं वाच्यं भूयस्येति वैलक्षण्यात्मा व्यतिरेकश्च ॥

भासयति व्योमस्था जगदखिलं कुमुदिनीर्विकासयति ।
कीर्तिस्तव धरणिगता सगरसुतायासमफलतां नयते ॥ ३७ ॥

अत्र व्यज्यमानचन्द्रिकारूपकसंकीर्णं उल्लेखध्वनिः ॥

भाग्येन सह रिपूणामुत्तिष्ठसि विष्टरात्क्रुधाविष्टः ।
सहसैव पतसि तेषु क्षितिशासन मृत्युना साकम् ॥ ३८ ॥

'केशैर्वधूनाम्' (२९) इत्यत्र कर्मणः सहोक्तिः । इह तु कर्तुरिति विशेषः ॥

त्वयि पाकशासनसमे शासति सकलं वसुंधरावलयम् ।
विपिने वैरिवधूनां वर्षन्ति विलोचनानि च दिनानि ॥ ३९ ॥

अत्र वर्षवदाचरन्तीत्याचारक्विबन्तेन श्लेषाच्छ्लेषमूलिका तुल्ययोगिता । रिपुकामिनीवर्णनविषयत्वेनोपमानोपमेययोर्द्वयोरपि प्रकृतत्वात् ॥

अहितापकरणभेषज नरनाथ भवान्करस्थितो यस्य ।
तस्य कुतोऽहिभयं स्यादखिलामपि मेदिनीं चरतः ॥ ४० ॥

अत्र श्लेषनिवेदितस्य सर्पभयाभावस्योपपादकतयोपात्तस्य राजनि भेषजतादात्म्यारोपस्याप्युपपादकतया स्थितं राजसंबन्धिनि द्विषदपकरणरूपे धर्मे श्लेषनिवेदितसर्पतापकरणतादात्म्यमिति प्रथमचरणे श्लिष्टपरम्परितरूपकं तृतीये तु श्लेष एव ॥

कुवलयलक्ष्मीं हरते तव कीर्तिस्तत्र किं चित्रम् ।
यस्मान्निदानमस्या लोकनमस्याङ्घ्रिपङ्कजो हि भवान् ॥ ४१ ॥

अत्रोत्पादकसमानगुणत्वादुत्पाद्यस्योत्पादकभावसंसर्गानुरूपः समालंकारविशेषः । श्लेषश्चास्मिन्गुणः ॥

दृष्टः सदसि चेदुग्रश्चन्द्रचन्दनचन्द्रिकाः ।
अथ त्वं संगरे सौम्याः शेषकालानलासयः ॥ ४२ ॥

अत्र दृष्टः सदसीति वाक्ये त्वमित्यस्यापकर्षणात्, अथ त्वं संगर इत्यत्र च त्वमित्यस्यानुवर्तनाद्वाक्ययोः पदविनिमयात्समालंकारः पूर्वार्धे । उत्तरार्धे प्रकृतानेकधर्मसंबन्धात्तुल्ययोगिता । उपमेयस्योत्कृष्टगुणत्वसिद्धय उपमानस्य तद्विरुद्धगुणकल्पनात्मकेनालंकारान्तरेण शबलिता ॥

अपारे खलु संसारे विधिनैकोऽर्जुनः कृतः ।
कीर्त्या निर्मलया भूप त्वया सर्वेऽर्जुनाः कृताः ॥ ४३ ॥

इह श्लेषमूलो व्यतिरेकः ॥

दधीचिबलिकर्णेषु हिमहेमाचलाब्धिषु ।
अदातृत्वमधैर्यं च दृष्टे भवति भासते ॥ ४४ ॥

अत्रापि सैव तथाविधा । यथासंख्यसंकरस्तु विशेषः ॥

शासति त्वयि हे राजन्नखण्डावनिमण्डलम् ।
न मनागपि निश्चिन्ते मण्डले शत्रुमित्रयोः ॥ ४५ ॥

इहापि तुल्ययोगिता मित्रशब्दश्लेषोत्थापिता व्याजस्तुतिश्च ॥

भानुरग्निर्यमो वायं बलिः कर्णोऽथवा शिबिः ।
प्रत्यर्थिनोऽर्थिनश्चेत्थं त्वयि यान्ति विकल्पनाम् ॥ ४६ ॥

इह तु संशय उल्लेखालिङ्गितः ॥

[1]कमलावासकासारः [2]क्ष्माधृतिफणीश्वरः ।
भवान्[3]कुवलयस्येन्दुरानन्दयति मानवान् ॥ ४७ ॥

इह श्लिष्टपरम्परितं रूपकं मालारूपम् ॥

गगने चन्द्रिकायन्ते हिमायन्ते हिमाचले ।
पृथिव्यां सागरायन्ते भूपाल तव कीर्तयः ॥ ४८ ॥

इह मालोपमालिङ्गित उल्लेखः ॥

---

१. कमला लक्ष्मीः, पद्मानि च. २. क्षमा भूमिः, क्षान्तिश्च. ३. कुवलयं भूमण्डलम्, उत्पलं च.

मृगतां हरयन्मध्ये वृक्षतां च पटीरयन् ।
नक्षत्रतां महीपानां त्वमिन्दवसि भूपते ॥ ४९ ॥

इह शुद्धपरम्परिता मालारूपोपमा । आचारक्विबन्ताच्छतारि रूपाणि । तिङि चैकम् [इन्दवसि] ॥

मध्ये सुधासमुद्रस्य सितामयगृहोदरे ।
पूर्णेन्दुविष्टरे देव स्थातुं योग्यास्तवोक्तयः ॥ ५० ॥

अत्र त्रयाणां सुधासमुद्रादीनां विशेषणविशेष्यभावेन मधुरिमणि परां काष्ठामधिरूढे त्वदीयोक्तिपदसंबन्धो युक्तो न तु विशकलित इत्यतिशायकासद्विशेषणनिबन्धना प्रौढोक्तिः ॥

अमृतलहरीचन्द्रज्योत्स्नारमावदनाम्बुजा-
न्यधरितवतो निर्मर्यादप्रसादमहाम्बुधेः ।
उदभवदयं देव त्वत्तः कथं परमोल्बणः
प्रलयदहनज्वालाजालाकुलो महसां गणः ॥ ५१ ॥

अत्र कारणगुणविरुद्धस्वगुणस्य कार्यस्योत्पत्तेर्विषमालंकारः । अमृतलहर्यादीनां त्रयाणामधरीकरणात्मना व्यतिरेकेण संजीवकत्वपरमशीतलत्वविशुद्धत्वसौन्दर्याणामतिशयो गम्यते । एवमेषु पद्येषु संभवन्तोऽप्यन्येऽलंकाराः स्फुटत्वान्न विवेचिताः । सहृदयानां प्रीत्यावश्यकं किंचिद्व्याख्यातमन्यत्तु तैरेवोल्लासनीयमित्यलं पल्लवितेन ॥

तैलङ्गान्वयमङ्गलालयमहालक्ष्मीदयाललितः
श्रीमत्पेरमभट्टसूनुरनिशं विद्वल्ललाटंतपः ।
संतुष्टः कमताधिपस्य कवितामाकर्ण्य तद्वर्णनं
श्रीमत्पण्डितराजपण्डितजगन्नाथो व्यधासीदिदम् ॥ ५२ ॥

[1]दोर्दण्डद्वयकुण्डलीकृतलसत्कोदण्डचण्डाशुग-
ध्वस्तोद्दण्डविपक्षमण्डलमिह त्वां वीक्ष्य मध्येरणम् ।
वल्गद्गाण्डिवमुक्तकाण्डवलयज्वालावलीताण्डव-
भ्रश्यत्खाण्डवरुष्टपाण्डवमहो को न क्षितीशः स्मरेत् ॥ ५३ ॥

अत्र स्मरणालंकारः । भाव इति तु न भ्रमितव्यम् । सादृश्यमूलकत्वातन्मूलकत्वाभ्यां भावत्वालंकारत्वयोरिह व्यवस्थितेः शब्दवेद्यत्वाच्च ॥

इति पण्डितराजश्रीजगन्नाथविरचितं प्राणाभरणं तत्कृतयैव टिप्पण्या समेतं समाप्तम् ।

---

१. ग्रन्थसमाप्त्यनन्तरमयं श्लोकोऽनुचित इवाभाति. भामिनीविलासादाकृष्यात्र केनचित्प्रक्षिप्तः स्यात्.

# श्रीमदप्पयदीक्षितविरचितं[1]
# वैराग्यशतकम् ।

आस्ते कश्चन भिक्षुः संगृह्णन्नव्ययानि दश[2] ।
न ममेत्यव्ययुगलं याचामस्तं किमस्त्यन्यत् ॥ १ ॥
धीसचिवं धैर्यबलं संकल्पविरोधि शान्तिघनम् ।
विश्वत्रयविषयमिदं वैराग्यं नाम साम्राज्यम् ॥ २ ॥
राज्ञो बिभेति लोको राजानः पुनरितोऽपि वैरिभ्यः ।
आ ब्रह्मणः कृतान्तादकुतोभयमस्पृहाराज्यम् ॥ ३ ॥

---

१. अप्पयदीक्षितसहोदरस्याप्ययदीक्षितस्यैव वा पौत्रेण नारायणदीक्षितपुत्रेण नीलकण्ठदीक्षितेन नीलकण्ठचम्पूप्रारम्भे 'अष्टत्रिंशदुपस्कृतसप्तशताधिकचतुःसहस्रेषु (४७३८)। कलिवर्षेषु गतेषु ग्रथितः किल नीलकण्ठविजयोऽयम् ॥' इति स्वग्रन्थनिर्माणसमयो लिखितः. अर्थात् १६३७ मिते ख्रिस्तसंवत्सरे नीलकण्ठचम्पू रचित.. तस्मात्ख्रिस्तसंवत्सरीयषोडशशतकसमाप्त्यासन्नसमये श्रीमदप्पयदीक्षित आसीदिति ज्ञायते. नीलकण्ठचम्पूप्रारम्भे 'लीलालीढपुराणसूक्तिशकलावष्टम्भसंभावनापर्यस्तश्रुतिसेतुभिः कतिपयैर्नीते कलौ सान्द्रताम् । श्रीकण्ठोऽवततार यस्य वपुषा कल्क्यात्मना वाच्युतः श्रीमानप्पयदीक्षितः स जयति श्रीकण्ठविद्यागुरुः ॥' इत्यप्पयदीक्षितप्रशंसापरं पद्यं वर्तते. अप्पयदीक्षितकृता बहवो ग्रन्थाः सन्तिः, तन्मध्याद्यावधि ज्ञाता ग्रन्थास्त्वेते–(१) आत्मार्पणस्तुतिः, (२) उपक्रमपराक्रमः, (३) कुवलयानन्दः, (४) चतुर्मतसारसंग्रहः (नयमञ्जरी), (५) चन्द्रकुलास्तुतिः, (६) चित्रमीमांसा, (७) दशकुमारचरितसंक्षेपः, (८) नामसंग्रहमाला, (९) ब्रह्मतर्कस्तवः, (१०) भक्तिशतकम्, (११) भारततात्पर्यसंग्रहः, (१२) मध्वमतविध्वंसः, (१३) रत्नत्रयपरीक्षा, (१४) रसिकरञ्जनी (कुवलयानन्दटीका), (१५) रामायणसारस्तवः, (१६) वरदराजशतकम्, (१७) वादनक्षत्रमालिका, (१८) विधिरसायनसुखोपजीविनी, (१९) वीरशैवम्, (२०) वृत्तिवार्तिकम्, (२१) वैराग्यशतकम्, (२२) शब्दप्रकाशः, (२३) शारीरकन्यायरक्षामणिः, (२४) शिवकर्णामृतं सटीकम्, (२५) शिवतत्त्वविवेकः, (२६) शिवादित्यमणिदीपिका, (२७) शिवाद्वैतनिर्णयः, (२८) शिवार्चनचन्द्रिका, (२९) सिद्धान्तलेशसंग्रहः (३०) हरिवंशसारचरितम्, आचारनवनीतकर्ता अप्पयः, गौरीमायूरमाहात्म्यकर्ता अप्पादीक्षितः, शब्दरत्नावलीकर्ता अप्पासूरिः, एते त्रयोऽप्यप्पयदीक्षिताद्भिन्नाः. २. 'ज्ञानं वैराग्यमैश्वर्यं तपः सत्यं क्षमा धृतिः । द्रष्टृत्वमात्मसंबन्धो ह्यधिष्ठातृत्वमेव च । अव्ययानि दशैतानि नित्यं तिष्ठन्ति शंकरे ॥' अत एव 'दशाव्ययः' इति शिवस्य नामापि. 'कङ्कटीकजटाटीररेरिहाणदशाव्ययाः' इति शिवपर्यायेषु शब्दार्णवः.

भिक्षाप्रदा जनन्यः पितरो गुरवः कुमारकाः शिष्याः ।
एकान्तरमणहेतुः शान्तिर्दयिता विरक्तस्य ॥ ४ ॥
ये न किमपि चेष्टन्ते कार्यप्रतिकार्ययोर्विरहात् ।
सन्तस्त एव मुक्ताः संदेहे गौतमः साक्षी ॥ ५ ॥
पततु नभः स्फुटतु मही चलन्तु गिरयो मिलन्तु वारिधयः ।
अधरोत्तरमस्तु जगत्का हानिर्वीतरागस्य ॥ ६ ॥
के चोराः के पिशुनाः के रिपवः केऽपि दायादाः ।
जगदखिलं तस्य वशे यस्य वशे स्यादिदं चेतः ॥ ७ ॥
विषया उपतिष्ठन्तां विषयैर्वा समवयन्तु करणानि ।
आन्तरमेकं करणं शान्तं यदि का ततश्चिन्ता ॥ ८ ॥
किं विषयान्परिहर्तुं वस्तव्यं मेरुकंदरेष्वबुधैः ।
नह्यद्भिरनासेक्तुं धातुषु रोहन्ति पद्मानि ॥ ९ ॥
अज्ञानमिह निदानं प्राग्रूपं जननमेव भवरोगे ।
परिपाकः संसरणं भैषज्यं नैष्ठिकी शान्तिः ॥ १० ॥
स्वेनोपभुक्तमर्थं सूकरजातिस्मरो मनुष्य इव ।
दूरे जुगुप्समानो धीरो वैराग्यमाद्रियते ॥ ११ ॥
शैशवमिव कौमारे तत्तरुणिम्नीव स इव वृद्धत्वे ।
न स्वदते धीराणां कामस्य विचेष्टितं शान्तौ ॥ १२ ॥
शतशः परीक्ष्य विषयान्सद्यो जहति क्वचित्क्वचिद्धन्याः ।
काका इव वान्ताशनमन्ये तानेव सेवन्ते ॥ १३ ॥
चरमौ मातापितरौ चरमा गृहिणी सुताश्चरमाः ।
कर्तव्येऽपि प्रेमणि कथमिह धीरा विरज्यन्ते ॥ १४ ॥
तृणवद्भ्रमन्ति चपलाः स्त्रीनामनि चण्डमारुते चलति ।
धरणिधरा इव सन्तस्तत्र न किंचित्प्रकम्पन्ते ॥ १५ ॥

१. 'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापायादपवर्गः' ( १।१।२ ) इति गौतमसूत्रम्. २. मनः.

कामिजनपरमभोग्ये कामसुखे धारयन्ति बीभत्सम् ।
सन्तः शमसुखरसिकाः सुधाशनाः सूकरान्न इव ॥ १६ ॥
विक्षेपमात्रभाजो विकासकाष्ठागतज्ञानाः ।
स्वस्यापि चेष्टितानि स्वयमीक्षन्ते परस्येव ॥ १७ ॥
अस्थानेऽभिनिविष्टान्मूर्खानस्थान एव संतुष्टान् ।
अनुवर्तन्ते धीराः पितर इव क्रीडतो बालान् ॥ १८ ॥
पुष्णति पुरुषे सलिलैर्मुष्णति पुष्पं फलं च तरव इव ।
वर्तन्ते सन्तः सममुपकर्तरि चापकर्तरि च ॥ १९ ॥
नित्यानित्यविवेकः सर्वेषां घटघटत्वयोरास्ते ।
स विवेको यः शान्तिकृदविवेकोऽन्यः समस्तोऽपि ॥ २० ॥
अनधिगते कामसुखे कालेन यथा प्रवर्तते तरुणः ।
एवं ब्रह्मसुखेऽपि प्रवर्तते कोऽपि भाग्यवशात् ॥ २१ ॥
पुत्रगुणाः स्वातन्त्र्ये दारगुणाश्चा[1]धिवेदनावसरे ।
भ्रातृगुणा दा[2]यविधौ द्रष्टव्या मोक्ष्यमाणेन ॥ २२ ॥
का मे गतिरिति पृच्छति चरमश्वासेऽपि यः स्वार्थम् ।
तस्य जनस्यापि कृते पापाः पापानि कुर्वन्ति ॥ २३ ॥
पितृभिः कलहायन्ते पुत्रानध्यापयन्ति पितृभक्तिम् ।
परदारानुपयन्तः पठन्ति शास्त्राणि दारेषु ॥ २४ ॥
शान्तिरलभ्यादुपरतिरपात्रभावः प्रतिग्रहनिवृत्तिः ।
क्षान्तिर्दुर्बलतेति च निवृत्तिधर्माः कलावेते ॥ २५ ॥
नीतिज्ञा नियतिज्ञा वेदज्ञा अपि भवन्ति शास्त्रज्ञाः ।
ब्रह्मज्ञा अपि लभ्याः स्वाज्ञानज्ञानिनो विरलाः ॥ २६ ॥
कलिकलुषे मनसि स्वे कथमिव जगदार्जवं लभते ।
चक्षुर्दोषे जाग्रति चन्द्रद्वित्वं कुतो यातु ॥ २७ ॥

---

१. तस्याः सपत्नीसंपादनावसरे, विवाहान्तरकरणकाल इति यावत्. २. विभागावसरे.

विषयाननुकूलयितुं विषयिणि हृदये विधीयतां यत्नः ।
दृशि देयमौषधं को दृश्ये दत्त्वा सुखी भवति ॥ २८ ॥
दाराः पुत्रेषु रताः पुत्राः पितृधनपरिग्रहव्यग्राः ।
रोदनशरणा जननी परलोकगतस्य को बन्धुः ॥ २९ ॥
पश्यन्ति म्रियमाणान्मरिष्यतोऽनुमिमते स्मरन्ति मृतान् ।
कथयन्ते चैवमसच्चेष्टन्ते नित्यवत्तु परम् ॥ ३० ॥
कलहायन्ते मूढाः कः प्रतिभूः श्वः प्रभात इति ।
तस्यामेव रजन्यां कः प्रतिभूः स्वस्य सत्तायाम् ॥ ३१ ॥
कुल्याः कृता विशालाः कुड्यान्युपलैर्निबद्धानि ।
क्रीता बलिनो महिषाः कृतकृत्याः स इति मन्यन्ते ॥ ३२ ॥
आ प्रपदमा शिरस्कं चान्तः कलिमलमलीमसे वपुषि ।
विफलं गङ्गाजलमपि मद्यघटे दर्भमुष्टिरिव ॥ ३३ ॥
दण्ड्यं यत्सुखहेतोः पुष्णन्ति जनाः कथं तदेव वपुः ।
नहि शर्कराभिलाषिभिरिक्षोः काण्डानि पूज्यन्ते ॥ ३४ ॥
प्रायो मुह्यति चेतः प्राणभृतः प्राणनिर्गमावसरे ।
पुण्येन यदि न मुह्यति पुत्रानेव स्मरन्म्रियते ॥ ३५ ॥
शमयितुमौदरमग्निं संसाराख्याम्बुधौ निमज्जन्ति ।
तुहिनव्यथानिवृत्त्यै नहि वेश्मनि पावको देयः ॥ ३६ ॥
आहृत्य परित्यक्ता जनयन्त्यर्थाः सुखाभासम् ।
अत्यन्तपरित्यक्ताः परमानन्दाय कल्पन्ते ॥ ३७ ॥
अर्थानामधिकानां राज्ञा चौरेण वा नाशः ।
अन्ने खल्वतिभुक्ते वमनं वा स्याद्विरेको वा ॥ ३८ ॥
प्रणमति परिसान्त्वयति[प्रणि]पतति सदा परिभ्रमति ।
आविष्ट इव पिशाच्या पुरुषस्तृष्णावशं यातः ॥ ३९ ॥
जननादृष्टात्पितरौ पुत्रा जामातरोऽप्ययादृष्टात् ।
कलहादृष्टाज्ज्ञातय इति निर्णीते किमेष्टव्यम् ॥ ४० ॥

स्वपितुः परलोकाय स्वयमनुदिवसं यदाचरति ।
क्रियतामिदमुपमानं किं नालं पुत्रवैराग्ये ॥ ४१ ॥
अननुगते दारिद्र्ये किमनुगतं लक्षणं दृष्टम् ।
कामस्यापूर्तिर्यदि कृपणं जगदा चतुर्वदनात् ॥ ४२ ॥
न खलु धनत्वं जातिर्यस्य यदिष्टं तदेव तस्य धनम् ।
तत्तदिव पामराणामाकिंचन्यं धनं विदुषाम् ॥ ४३ ॥
स्वीक्रियते यदि तृष्णा स्वीकर्तव्यं जगत्समस्तमपि ।
स्वीक्रियते यदि शान्तिः स्वात्मापि स्वस्य भवति न वा ॥ ४४ ॥
यद्दातारं वशयति यत्परिजनमस्य सान्त्वयति ।
यदपत्रपते नान्तर्भावालाभः स कस्य समः ॥ ४५ ॥
प्रादेशमात्रमुदरं परिपूरयितुं कियानयं यत्नः ।
चुलकेनाम्भः पातुं खनितव्यः किं तटाकोऽपि ॥ ४६ ॥
यामार्धमसंस्काराद्यामद्वयमनशनाच्च सुव्यक्ते ।
शारीरे सौन्दर्येऽप्यभिनिविशन्ते कियन्मूढाः ॥ ४७ ॥
वन्ध्येत्याहुस्तरुणीं जरतीति परित्यजन्ति बहुपुत्राम् ।
अभिनिन्दन्त्यल्पसुतां का गृहिणी कामिनो हृद्या ॥ ४८ ॥
यान्ति शुचमकृतदारा द्वे भार्ये नेति कृतदाराः ।
ते परदारा नेति स्त्रीभिस्तृप्तान्न पश्यामः ॥ ४९ ॥
मदनस्याज्ञाकरणे मन्ये जगदखिलमेकरूपमिदम् ।
तिर्यञ्च इति नरा इति देवा इत्यन्यतो भेदः ॥ ५० ॥
शुक्रविमोकस्थानं मलमूत्रत्यागदेशवत्किमपि ।
स्त्रिय इति विहितं विधिना कियदत्र जना निमज्जन्ति ॥ ५१ ॥
वेदानधीत्य विधिवन्मीमांसित्वा तदर्थं च ।
दाराः कर्तव्या इति केनेदं प्रहसनं कथितम् ॥ ५२ ॥
दुःखेनोपार्ज्यन्ते पाल्यन्ते प्रत्यहं च लाल्यन्ते ।
वामाः स्त्रियो विमूढैरुपभुञ्जानाः सुखं विगुणम् ॥ ५३ ॥

अश्नीत पिबत खादत जाग्रत संविशत तिष्ठत वा ।
सकृदपि चिन्तयताहः सावधिको देहबन्ध इति ॥ ५४ ॥
किं विजितया पृथिव्या किं काञ्चनभूभृता करस्थेन ।
किं दिव्याभिः स्त्रीभिर्मर्तव्ये ब्रह्मणा लिखिते ॥ ५५ ॥
जीवति कतिचिन्निमिषान्कतिचित्तेषु श्रुतीरधीत इव ।
तावत्सैवाकुलयति तन्त्राणि नवानि चातनुते ॥ ५६ ॥
स्वल्पो जीवनकालः स्वल्पा धीः परिचयः स्वल्पः ।
तदपि तरेम कथंचिच्छ्रुतयो यदि नोपजायन्ते ॥ ५७ ॥
कुत आगतं न जाने क्व नु वा गन्तव्यमिदमपि न जाने ।
संचरसि क्वेदानीं संसारपथे महातमसि ॥ ५८ ॥
तमसावृताश्चरन्तः सविधे दूरे च नावयन्त्यर्थान् ।
अवयन्ति तु विस्पष्टं तडिताभिहते शिरसि मूढाः ॥ ५९ ॥
निमिषन्त्यत्र तरुण्यस्तत्र तरुण्यो न निमिषन्ति ।
ईदृक्षो हि विशेषः स्वर्गः स्वर्ग इति किं तत्र ॥ ६० ॥
कोपो मैत्रावरुणेः[1] शापो वा तार्किकस्य[2] मुनेः ।
संस्मर्यते यदि सकृच्छत्रोरपि मास्तु शक्रपदम् ॥ ६१ ॥
गच्छत्वमरावत्यां गच्छतु चतुराननस्य वा नगरे ।
पुनरागन्तव्यं यदि पुंसा किं साधितं भवति ॥ ६२ ॥
भुक्ता बहवो दारा लब्धाः पुत्राश्च पौत्राश्च ।
नीतं शतमप्यायुः सत्यं वद मर्तुमस्ति मनः ॥ ६३ ॥
विश्लेषणस्वभावान्पश्यन्विषयान्करोति को ममताम् ।
नश्यदवस्थापन्नं कः क्रीणीते धनैरश्वम् ॥ ६४ ॥
अन्नाभावे मृत्युः शालिभिरन्नानि शालयो वृष्ट्या ।
वृष्टिस्तपसेति वदन्नमृत्यवे तत्तपश्चरतु ॥ ६५ ॥
किं न निगृह्णन्ति मनः किं न भजन्ते जनाः शिवं शरणम् ।
अभिसंधिभेदमात्रान्मोक्षोपाये न बध्यन्ते ॥ ६६ ॥

---

१. अगस्त्यस्य. २. गौतमस्य.

भोगाय पामराणां योगाय विवेकिनां शरीरमिदम् ।
भोगाय च योगाय च न कल्पते दुर्विदग्धानाम् ॥ ६७ ॥

ब्राह्मणचण्डाला इत्याह मुनिर्यन्महापथिकान् ।
भवमार्गमहापथिकानधिकृत्यैव प्रवर्तितं चैतत् ॥ ६८ ॥

एकद्वाः क्षितिपतिषु द्वित्रा देवेषु पञ्चषा द्रुहिणे ।
एतावन्तो जगति ब्रह्मानन्दार्णवस्य कणाः ॥ ६९ ॥

अज्ञानेनापिहिते विज्ञाने कर्म किं कुरुते ।
विकले चक्षुषि तमसा व्यादाय मुखं किमीक्षेत ॥ ७० ॥

अतिकलुषमाशुनश्वरमापातस्फुरणमनभिलाषकरम् ।
अपि हृष्यन्ति जनाः कथमवलम्ब्य ज्ञानखद्योतम् ॥ ७१ ॥

अयुतं नियुतं वापि प्रदिशन्तु प्राकृताय भोगाय ।
क्रीणन्ति न बिल्वदलैः कैवल्यं पञ्चषैर्मूढाः ॥ ७२ ॥

यावत्किल चेष्टन्ते तावत्पाशे निबध्यते ग्रन्थिः ।
निभृतं यदि वर्तन्ते कालेन स्रंसते पाशः ॥ ७३ ॥

उपरुन्धन्ति श्वासान्मुनयो नाश्नन्ति न पिबन्ति ।
स्तूयन्ते सुजनैः किं कण्ठे कुर्वन्ति कनकपाशमिमे ॥ ७४ ॥

कामं जनाः स्मयन्ते कैलासविलासवर्णनावसरे ।
साधनकथनावसरे साचीकुर्वन्ति वक्त्राणि ॥ ७५ ॥

चङ्गाः कथमङ्गाः कथमित्यनुयुङ्क्ते वृथा देशान् ।
कीदृक्कृतान्तपुरमिति कोऽपि न जिज्ञासते लोकः ॥ ७६ ॥

त्यक्तव्यो ममकारस्त्यक्तुं यदि शक्यते नासौ ।
कर्तव्यो ममकारः किं तु स सर्वत्र कर्तव्यः ॥ ७७ ॥

पुत्रा इति दारा इति पोष्यान्मूर्खो जनान्ब्रूते ।
अन्धे तमसि निमज्जन्नात्मा पोष्य इति नावैति ॥ ७८ ॥

यच्चिन्तितमधिगर्भं यच्च चिरं चिन्तितं नरके ।
विषयानिलसंसर्गान्ममृजे तत्सर्वमेकपदे ॥ ७९ ॥

बाह्यगतागतशीला प्राणस्य श्वासलक्षणा वृत्तिः ।
कर्षति मनसो वृत्तिं कुलटेव कुलस्त्रियं मुग्धाम् ॥ ८० ॥
अतिगम्भीरमनाविलमक्षोभ्यमदृष्टपारमविलङ्घ्यम् ।
अविरलतरङ्गसंकुलमैक्षिषि विज्ञानसागरं महताम् ॥ ८१ ॥
घोरं भवमपहातुं केचिदघोरं प्रपद्यन्ते ।
संसरणकातराणां संशरणं शांभवी शक्तिः ॥ ८२ ॥
पाशो यदि मोक्तव्यः पशुपतिरेवोपसर्तव्यः ।
न खलु व्यतिमुच्यन्ते पशवः पाशेन संबद्धाः ॥ ८३ ॥
अलमलमनुभूताभिर्मातृभिरलमस्तु पितृभिश्च ।
भवितव्यं यदि नित्यवदर्थं मातुः पितुश्चास्तु ॥ ८४ ॥
धन्यास्ते बहुदेवाः स्वामिनि येषां न दुर्भिक्षम् ।
जातु न जानीमो वयमेकं तं स्वामिनं पूर्णम् ॥ ८५ ॥
सन्तु बृहन्तो देवाः किं तु न तान्नन्तुमीहते चेतः ।
आढ्यवदान्यन्यायादन्तकजितमेव चिन्तयेन्मनसि ॥ ८६ ॥
निध्यायसि विषयसुखं न ध्यायसि विषममस्य परिपाकम् ।
बन्धुं तमेव चिन्तय बद्धुं मोक्तुं च यः क्षमते ॥ ८७ ॥
सदनं गुरूपसदनं शरणं पञ्चाक्षरीपुरश्चरणम् ।
धनमभिलाषनिरोधनमन्त्याश्रमवर्तिनां पुंसाम् ॥ ८८ ॥
कौ पितरौ कः पुत्रः कः स्वामी यः प्रपञ्चस्य ।
प्रत्यस्तमिते भेदे किमिदं किमिदमिति विप्रश्नः ॥ ८९ ॥
स विधिर्यच्चे विदधति स प्रतिषेधो यतो निवर्तन्ते ।
सोपनिषद्यद्ब्रुवते शैवाश्रमवर्तिनो धीराः ॥ ९० ॥
त्यज संसारमसारं भज शरणं पार्वतीरमणम् ।
विश्वसिहि श्रुतिशिखरं विश्वमिदं तव निदेशकरम् ॥ ९१ ॥
भव्यमभव्यं वा नः प्रलिखतु वेधाः सुदुर्मेधाः ।
सव्यमसव्यं वा नः शरणं चरणं महेशस्य ॥ ९२ ॥

वेधाः कथं हरिः कथमिति तु प्रश्ने वयं मूकाः ।
शिवमेकं जानीमो न शिवादन्यं विजानीमः ॥ ९३ ॥
दारुणमसिपत्रवनं दारुणतममन्धतामिस्रम् ।
का वा ततः क्षतिर्नः शैवा वयमा चतुर्वेदनात् ॥ ९४ ॥
कृतदीक्षो घोरमखे कुलकूटस्थो भरद्वाजः ।
विद्येश्वरेषु कश्चन पितामहो न इति विस्रम्भः ॥ ९५ ॥
कलहः कदापि मास्त्विति कलितशरीरैक्ययोः शिवयोः ।
अहमस्म्यहमस्मीति प्राप्तः कलहो मम त्राणे ॥ ९६ ॥
नरकायापि न भोगान्नराधमायापि नान्यसुरान् ।
मन्यन्ते कतिचिदमी माहेश्वरमाश्रिता योगम् ॥ ९७ ॥
ज्ञातुं हातुं विषयं श्रोतुं मन्तुं गृहीतुमात्मानम् ।
वत्सा यदि न हि घटते तत्साधयताविमुक्ताय ॥ ९८ ॥
सांख्यं योगं निगमा भक्तिः कर्म प्रतीतिरिति ।
एकत्र सकलमेतत्केवलमविमुक्तमेकत्र ॥ ९९ ॥
बद्धः कस्ते वक्ष्यति मुक्तो मुक्तिं विजानाति ।
यास्यसि चेदविमुक्तं ज्ञास्यसि विश्वेश्वरस्य मुखात् ॥ १०० ॥
न गृहीतं श्रुतिहृदयं नचन गृहीतं परिप्लवं हृदयम् ।
इच्छामि च धाम परं गच्छामि तु विश्वनाथपुरीम् ॥ १०१ ॥

इति श्रीमदप्पयदीक्षितविरचितं वैराग्यशतकं संपूर्णम् ।

---

## पण्डितराजश्रीजगन्नाथकृता
## अमृतलहरिः[1] ।

मातः पातकपातकारिणि तव प्रातः प्रयातस्तटं
यः कालिन्दि महेन्द्रनीलपटलस्निग्धां तनुं वीक्षते ।
तस्यारोहति किं न धन्यजनुषः स्वान्तं नितान्तोल्लस-
न्नीलाम्भोधरवृन्दवन्दितरुचिर्देवो रमावल्लभः ॥ १ ॥

---

१. यमुनास्तुतिरूपोऽयं ग्रन्थः.

नित्यं पातकभङ्गमङ्गलजुषां श्रीकण्ठकण्ठत्विषां
तोयानां यमुने तव स्तवविधौ को याति वाचालताम् ।
येषु द्राग्विनिमज्ज्य सज्जतितरां रम्भाकराम्भोरुह-
स्फूर्जच्चामरवीजितामरपदं जेतुं वराको नरः ॥ २ ॥
दानान्धीकृतगन्धसिन्धुरघटागण्डप्रणालीमिल-
द्भृङ्गालीमुखरीकृताय नृपतिद्वाराय बद्धोऽञ्जलिः ।
त्वत्कूले फलमूलशालिनि मम श्लाघ्यामुरीकुर्वतो
वृत्तिं हन्त मुनेः प्रयान्तु यमुने वीतज्वरा वासराः ॥ ३ ॥
अन्तर्मौक्तिकपुञ्जमञ्जिम[1] बहिः स्निग्धेन्द्रनीलप्रभं
मातर्मे मुदमातनोतु करुणावत्या भवत्याः पयः ।
यद्रूपद्वयधारणादिव नृणामा चूडमामज्जतां
तत्कालं तनुतेतरां हरिहराकारामुदारां तनुम् ॥ ४ ॥
तावत्पापकदम्बडम्बरमिदं तावत्कृतान्ताद्भयं
तावन्मानसपद्मसद्मनि भवभ्रान्तेर्महानुत्सवः ।
यावल्लोचनयोः प्रयाति न मनागम्भोजिनीबन्धुजे
नृत्यत्तुङ्गतरङ्गभङ्गिरुचिरो वारां प्रवाहस्तव ॥ ५ ॥
कालिन्दीति कदापि कौतुकवशात्त्वन्नामवर्णानिमा-
न्व्यस्तानालपतां नृणां यदि करे खेलन्ति संसिद्धयः ।
अन्तर्ध्वान्तकुलान्तकारिणि तव क्षिप्तामृते वारिणि
स्नातानां पुनरन्वहं स महिमा केनाधुना वर्ण्यते ॥ ६ ॥
स्वर्णस्तेयपरानपेयरसिकान्पाथःकणास्ते यदि
ब्रह्मघ्नान्गुरुतल्पगानपि परित्रातुं गृहीतव्रताः ।
प्रायश्चित्तकुलैरलं तदधुना मातः परेताधिप-
प्रौढाहंकृतिहारिहुंकृतिमुचामग्रे तव स्रोतसाम् ॥ ७ ॥
पायं पायमपायहारि जननि स्वादु त्वदीयं पयो
नायं[2] नायमनायनीमकृतिनां मूर्तिं दृशोः कैशवीम् ।

१. मौक्तिकसमूहवन्मञ्जुलम्, अतिशुभ्रमित्यर्थः. २. अकृतिनां पापिनामनायनीम-

स्मारं स्मारमपारपुण्यविभवं कृष्णेति वर्णद्वयं
चारं चारमितस्ततस्तव तटे मुक्तो भवेयं कदा ॥ ८ ॥

मातर्वारिणि पापहारिणि तव प्राणप्रयाणोत्सवं
संप्राप्तेन कृतां नरेण सहतेऽवज्ञां कृतान्तोऽपि यत् ।
यद्वा मण्डलभेदनादुदयिनीश्चण्डद्युतिर्वेदना-
श्चित्रं तत्र किमप्रमेयमहिमा प्रेमा यदौत्पत्तिकः ॥ ९ ॥

संज्ञाकान्तसुते कृतान्तभगिनि श्रीकृष्णनित्यप्रिये
पापोन्मूलिनि पुण्यधात्रि यमुने कालिन्दि तुभ्यं नमः ।
एवं स्नानविधौ पठन्ति खलु ये नित्यं गृहीतव्रता-
स्तानामन्त्रितसंख्यजन्मजनितं पापं क्षणादुज्झति ॥ १० ॥

अयं पण्डितराजेन श्रीजगन्नाथशर्मणा ।
स्तवः कलिन्दनन्दिन्या निर्मलो निरमीयत ॥ ११ ॥

इति पण्डितराजश्रीजगन्नाथकृतामृतलहरिः समाप्ता ।

---

## महाकविश्रीरत्नाकरविरचिता
## वक्रोक्तिपञ्चाशिका ।

वल्लभदेवकृतया पञ्चिकया समेता ।

वागीश्वरीं नमस्कृत्य गणानां च तथेश्वरम् ।
वक्रोक्तिवर्णने रात्ने पञ्चिका क्रियते लघुः ॥

---

नयविषयाम्. परोक्षामित्यर्थः. कैशवीं मूर्तिं दृशोर्गोचरे नायं नायं नीत्वा नीत्वा.

१. यमुनाया यमो भ्राता, सूर्यश्च पिता. तस्मात्ताववज्ञां पीडां च सहेते. २. आमन्त्रितानि 'संज्ञाकान्तसुते' इत्यादीनि संबोधनपदानि. तत्संख्यजनितम्. सप्तजन्मकृतमिति यावत्. संज्ञा सूर्यस्य पत्नी. ३. अयं रत्नाकरमहाकविः कश्मीरदेशेऽवन्तिवर्मणो राज्यकाले समुत्पन्नः. 'मुक्ताकणः शिवस्वामी कविरानन्दवर्धनः । प्रथां रत्नाकरश्चागात्साम्राज्येऽवन्तिवर्मणः ॥' इति राजतरङ्गिणी (५।३९). अवन्तिवर्मराज्यकालस्तु ८५५ मितात्खिस्तसंवत्सरादारभ्य ८८४ पर्यन्तमासीत्. रत्नाकरप्रणीतं हरविजयाभिधं पञ्चाशत्सर्गात्मकं महाकाव्यं कश्मीरेषु प्रसिद्धमस्ति. ४. मल्लिनाथाद्बहुतरप्राचीनो वल्लभदेवस्तु खिस्तसंवत्सरीयदशमशतकस्य पूर्वार्धे बभूव. यत एतत्पौत्रेण चन्द्रादित्यपुत्रेण कय्यटेनानन्दवर्धनकृतदेवीशतकस्य टीकायां समाप्तौ 'वल्लभदेवायनितश्चन्द्रादित्यादवाप्य जन्मेमाम् । कय्यटनामारचयद्विवृतिं दे-

सव्यालम्बनमेतदद्य भवतो निःस्नेह मुञ्चाम्यहं
सव्यालं विजहीहि सुन्दरि वनं निःस्नेहता नास्ति मे।
मैवं वक्ष्यसि किं वनं ननु जलं मूर्ध्ना मयैवोह्यते
वक्रोक्त्येति हिमाद्रिजामवचसं कुर्वन्हरः पातु वः॥ १॥

सव्यालम्बनं वामभागावस्थानम्, सव्यालं व्यालैर्दुष्टसत्त्वैः सहितं वनं च। दन्त्यौष्ठ्ययोर्हि शब्दालंकारेषु यमकवक्रोक्त्यादिषु न तथा कवयो भेदग्राहिणः। मैवम्। कुटिल कस्य वनविवक्षेत्यर्थः। वक्ष्यसि कथयिष्यसि, धारयिष्यसि च। 'वह प्रापणे' धातोः। वनं काननम्, जलं च। अवचसं जित्वा निर्वचनाम्॥

त्वं हालाहलभृत्करोषि मनसो मूर्छां ममालिङ्गितो
हालां नैव बिभर्मि नैव च हलं मुग्धे कथं हालिकः।
सत्यं हालिकतैव ते समुचिता सक्तस्य गोवाहने
वक्रोक्त्येति जितो हिमाद्रिसुतया स्मेरो हरः पातु वः॥ २॥

हालाहलं विषविशेषम्, हालां सुराम्, हलं सीरं च। आलिङ्गितस्त्वं मम मनसो मूर्छां करोषीति संबन्धः। गौरेव वाहनं गोवाहनम्, गोश्च वृषभस्य वाहनं प्रेरणम्। हलं वहतीति हालिकश्च। 'हलसीराट्ठक्'। स्मेरः सहासः॥

त्वं मे नाभिमतो भवामि सुतनु श्वश्र्वा अवश्यं मतः
साधूक्तं भवता न मे रुचित इत्यत्र ब्रुवेऽहं पुनः।
मुग्धे नास्मि नमेरुणा ननु चितः प्रेक्षस्व मां पातु वो
वक्रोक्त्येति हरो हिमाचलभुवं स्मेराननां मूकयन्॥ ३॥

मे नाभिमतो मे मम नाभिमतो न रुचितः, मेनायाश्च निजश्वश्र्वाभिमतः। मेना हिमाचलस्त्री। न मे रुचितो न मे मम रुचितोऽभिमतः, नमेरुणा वन्यफलविशेषेण च चितो व्याप्तः॥

---

वीशतकस्तोत्रे॥ वसुमुनिगगनोदधि (४०७८) समकाले याते कलेस्तथालोके। द्वापञ्चाशे वर्षे रचितेयं भीमगुप्तनृपे॥' इत्यलेखि. भीमगुप्तश्च ९७५ मितख्रिस्तसंवत्सरादारभ्य सपादं वर्षचतुष्टयं कश्मीरान्बुभोज. कश्मीरदेशप्रसिद्धो लोकाब्दश्च तदानीं द्विपञ्चाशन्मित आसीदित्यर्थः. लोकाब्दश्च सदा शतसंख्यातो न्यून एव तिष्ठति. वल्लभदेवकृता रघुवंश-कुमारसंभव-मेघदूत-शिशुपालवध-सूर्यशतकादिटीकाः समुपलभ्यन्ते. देवीशतकस्यापि संक्षिप्तं टिप्पणं वल्लभदेवेन कृतम्. सुभाषितावलीसंग्रहकर्ता वल्लभदेवस्त्वन्यः. स च ख्रिस्तसंवत्सरीयपञ्चदशशतकपूर्वार्धतो न प्राचीनः.

नो संध्याहितमत्सरा तव तनौ वत्स्याम्यहं संधिना
न प्रीतासि वरोरु चेत्कथय तत्प्रस्तौमि किं विग्रहम् ।
कार्यं तेन न किंचिदस्ति शठ मे वीनां ग्रहेणेति वो
दिश्याद्वः प्रतिबद्धकेलिशिवयोः श्रेयांसि वक्रोक्तयः ॥ ४ ॥

संध्याया दिनरात्र्यो रात्रिदिनयोश्च मध्यस्थायाः पितृप्रसूः, संधिना संयोगेन चाहितो मत्सरो यस्याः सा संध्याहितमत्सरा । विग्रहो विरोधः, वीनां पक्षिणां च ग्रहो ग्रहणम् । शिवश्च शिवा च शिवौ । एकशेषः । तयोः शिवयोः ॥

न त्वं संप्रतिभासि वातरशनस्त्यक्ता त्वया किं त्रपा
मुग्धे संभविनी न वातरशना को मेखलाया विभो ।
संबन्धोऽत्र किमेतदाह भवती स्यात्ते खलत्वं कुतः
श्रेयांसीति करोतु वः प्रियतमां सूक्त्या हरो हासयन् ॥ ५ ॥

वाता गता रशना यस्य, वातरशनो दिगम्बरः । वातो वायुश्च रशना मेखला यस्य । मेखलाया रशनायाः, मे मम च खलाया दुष्टायाः । हासयन्सहासां कुर्वन् ॥

नासूयाम्यहमस्थिराजय इह त्वद्देहभागे कथं
मुग्धे संयुगभग्नदानवगणा नैव स्थिरा त्वं जये ।
मूढेनेव जया वदेति भवताकस्मात्किमामन्त्र्यते
वक्रोक्त्येति पुनातु वो गिरिभुवा मूकीकृतः शंकरः ॥ ६ ॥

असूयाम्युद्विजे । अस्थिराजयेऽस्थ्नां कीकसानां राजिः पङ्क्तिस्तस्यै कीकसश्रेणये, पदभङ्गे, जये जयविषयेऽस्थिरा चटुला च । हे मुग्धे रणभग्नदैत्यगणा त्वं जयेऽनभिभवे नैव स्थिरा । काका स्थिरैवासीत्यर्थः । जये जयाभिधाने, प्रतीहारिणि च । अत एव त्वया मूढेनेव त्वं वदेति जया जयाभिधा प्रतीहार्यकस्मादेव निर्हेतु किमामन्त्र्यते किमाहूयते । इति गिरिभुवा पार्वत्या वक्रोक्त्या मूकीकृतो निर्वचनीकृतः ॥

सालंकारतया त्वया मम कथं नेन्दोः कला दृश्यते
पश्यामीन्दुकलां स्फुटं पुनरिदं लङ्कारता नास्मि यत् ।
नो भूषाविषयं मयोदितमिदं स्वामिन्क भूः काप्युषा
दिश्याददद्रिसुतानृजूक्तिविजितः शूली स वः संपदः ॥ ७ ॥

सा प्रसिद्धालंकारतया भूषणत्वेन, लङ्कायां च रावणपुर्यां रतया सक्तया । भूषालंकारः । वक्रोक्तौ तु भूश्च भूमिश्च, उषा बाणसुता च भूषा तद्विषयम् ॥

कोपं संप्रति मुञ्च देवि विनते मय्येष बद्धोऽञ्जलि-
नैवाहं विनता निरागसममुं बध्नासि किं न्वञ्जलिम्।
मुग्धे नोक्तमिदं मया स्फुटमिदं त्वं मुग्ध इत्थं ब्रुव-
न्सूक्त्या शैलभुवा विनिर्जित इति त्र्यक्षः शिवायास्तु नः॥ ८॥

विनते प्रह्वे मयि, विनता गरुडमाता च तस्या आमन्त्रणं हे विनते। मुग्धे इत्याम-न्त्रणं हे मुग्धे, नेति निषेधे मया नोक्तमिदम्। वक्रोक्तौ तु मुग्धेनेति तृतीया। मुग्धेन मूढेन॥

द्वीपिन्यत्र तवेश मूर्धनि न मे जाताधुना निर्वृति-
र्यो मूर्धा दयिते कथं स भवति द्वीपीति नावैषि किम्।
स्यान्नावा स्थल एव ता यदिह किं कार्यं ययैमीति वो
दिश्यान्मङ्गलमद्रिजानृजुगिरा स्मेरः स्मरारिर्जितः॥ ९॥

द्वीपिनी नदी गङ्गा। 'स्रोतस्वती द्वीपवती' इत्यमरः। वक्रोक्तौ तु गङ्गाधारणाद्द्विधा गता आपो यत्र स द्वीपी मूर्धा, द्वीपी शार्दूलश्च। 'शार्दूलद्वीपिनौ' इत्यमरः। निर्वृतिः सुखम्। नावैषि न जानासि। नावा च तरण्या एष्यागच्छसि। यया नावा एम्यागच्छामि। अद्रिजया पार्वत्या। अनृजुगिरा वक्रोक्त्या जितः। स्मेरः सहासः॥

द्यूते मां प्रति देव कीदृशमिहाकार्षीः पणं देवकी-
दृष्ट्या किं क्रियतेऽत्र नाभिहितवत्यसीति किं भाषसे।
स्यात्किं सुन्दरि नाभये वद हितं यत्तेऽस्ति गौरीमिति
त्र्यक्षः स्मेरमुखीं जयन्कुटिलया वाचास्तु वः श्रेयसे॥ १०॥

देव कीदृशमिति। हे देव कीदृशं कथंभूतम्, देवक्याश्च श्रीकृष्णमातुर्दृशं दृष्टिम्। नाभिहितवती नोक्तवती, नाभये च हितवत्यनुकूला॥

त्वामालिङ्गितुमादृतं बहुभुजं जानामि धन्यं चिरा-
दात्मानं दयिते किमेष बहुभुक्तन्वीति मैवाभिधाः।
स्यात्तैवास्ति यतो ममानशनता सत्यं न नश्यत्यसा-
वाधेयादिति नः शिवं गिरिसुतासूक्त्या शशाङ्की जितः॥ ११॥

बहुभुजं सहस्रबाहुम्, बहु भुनक्तीति बहुभुक्तं प्रभूताशिनं च। एषोऽहं हे तन्वि इति मैवाभिधाः। अनशनता नाशनं भोजनं यस्य सोऽनशनं न नाशनं नाशो यस्यासा-वनशनस्तद्भावोऽनशनता। आधेयात्क्रियात्। सूक्तिः शुभाषितोक्तिः। वक्रोक्तिरित्यर्थः॥

अस्मिन्सानुमति प्रिये न रमसे कस्मान्मुधा खेदिनी
नाहं सानुमती प्रिया सुभग ते येनेत्थमामन्त्रिता ।
सज्जानास्यभिभाषितं सुवदने सज्जा स्थितैवास्मि ते
वक्तुं पृच्छ यदीच्छसीति विजितो गौर्यावताद्वो हरः ॥ १२ ॥

मुधा व्यर्थं खेदिनी सानुमति पर्वते । परत्र हे सानुमति । सानुमती नामाप्सराः । सत्साधु जानासि वेत्सि । वक्रोक्तौ तु सज्जा सावधाना नासि न भवसि । वक्तुं सज्जा सावधानैवास्मि यदि त्वं पृच्छसीति गौर्या विजितः ॥

इष्टा गौरवशालिनी त्वमधिकं तन्वङ्गि मे सर्वदा
नेष्टाहं शठ गौः कदाचिदवशा नैवालिनी च क्वचित् ।
वक्रोक्तौ तव जृम्भते कुशलता स्याद्दर्भवल्ल्यात्र किं
देव्या वोऽनृजुवाक्यनिर्जित इति त्र्यक्षः क्षिणोतु द्विषः ॥ १३ ॥

गौरवशालिनी बहुमानश्लाघिनी । परत्र । गौः, अवशा, अलिनी च । अलिनी भ्रमरी । कुशलता कौशलम्, कुशानां च लता वल्ली । अनृजुवाक्येन वक्रोक्त्या विजितः । क्षिणोतु क्षपयतु ॥

नो दीव्यामि सहामुनाहमधुना द्यूते प्रवीणो हरः
सत्यं देवि हरोऽस्मि नैव तु पुनर्वीणा प्रकृष्टास्ति मे ।
केनागादि तवेदृशं शिरसि मे नास्त्येव नागादि भोः
पार्वत्येति हतोत्तरो हरतु वः सूक्त्या विभुः कल्मषम् ॥ १४ ॥

अधुनामुना शंभुना सह नो दीव्यामीति सखीं प्रति पार्वत्युक्तिः । अत्र हेतुमाह— द्यूत इत्यादि । प्रवीणः कुशलः, प्रकृष्टवीणश्च । हरः शिवः, हर्ता च पणम् । अगादि कथितम् । 'गद व्यक्तायां वाचि' । वक्रोक्तौ तु के शिरसि नागादि नागः सर्प आदिर्यस्य तन्नागादि मे नास्त्येव । भोः शंभो ॥

नो शक्तास्मि पतत्रिमार्गमधुना मूर्धानमेतं तव
द्रष्टुं नैव पतत्रिणां प्रियतमे मार्गोऽस्ति मूर्धा क्वचित् ।
नन्वेतद्विगलत्सुरापगमहं द्वेष्मि प्रिये नो सुरा-
नद्यस्मिन्गलतीति वक्रमुदितं देव्या विभोः पातु वः ॥ १५ ॥

पतत्रिमार्गं पतन्ती त्रिमार्गा गङ्गा यस्मात्तं वहद्गङ्गम्, पतत्रिणां पक्षिणां मार्गं पन्थानं च । ननु निश्चये । अहमेतत्त्वच्छिरो विगलत्सुरापगं गलद्गङ्गं द्वेष्मीति

पार्वत्युक्तिः। सुराणां देवानामापगा नदी गङ्गा। वक्रोक्तौ तु सुराया हालायाश्चापगा नदी सुरापगा॥

उच्चैः किं न दधास्युषाकरकृते केशग्रहे त्वं शिरो
मुग्धे नात्र कृतः कचग्रह उषाहस्तेन मे कुत्रचित्।
सोमं वच्मि शठ त्वया विरहितः सोमोऽस्मि नेत्यन्यथा
मा ब्रूहीति हतोत्तरामगभुवं कुर्वन्हरः पातु वः॥ १६॥

उच्चैरित्यादि पार्वत्युक्तिः। उषाकरकृत उषां रात्रिं करोतीत्युषाकरश्चन्द्रस्तेन कृते केशग्रह उच्चैरुन्नतं शिरः किं न दधासीत्युपहासः। वक्रोक्तौ तु। उषायाश्च बाणदुहितुः करो हस्तः। हे शठ सोमं वच्मि। वक्रोक्तौ तु सोमम्, उमासहितं च। त्वया विरहितो वियुक्तोऽहमेव सोमः। सहोमया वर्तते योऽसौ सोमः। सोमो नास्मीत्यन्यथा मां ब्रवीः। त्वया युक्त एव सोमोऽस्मीति। शठेति मा वदेत्यर्थः॥

जेतुं नाथ न वक्रतावहितया शक्यो गिरा त्वं मया
प्रत्यग्रः सुतनु क्रतुः कथय को यत्राहितत्वं तव।
किं तत्स्यादहितत्त्वमत्र दयिते नागेश्वरः पृच्छ्यता-
मित्यव्यात्कुटिलोक्तिनिर्जितहिमक्ष्माभृत्सुतो वः शिवः॥ १७॥

वक्रतावहितया वक्रतायां वक्रोक्ताववहितया सावधानया मया न त्वं जेतुं शक्यः। परत्र। नवक्रतौ नवयज्ञेऽहितया विपक्षभूतया। अहितत्वमहितस्य भावोऽहितत्वम्, अहीनां सर्पाणां तत्वमहितत्त्वम्। अत्राहितत्त्वमित्यस्याहितत्त्वार्थे व्यञ्जनद्वयभावेऽपि न दोषः। हलः परस्यैकस्य व्यञ्जनत्वाद्द्वयोर्वा यमकचित्रवक्रोक्त्यादौ विशेषभावस्य स्मृतेः। यथा 'शुक्ले शुक्लेशनाशम्' इत्यादौ 'शुक्ले शुक्ले' इति यमके सति शुक्ले शुक्लगुणयुक्ते शुचः क्लेशस्य च नाशं शुक्लेशनाशं दिशतीत्यर्थः संपद्यते। यदुक्तम्—'यमकश्लेषचित्रेषु दन्त्योष्ठवबकारयोः। न भेदो रलयोश्चैव न नकारमकारयोः॥ हलः परस्य चैकस्य व्यञ्जनस्य द्वयोरपि। न विशेषो विसर्गस्य भवेच्च सदसत्त्वयोः॥' इति॥

खिन्नाहं बहुनागसा तव विभो गङ्गानुबद्धस्थिते-
र्नागस्त्वय्यपि मे नताङ्गि मयि ते नागोऽस्ति नो कुत्रचित्।
सुभ्रूर्नाहमिति ब्रवीम्यवितथं ना त्वं यतोऽनुत्तम-
स्त्वासीष्टेत्यनृजूक्तिहासितहरानिष्टाद्भवानी जगत्॥ १८॥

बहुनागसापराधेन। 'आगोऽपराधो मन्तुश्च' इत्यमरः। परत्र बहवो नागा यस्य बहुनाग इत्यामन्त्रणम्। सा गौरीपरामर्शः। साहं बहु खिन्नेत्यन्वयः। अत्र हेतुमाह—गङ्गेत्यादि। मे नागः सर्पस्त्वय्यपि नो। काका त्वय्यपीत्यर्थः। ते नागः सर्पो मय्यपीति

नो । काका अपि स्वस्तीति । अथ च । नो आगोऽस्ति नापराधोऽस्ति । अपि लस्तीति । हे सुभ्रूः, अवितथं सत्यं नाहं ब्रुवे । काका अपि तु सत्यं ब्रुवे । अपरत्राविद्यमान उत्तमो यस्मात्स तादृशोऽनुत्तमो ना पुरुषः । परमपुरुष इत्यर्थः ॥

संध्यायामिह सन्नताङ्गि भवती कस्मान्मुधा खेदिनी
साधु ध्यायसि कां हसन्कुटिलता नाङ्गेषु मे कुत्रचित् ।
हन्ताहं भवतीं न किंचिदथवा वामस्वभावां ब्रुवे
मां हन्तासि किमर्थमित्यभिहितो देव्या हरः पातु वः ॥ १९ ॥

इहास्यां संध्यायां प्रेयसीति भ्रान्त्या संनताङ्गि कस्मान्निरर्थकं खेदिनी । अपरत्र हे नताङ्गि, हसन्स्मयन्नहं संध्यायामि सम्यक्चिन्तयामि । संशब्दस्य सम्यगर्थः । नतता कुटिलत्वम् । हन्त इति खेदे । वक्रोक्तौ तु हन्ताहम् ॥

संसक्तो बहुलक्षपाटनविधौ किं त्वं श्मशानेऽधुना
पाट्यन्ते न मया बहूनि दयिते लक्षाणि ते कुत्रचित् ।
सूक्तौ ते कृतपुङ्खता कथय किं पुङ्खेन तस्यां भवे-
दित्यद्रीन्द्रसुतां गिरा शशिकलामौलिर्जयन्पातु वः ॥ २० ॥

बहुलक्षपाटनविधौ बहुलक्षपायां कृष्णपक्षनिशायामटनविधौ भ्रमणे । अपरत्र बहूनां लक्षाणां शरव्याणां पाटने भेदे । 'लक्षं लक्ष्यं शरव्यं च' इत्यमरः । कृतपुङ्खः शिक्षितः, विहितपुङ्खश्च ॥

बिभ्रन्नाकुलयस्यतीव भयदां कङ्कालमालामिमा-
मेकत्वात्रिजगत्यपि प्रियतमे कालस्य पङ्क्तिः कुतः ।
कङ्कालोचितमेतदत्र वचनं कङ्कैः किमालोचितं
पायादित्यवचाः कृतेन्दुकलिकोत्तंसेन काली जगत् ॥ २१ ॥

कङ्कालमालां शवशरीरास्थिमालाम् । 'स्याच्छरीरास्थि कङ्कालः' इत्यमरः । बिभ्रत् । वक्रोक्तौ तु कालमालां बिभ्रत् । कं नाकुलयसि । कङ्कालानामुचितं योग्यम्, कङ्कैश्च पक्षिविशेषैरालोचितम् । अवचा मूका । काली भवानी ॥

विस्पष्टां श्रियमेति ते हिमकराक्रान्तं जटामण्डलं
नैवास्मिन्नहयो न चापि मकराः सन्ति प्रिये कुत्रचित् ।
ऋक्षाणामधिपं ब्रुवे तदधुनैवाहूयतां जाम्बवा-
न्नन्दिन्नद्रिसुतां जयन्निति विभुः सूक्त्या चिरं पातु वः ॥ २२ ॥

हिमकराक्रान्तं हिमकरेण शशिनाक्रान्तम् । परत्र त्वकारप्रश्लेषेणाहिमकराक्रान्त-

महयश्च मकराश्च तैराक्रान्तम् । ऋक्षाणां नक्षत्राणामधिपः शशी, ऋक्षाणामच्छभल्लानां चाधिपो जाम्बवान् । ब्रुवे कथयामि । आहूयतामामन्त्र्यताम् । हे नन्दिन् ॥

सद्धर्म्यस्थितिमत्र कूटसकले द्यूते भवानीक्षते
प्रेतावासरतेः कुतो मम सती तन्वङ्गि हर्म्यस्थितिः ।
नागारं कितव ब्रुवेऽनृतमिदं नागोऽस्मि नैव द्रुतं
ब्रूहीति प्रगुणोत्तरोत्तरवचा गौर्या हरः पातु नः ॥ २३ ॥

संश्चासौ धर्म्यो धर्मादनपेतः, सच्च तद्धर्म्यं प्रासादश्च तत्र स्थितिः सद्धर्म्यस्थितिः । कूटानि सकलान्यक्षाणि यत्र तत्र द्यूते । नागारमिति । नेति निषेधे, अगारं गृहम् । वक्रोक्तौ तु हे नाग सर्प, अरं शीघ्रम् । प्रगुणमर्थान्तरयुक्तत्वादनुरूपमुत्तरोत्तरं वचो यस्य स प्रगुणोत्तरोत्तरवचाः ॥

सुभ्रूस्त्वं कुपिता ममेति हृदयं पर्याकुलं वर्तते
नैवाहं शठ कुत्सितस्तव पिता भार्येति नावैषि किम् ।
ऋक्षाणां पतिरस्मि नेत्यसदृशं कस्मात्त्वयामन्त्रितः
पायाद्वो गिरिजां जयन्निति गिरा व्याजिह्मया धूर्जटिः ॥ २४ ॥

हे सुभ्रूः, कुपिता क्रुद्धा, कुत्सितः पिता च नावैषि न जानासीति किम् । अवैषीत्यर्थः । भार्या गृहिणी । वक्रोक्तौ भानां नक्षत्राणामार्य प्रभो भार्य । हे भार्येति ॥

ख्याता ते हर वल्लभोडुवरता जानासि का वा प्लवे
सक्ता बालमृगाक्षि मे प्रियतमा पोतो मया नोदितः ।
कार्यं मुग्धमुखि प्लवेन तव किं स्यात्खण्डितेनेति वो
वाचा वञ्चितशैलराजतनयश्चन्द्रावतंसोऽवतात् ॥ २५ ॥

वल्लभ उडुवरः शशी यस्य भावो वल्लभोडुवरता, उडुवे प्लवे या रता सा ते वल्लभा । उडुवशब्दस्य वकारान्तत्वं चिन्त्यम् । ओष्ठ्यान्तता हि प्रसिद्धा । नोदित इति न उदित उक्तः । अपरत्र नोदितः खण्डितः ॥

व्यर्थं किं तनुषे दुरोदरमिदं न स्वापतेयं तव
द्यूतं किं न तनोमि तन्व्यकृतिना दुष्प्रापतात्रास्ति मे ।
नावाप्यस्त्वमसीति सत्यमुदितं नावा न लभ्योऽस्मि किं
त्रासीष्टेति निरुत्तरां गिरिभुवं कुर्वञ्जगत्र्यम्बकः ॥ २६ ॥

स्वापतेयं धनम्, इयं स्वापता सुप्रापत्वं च । नावाप्यो न लभ्यः, नावा तरण्या चाप्यः प्राप्यः ॥

दृष्टिस्ते शिखिना विभाति घटिता दृष्टौ न बर्ही क्वचि-
द्वक्रोक्तिर्भवतो नितान्तदयिता सत्यं ममान्तो गतः।
न ब्रह्मादिभिरप्यपारवपुषः किं शब्दशून्यान्विभो
पुष्णासीति हतोत्तरं विदधती शंभुं शिवा पातु वः॥ २७॥

शिखी वह्निः, मयूरश्च। नितान्तमत्यर्थं दयिता नितान्तदयिता। अपरत्रानितान्त नेतो लब्धोऽन्तो यस्य तस्यामन्त्रणं हे अलभ्यावसान। वक्रोक्तिर्भवतो दयितेति। अपारवपुषः पाररहितदेहस्य। अनन्तदेहस्येति यावत्। अपगत आरवः शब्दो येषां तानपगतारवान्पुष्णातीति यस्तस्यापारवपुषः॥

तेनैवं त्रिदशेश मां न कुरुषे वश्या यतोऽहं तव
प्राप्ता प्रीतिमनुत्तमां प्रियतमेवश्यायप्रीतिः कुतः।
मैवं ब्रूहि निगद्यतेऽत्र न निशातोयं निशातः स कः
शंसन्वक्रमिति क्षमाधरसुतां त्र्यक्षः शिवं वः क्रियात्॥ २८॥

वश्या यतो वशगता यस्मात्। उत्तरे लकारप्रश्लेषेऽवश्यायतो निशाजलात्प्रीतिः कुतः। निशातोयं रात्रिजलम्, अयं च निशातस्तीक्ष्णः॥

कृत्वा त्वां पणवञ्चितं नहि मया द्यूतेन न प्रीयते
नैवाहं पणवः कृशोदरि चितः शक्यो विधातुं त्वया।
किं वादित्रविवक्षयात्र दयिते को वादिनस्त्रायते
सूक्त्या निर्जितशैलराजसुत इत्यव्याज्जगद्धूर्जटिः॥ २९॥

पणेन वञ्चितं रहितम्, पणवं पटहं चितं संभूतं च। वादित्रं वाद्यभाण्डम्, यश्च वादिनस्त्रायते स वादित्रस्त्वं च॥

आद्यूनोऽसि सभस्मकः सुरभिषक्कश्चिन्न किं पृच्छ्यते
सत्यं देवि ममास्ति नादिरपरो भूतिस्तु देहस्थिता।
केनागादि तवात्र भूतिरवनेर्गुप्तिः स्थिता पादयो-
र्दिश्यान्निर्जितपार्वतीक इति वः सूक्त्या श्रियं शंकरः॥ ३०॥

आद्यूनो लम्पटः। 'आद्यूनः स्यादौदरिको विजिगीषाविवर्जिते' इत्यमरः। आदिनोनो रहितश्च। भस्मको व्याधिविशेषः, सह भस्मना वर्तते यः स सभस्मकः। भूतिर्भस्म, भुवश्च पृथिव्या ऊतिरवनं भूतिः॥

---

१. 'प्रहेवा' इति पिङ्गलसूत्रात्प्रकारपूर्वाक्षरस्य विकल्पेन गुरुत्वे नात्र च्छन्दोभङ्गशङ्का.

ही नाहं भवतोऽतिवक्रवचसा दातुं प्रवीणोत्तरं
का ते सुन्दरि हीनता ननु नता सर्वा त्रिलोक्येव ते ।
नासत्योक्तिरियं कुतोऽत्र घटते दस्राभिधानागमो
मुष्णीतादघमाद्रिजामवचसं कुर्वन्पिनाकीति वः ॥ ३१ ॥

हीति दोषसूचनेऽव्ययम् । नेति निषेधे । उत्तरत्र हीनोना । यस्याः सर्वा त्रिलोकी प्रणता स्यात्तस्या हीनता न संभाव्यते । न असत्यस्यानृतस्योक्तिर्नासत्योक्तिः, नासत्यौ च अश्विनौ ॥

द्यूतेऽस्मिन्विजितो मया ननु भवानूर्ध्वं मुहूर्ताद्ध्रुवं
कोऽत्र स्यात्कथयर्क्षसङ्ग उदितः शैलो न वेत्सीति किम् ।
प्रत्यग्रे किमिवाद्मि शंस दयिते भिक्षां कपालेऽधुना
सूक्त्येत्यद्रिजया जितोऽनृजुवचास्त्रासीष्ट वः शंकरः ॥ ३२ ॥

ध्रुवं निश्चितम्, ध्रुवं च नक्षत्रम् । भवान्मया जित इत्युत्तरे जयतिर्द्विकर्मकः । ऋक्षसङ्गो नक्षत्रसङ्गः । उत्तरे शैलस्यर्क्षैरच्छभल्लैः सङ्गः । न वेत्सि न जानासि, नवे नूतने चात्सि भक्षयसि । 'अद भक्षणे' । अद्मि भक्षयामि । भिक्षां कपालेऽधुनेति पार्वत्युक्तिः ॥

सन्नागारहिता तनोति भवतो भीतिं ममैषा तनु-
र्भग्नं सुन्दरि सद्म किं भवति मे यस्मै हितैषा तनुः ।
चिन्ता मेऽत्र न वेश्मनि प्रियतमे किं चिन्तयास्यान्नव-
ग्राव्णीत्यद्रिसुतां जयन्नवतु वः सूक्त्या गिरीशोऽनिशम् ॥ ३३ ॥

सन्नागारहिता सद्भिर्नागैररहिता सन्नागारहिता, सन्ने भग्ने चागारे गृहे हितानुकूला । न वेश्मनि न निषेधे वेश्मनि गृहे, नवे नूतनेऽश्मन्युपले च ॥

आ संसारमसौ शिरस्यविरतं गङ्गा वहत्येव ते
नेष्वासं च बिभर्ति सारमिति किं जानासि नाभ्रान्तिकम् ।
स्यादभ्रस्य किमन्तिकेन कितव ज्ञातेन ते सांप्रतं
संपत्त्यै गिरिशोऽस्तु वः कुटिलया वाण्या भवान्या जितः ॥ ३४ ॥

आ संसारादासंसारम्, अस्यन्तेऽनेन शरा इष्वासं धनुः, सारमुत्कृष्टम् । अभ्रान्तिकं भ्रान्तिरहितं निःसंशयम्, अभ्रस्यान्तिकं समीपं च ॥

न क्रीडामहमुत्सहेऽत्र भवता सार्धं पयोधेर्नव-
प्रस्तावः क इवात्र नूतनमथ प्रत्नं न जानाम्यहम् ।

नव्यं कः कथयेत्किमत्र भवता व्यङ्केन साङ्केन वा
गौर्यात्तप्रतिपत्तिरुत्तरगिरा शंभुः कृतः पातु वः ॥ ३५ ॥

न क्रीडामिति नेति निषेधे । क्रीडां खेलाम्, नक्रा मकरा विद्यन्ते यस्य स नक्री समुद्रस्तस्येडा स्तुतिर्नक्रीडा तां च । नवः स्तवः, नूतनश्च । प्रत्नं पुराणम् । 'पुराणप्रतनप्रत्नपुरातनचिरंतनाः' इत्यमरः । सविपक्षा ह्येषा लौकिकी वाचोयुक्तिः । एवं व्यङ्केन साङ्केनेति । नव्यं क इति नव्यं नूतनं को जातु कथयेत्, उत्तरे नेति निषेधः । विगतोऽङ्को यस्यासौ व्यङ्कः ॥

एषा सागरसंगताभिमततां याता न मे कर्हिचि-
न्मुग्धे कण्ठभुवं ब्रवीषि मम किं सक्ष्वेडतामीयुषीम् ।
क्ष्वेडाराव इहोचितस्तव गणव्रातैः सह क्रीडतो
युष्मान्नीलगलोऽवतादिति गिरा गौर्या कृतोऽनुत्तरः ॥ ३६ ॥

सागरसंगतेति सागरेण समुद्रेण संगता । अर्थाद्गङ्गा । उत्तरे तु सेति सर्वनामपदम्, गरो विषम् । तदाह—सक्ष्वेडेति सह क्ष्वेडेन विषेण, क्ष्वेडया शब्दविशेषेण च सक्ष्वेडम्, क्ष्वेडं विषम्, क्ष्वेडा जनस्य शब्दविशेषः ॥

ख्यातं सज्जगतीह किं नु चरितं विष्वग्विनोदीव ते
सज्जास्ति क गतिर्न मेऽत्र रुचितः कश्चिद्विहारः क्वचित् ।
नेष्टं ते जिनसद्म चेद्वस ततः सार्धं श्मशाने मया
मायां वो दहतादिति त्रिनयनः सूक्त्या जयन्पार्वतीम् ॥ ३७ ॥

सज्जगतीति सच्छोभनं जगति भुवने, उत्तरे तु सजा सावधाना गतिर्यस्य तत्सज्जगति । विष्वक्समन्तात् । विहारो विहरणम्, बुद्धवेश्म च । 'बुद्धानां च विहारोऽस्त्री' इति कोषः ॥

सुभ्रूर्मूर्धनि मेऽत्र पावनतया नूनं स्थितं गङ्गया
ह्रीरस्या बत का भवेदवनता कास्ति त्वयेत्युच्यताम् ।
मन्दाक्षाभिमता न मे भवति ते पट्विन्द्रियैव प्रिया
नूनं स्यादिति वो विनिर्जितशिवा शर्वाण्यघौघच्छिदे ॥ ३८ ॥

अत्र पावनतयात्र मूर्धनि पावनतया पवित्रत्वेन, परत्र त्रपया लज्जयावनता तया । मन्दाक्षं लज्जा, वक्रोक्तौ तु मन्दाक्षाऽपट्विन्द्रिया ॥

मूर्धानं हर संश्रिता किल हलश्रेणी वितस्तार ते
संबन्धः क इवात्र लाङ्गलततेर्नाहं वितस्तारतिः ।

किं नद्याश्रयमेतदत्र वचनं द्यामाश्रयेत्किं वचो
दिश्याद्वः शितिकण्ठ इत्यगभुवि स्पष्टोत्तरोक्तिः श्रियम् ॥ ३९ ॥

हलं अस्थि, सीरं च । वितस्तार विततान ते तव, अपरत्र वितस्तायां [कश्मीरदेशप्रसिद्धायां] नद्यां रतिर्यस्य तस्यामन्त्रणं वितस्तारस्ते । नद्याश्रयो यस्य तन्नद्याश्रयम्, अपरत्र न निषेधे द्यौराश्रयो यस्य स द्याश्रयः ॥

गण्डे दानवनाशिनो गणपतेः कुर्वन्ति कोलाहलं
रोलम्बा दनुसूनुनाशनविधौ सक्ताः स्युरेते कथम् ।
ब्रूयात्कः खलु दानवान्गजमुखः शंसत्यसौ पृच्छयता-
मुक्त्या साध्विति नित्यमस्तु कुशलायोमां जयन्वो विभुः ॥ ४० ॥

दानवनाशिन इति दानवनं मदपुञ्जमश्नन्तीति दानवनाशिनः । परत्रासुरक्षेपकाश्च । रोलम्बा भ्रमराः । दानवान्दानयुक्तश्च ॥

को हि स्यादहितान्तकस्त्वदपरः सत्यं ममेवाहिना
तान्तं वीक्ष्य शिरो भवेदभिमतः किं स्यान्न चक्री श्रियः ।
वक्रोक्तौ कुशलो भवानिति कुशे लोभोऽस्ति कस्येति वै
वक्रोक्त्या भवतो भवो जितभवानीकोऽभवायास्तु वः ॥ ४१ ॥

अहितानामन्तको मृत्युरहितान्तकः । अपरत्राहिना तान्तं खिन्नं कं शिरो यस्याहितान्तकः । एतदेवोद्दिश्याह—सत्यमेतत् । अहिना तान्तं सदैव शिरो वीक्ष्य चक्री विष्णुः श्रियो लक्ष्म्या अभिमतः प्रियः किं न स्यात् । अपि तु स्यादेव । मद्वच्छिरस्यहिस्तेन धारित इति यत्ततो लक्ष्म्या अभिमतो विष्णुर्जात इत्यर्थः । कुशलो भवान्निपुणस्त्वम्, कुशेषु दर्भेषु च लोभो विद्यते यस्य ॥

दुर्गाहं भवतोऽवगाह्यत इदं चेतः कथं वा मया
दुर्गाहं स्फुटमस्मि गाहनविधौ वामा पुनर्नास्म्यहम् ।
नालीकाश्रयमेतदत्र वचनं बाणाश्रयं किं वचः
स्यादित्यस्तु भवच्छिदेऽद्रितनयां सूक्त्या जयन्वो विभुः ॥ ४२ ॥

दुःखेन गाहत इति दुर्गाहम्, अहं च दुर्गाभिधाना । मया कथं वा तव चेतोऽवगाह्यत इति, वामा स्त्री वामया स्त्रिया च, वामा कुटिला च । नालीकाश्रयमलीकाश्रयमनृतस्थानं न । सत्यमेतदित्यर्थः । नालीकश्च शरविशेषः । भवच्छिदे जन्मोच्छित्तये ॥

मुञ्चामीश्वर कुञ्जराजिनमहं ते विस्रगन्धाकुलं
कुञ्जे राजितमस्य शैलमिह ते सुभ्रूः पिता पर्वतः ।

नोक्तिर्मज्जनकाश्रया तव भवेत्किं मज्जनेनात्र मे
शंसन्नित्यजितोऽद्रिराजतनयां नेयाद्विषो वः क्षयम् ॥ ४३ ॥

कुञ्जराजिनं कुञ्जरस्याजिनं कुञ्जराजिनं गजचर्म, कुञ्जेन लतादिपिहितोदरेण शोभिनं च । एतदेवाह—कुञ्जे राजितं शैलमस्य दूरीकुरु । 'असु क्षेपणे' । परंतु हे सुभ्रूः, तव पिता पर्वत एव । विस्रं दुर्गन्धि । मज्जनको मम जनकः पिता, मज्जनं च स्नानम् ॥

स्पष्टाखण्डलयज्ञया विजयया नृत्ये ममोच्चावचं
गीतं सुन्दरि तन्यते सुरपतेर्योगो मखस्यात्र कः ।
कस्येष्टा सवसंकथा स्फुटमसौ यः पानशौण्डो नरः
सूक्त्या खण्डितपार्वतीवचन इत्यव्याद्वृषाङ्को जगत् ॥ ४४ ॥

स्पष्टाखण्डलयज्ञया । 'लयः साम्यम्' इत्यमरः । स्पष्टाऽखण्डलयज्ञा, परत्र स्पष्ट आखण्डलयज्ञ इन्द्रयज्ञो यस्याः । उच्चावचं नानाविधम् । सवो यज्ञः संहितया आसवः पानं च । पाने शौण्डो व्यसनी ॥

धत्ते चन्द्रकलाञ्छितस्तव जटाजूटः श्रियं हारिणीं
बर्हेणैष न लाञ्छितो न च रुचिं मार्गीं बिभर्ति क्वचित् ।
उक्तिस्ते विषमा तनोति मनसः क्षोभं ममोक्तिः कथं
क्ष्वेडं ते तनुयादुमामिति जयन्सूक्त्या हरो वोऽवतात् ॥ ४५ ॥

चन्द्रकलाञ्छितश्चन्द्रकलयाञ्छित आकृष्टः । परत्र चन्द्रकेण च बर्हेण लाञ्छितश्चिह्नितः । हरतीति हारिणी ताम्, हरिणसंबन्धिनीं च । विषमा क्रूरा, तनोति कुरुते, विषं चातनोति । क्षोभमित्यत्र चार्थो बोद्धव्यः । उत्तरे क्षोभ एव दुर्जरत्वाद्विषम् ॥

शक्ता वक्तुमिहोत्तरं न खलु ते तद्दक्षिणामाश्रयेः
किंचिन्मे वद सर्वदस्य भवतः का दक्षिणा लभ्यते ।
संजाता सततं त्वमेव सरला नाहं लता तारवी
स्मेरः शंभुरिति श्रियं दिशतु वः शैलात्मजानिर्जितः ॥ ४६ ॥

उत्तरं प्रतिवाक्यम्, उत्तरदिक्स्थं च । दक्षिणाऽनुकूला, अपसव्या च, यज्ञादौ पात्रेषु देया च । सरला शुद्धा, देवदारुलता च ॥

सुभ्रूः संप्रति मे न कापि दयिता त्वत्तो ममायं ग्रहः
प्राप्ता ते शठ मेनका दयिततां नाकाङ्गनापाश्रया ।
नोक्तिर्मे गगनाजिराश्रयवती कस्योक्तिरित्यस्तु वः
सूक्त्या निर्जितशैलजानृजुवचाः शीतांशुमौलिः श्रिये ॥ ४७ ॥

मेनका इति मे न का इति पदत्रयम् । मे मम न कापि सुभ्रूर्वराङ्गना दयिता प्रिया, मेनकानामाप्सराः । अङ्गना नारी, अङ्गनं चाजिरम् ॥

कर्ता शूलपराजितां रिपुचमूमेकस्त्वमेवोद्धतां
नो शीघ्रं तृणमण्डितारिपृतना केनापि काचित्कृता ।
वक्तुं ते कुशला कया तव गिरा स्यां दुःशलाका न वा-
गस्तीशो वचसाद्रिजामिति जयन्निष्टं विधासीष्ट वः ॥ ४८ ॥

शूलपराजितां शूलेन त्रिशूलेन पराजिताम्, उत्तरत्राशु शीघ्रमुलपेन तृणविशेषेण राजितां शोभमानाम् । कुशला निपुणा कया गिरा स्यामहम्, उत्तरत्र कुत्सितया शलाकया सूच्या । विधासीष्ट क्रियात् ॥

दृष्टिस्ते न कृशानुतापरहिता सत्यं न तन्वी स्तुता
सुभ्रूरन्यहिता च मे मतिरपि प्रज्ञोच्यते नो मया ।
स्यात्त्वैव त्वमुमात्मनास्यभिहितं कस्मादपह्नूयते
मुष्णीतादघमद्रिजामभिभवन्सूक्त्या कपर्दीति वः ॥ ४९ ॥

कृशानुतापरहिता कृशानोरग्नेस्तापस्तेन रहिता । अपरत्र कृशा तन्वी, नुता स्तुता, परहितान्यानुकूला । नोमया, नो, मयेति नो निषेधे, न उमया इति च ॥

वक्रोक्त्या यदसत्कृतोऽसि भगवंस्तत्क्षम्यतां मेऽधुना
कस्माद्भौमगिरा न खेदितमना नोक्तः कुपुत्रो मया ।
स्यात्किं सुन्दरि कुत्सितेन तनयेनोक्तेन जित्वेत्युमां
स्ताद्वस्तत्परिरम्भसान्द्रपुलकः शंभुः शिवप्राप्तये ॥ ५० ॥

वक्रोक्तिर्वक्रा कुटिला चासावुक्तिः कुटिला गीः, उत्तरत्र वकस्य भौमस्योक्तिर्वाक्च । कुपुत्र इति कुः भूमिस्तस्याः पुत्रः कुपुत्रो भौमः, कुत्सितः पुत्रस्तनयश्च । परिरम्भ आश्लेषस्तेन सान्द्राणि पुलकानि रोमाञ्चा यस्य ॥

वक्रोक्तिपञ्चाशतिमित्थमेनां यो भावयेन्मत्सररिक्तबुद्धिः ।
स्पष्टोत्तरासूक्तिषु काव्यबन्धे भवेत्स रत्नाकरवत्प्रवीणः ॥ ५१ ॥

भावयेद्विचारयेत् । स्पष्टोत्तरास्विति स्पष्टमुत्तरं यासु तादृशीषूक्तिषु वक्रोक्तिषु काव्यबन्धे सुभाषितविषये रत्नाकरः कविवरो हरविजयकारस्तद्वत्प्रवीणः कुशलः स्यात् ॥

सूनुरानन्ददेवस्य रणभूव्योम्नि भास्वतः ।
वक्रोक्तिवर्णने रात्ने टिप्पणं वल्लभो व्यधात् ॥

इत्यमात्यवरानन्ददेवसूनुशिशुपालवधाद्यनेककाव्यटीकाकर्तृश्रीवल्लभदेवकृतया टिप्पण्या समेता श्रीबालबृहस्पत्यनुजीविनो वागीश्वराङ्कस्य विद्याधिपत्यपरनाम्नो हरविजय-महाकाव्यकर्तुः कश्मीरदेशोद्भवराजानकश्रीरत्नाकरमहाकवेः कृतिर्वक्रोक्तिपञ्चाशिका समाप्ता ।

## महाकविश्रीक्षेमेन्द्रकृता[1]

## औचित्यविचारचर्चा ।

कृतारिवञ्चने दृष्टिर्येनाञ्जनमलीमसा ।
अच्युताय नमस्तस्मै परमौचित्यकारिणे ॥ १ ॥
कृत्वापि काव्यालंकारां क्षेमेन्द्रः कविकर्णिकाम् ।[2]
तत्कलङ्कं विवेकं च विधाय विबुधप्रियम् ॥ २ ॥
औचित्यस्य चमत्कारकारिणश्चारुचर्वणे ।
रसजीवितभूतस्य विचारं कुरुतेऽधुना ॥ ३ ॥ (युग्मम्)
काव्यस्यालमलंकारैः किं मिथ्यागणितैर्गुणैः ।
यस्य जीवितमौचित्यं विचिन्त्यापि न दृश्यते ॥ ४ ॥
अलंकारास्त्वलंकारा गुणा एव गुणाः सदा ।
औचित्यं रससिद्धस्य स्थिरं काव्यस्य जीवितम् ॥ ५ ॥

परस्परोपकारकरुचिरशब्दार्थरूपस्य काव्यस्योपमोत्प्रेक्षादयो ये प्रचुरालंकारास्ते कटककुण्डलकेयूरहारादिवदलंकारा एव, बाह्यशोभाहेतुत्वात् । येऽपि काव्यगुणाः केचन तल्लक्षणविचक्षणैः समाम्नातास्तेऽपि श्रुतसत्यशीलादिवद्गुणा एव, आहार्यत्वात् । औचित्यं त्वग्रे वक्ष्यमाणलक्षणं स्थिरमविनश्वरं जीवितं काव्यस्य, तेन विनास्य गुणालंकारयुक्तस्यापि निर्जीवत्वात् । रसेन शृङ्गारादिना सिद्धस्य प्रसिद्धस्य काव्यस्य धातुवादरससिद्धस्येव तज्जीवितं स्थिरमित्यर्थः ।

उक्तार्थस्यैव विशेषमाह—

उचितस्थानविन्यासादलंकृतिरलंकृतिः ।
औचित्यादच्युता नित्यं भवन्त्येव गुणा गुणाः ॥ ६ ॥

---

१. कलाविलासप्रारम्भलिखितक्षेमेन्द्रकृतग्रन्थनाममालिकातिरिक्ताः क्षेमेन्द्रकृता ग्रन्थास्त्वेते—(१) अवसरसारः, (२) नीतिलता, (३) मुनिमतमीमांसा, (४) ललितरत्नमाला, (५) विनयवल्ली. अथ च तत्र क्षेमेन्द्रकृतग्रन्थेषु 'हस्तिजनप्रकाशः' इतिं ग्रन्थनाम लिखितम्, तत्कर्ता कश्चिदर्वाचीनो गुर्जरदेशोद्भवो यदुशर्मसूनुरन्यः क्षेमेन्द्र इति ज्ञेयम्. अयमनेकग्रन्थकर्ता महाकविः क्षेमेन्द्रस्तु प्रकाशेन्द्रात्मजः कश्मीरदेशोद्भूतश्चेति सुप्रसिद्धमेव. २. कस्यचित्क्षेमेन्द्रकृतग्रन्थस्यैव नाम भाति.

अलंकृतिरुचितस्थानविन्यासादलंकर्तुं क्षमा भवति, अन्यथा त्वलंकृतिव्यपदेशमेव न लभते । तद्वदौचित्यादपरिच्युता गुणा गुणतामासादयन्ति, अन्यथा पुनरगुणा एव ।

यदाह—

'कण्ठे मेखलया नितम्बफलके तारेण हारेण वा
पाणौ नूपुरबन्धनेन चरणे केयूरपाशेन वा ।
शौर्येण प्रणते रिपौ करुणया नायान्ति के हास्यता-
मौचित्येन विना रुचिं प्रतनुते नालंकृतिर्नो गुणाः ॥'

किं तदौचित्यमित्याह—

उचितं प्राहुराचार्याः सदृशं किल यस्य यत् ।
उचितस्य च यो भावस्तदौचित्यं प्रचक्षते ॥ ७ ॥

यत्किल यस्यानुरूपं तदुचितमुच्यते, तस्य भावमौचित्यं कथयन्ति । अधुना सकलकाव्यशरीरजीवितभूतस्यौचित्यस्य प्राधान्येनोपलभ्यां स्थितिं दर्शयितुमाह—

पदे वाक्ये प्रबन्धार्थे गुणेऽलंकरणे रसे ।
क्रियायां कारके लिङ्गे वचने च विशेषणे ॥ ८ ॥
उपसर्गे निपाते च काले देशे कुले व्रते ।
तत्त्वे तत्त्वेऽप्यभिप्राये स्वभावे सारसंग्रहे ॥ ९ ॥
प्रतिभायामवस्थायां विचारे नाम्न्यथाशिषि ।
काव्यस्याङ्गेषु च प्राहुरौचित्यं व्यापि जीवितम् ॥ १० ॥

एतेषु पदप्रभृतिषु स्थानेषु मर्मस्विव काव्यस्य सकलशरीरव्यापि जीवितमौचित्यं स्फुटत्वेन स्फुरदवभासते ।

तेषूदाहरणानि क्रमेण दर्शयितुमाह—

तिलकं बिभ्रती सूक्तिर्भात्येकमुचितं पदम् ।
चन्द्राननेव कस्तूरीकृतं श्यामेव चान्दनम् ॥ ११ ॥

एकमेवोचितं पदं तिलकायमानं बिभ्राणा सूक्तिः समुचितपरभागशोभातिशयेन रुचिरतामावहति ।

यथा [1]परिमलस्य—

'मग्नानि द्विषतां कुलानि समरे त्वत्खड्गधाराकुले
नाथास्मिन्निति बन्दिवाचि बहुशो देव श्रुतायां पुरा ।
मुग्धा गुर्जरभूमिपालमहिषी प्रत्याशया पाथसः
कान्तारे चकिता विमुञ्चति मुहुः पत्युः कृपाणे दृशौ ॥'

अत्र मुग्धापदेनार्थौचित्यचमत्कारकारिणा सूक्तिः शरदिन्दुवदनेव श्यामतिलकेन श्यामेव शुभ्रविशेषकेण विभूषिता सकलकविकुलललामभूतां विच्छित्तिमातनोति ।

न तु यथा [2]धर्मकीर्तेः—

'लावण्यद्रविणव्ययो न गणितः क्लेशो महान्स्वीकृतः
स्वच्छन्दस्य सुखं जनस्य वसतश्चिन्ताज्वरो निर्मितः ।
एषापि स्वयमेव तुल्यरमणाभावाद्वराकी हता
कोऽर्थश्चेतसि वेधसा विनिहितस्तन्व्यास्तनुं तन्वता ॥'

अत्र 'तन्व्याः' इति पदं केवलशब्दानुप्रासव्यसनितया निबद्धं न कांचिदर्थौचित्यचमत्कारकणिकामाविष्करोति । 'सुन्दर्याः' इत्यत्र पदमनुरूपं स्यात् । अन्यानि वा निरतिशयरूपलावण्यव्यञ्जकानि । तन्वीपदं तु विरहविधुररमणीजने प्रयुक्तमर्थौचित्यशोभां जनयति ।

यथा [3]श्रीहर्षस्य—

'परिम्लानं पीनस्तनजघनसङ्गादुभयत-
स्तनोर्मध्यस्यान्तः परिमलनमप्राप्य हरितम् ।

---

१. पद्मगुप्तापरनामा परिमलकविः साहसाङ्कचरितनामकेऽष्टादशसर्गात्मके महाकाव्येऽवन्तिभूपालस्य चरितं वर्णितवान्. २. अयं बौद्धो धर्मकीर्तिर्वासवदत्ताकर्तुः सुबन्धुकवेरपि प्राचीन आसीत्. वासवदत्तायां वासवदत्तावर्णनप्रकरणे 'बौद्धसंगतिमिवालंकारभूषिताम्' इत्यस्ति. 'बौद्धसंगतिमिवालंकारो धर्मकीर्तिकृतो ग्रन्थविशेषस्तेन भूषिताम्' इति तट्टीकायां शिवरामः. आनन्दवर्धनाचार्येणायमेव श्लोको धर्मकीर्तिनामोल्लेखपूर्वकं ध्वनिग्रन्थ उदाहृतः. सुभाषितावलावपि बहवो भदन्तधर्मकीर्तिश्लोकाः सन्ति. भदन्तशब्दो बौद्धभिक्षुवाचकः. ३. रत्नावलीप्रियदर्शिकानागानन्दानां कर्ता कोऽयं, श्रीहर्ष इति न

इदं व्यस्तन्यासं श्लथभुजलताक्षेपवलनैः
कृशाङ्ग्याः संतापं वदति बिसिनीपत्रशयनम् ॥'

अत्र सागरिकाया विरहावस्थासूचकम् 'कृशाङ्ग्याः' इति पदं परममौचित्यं पुष्णाति ।

वाक्यगतमौचित्यं दर्शयितुमाह—

औचित्यरचितं वाक्यं सततं संमतं सताम् ।
त्यागोदग्रमिवैश्वर्यं शीलोज्ज्वलमिव श्रुतम् ॥ १२ ॥

औचित्यरचितं वाक्यं काव्यविवेकविचक्षणानामभिमततमम् ।

यथा मम विनयवल्ल्याम्—

'देवो दयावान्विजयो जितात्मा यमौ मनःसंयममाननीयौ ।
इति ब्रुवाणः स्वभुजं प्रमार्ष्टि यः कीचकाकालिककालदण्डम् ॥
धीरः स किर्मीरजटासुरारिः कुवेरशौर्यप्रशमोपदेष्टा ।
दृष्टो हिडिम्बादयितः कुरूणां पर्यन्तरेखागणनाकृतान्तः ॥' (युग्मम्)

अत्र भीमस्य भीमचरितोचितकीचकाकालिककालदण्डहिडिम्बादयितादिभिः पदैरुन्निद्ररौद्ररसस्वरूपानुरूपो वाक्यार्थः सजीव इवावभासते ।

यथा वा राजशेखरस्य—

'संबन्धी पुरुभूभुजां मनसिजव्यापारदीक्षागुरु-
र्गौराङ्गीवदनोपमापरिचितस्तारावधूवल्लभः ।

---

निश्चयः. बाणभट्ट एव स्वप्रभोः श्रीहर्षस्य नाम्ना रत्नावल्यादिग्रन्थान्कृतवानिति काश्मीरकाः. पठन्ति च काव्यप्रकाशेऽपि 'श्रीहर्षादेर्बाणादीनामिव धनम्' इति. अन्यदेशीयास्तु धावककविः श्रीहर्षनाम्ना रत्नावलीं कृत्वा बहुधनं लब्धवानिति वदन्ति. अन्यदेशीयकाव्यप्रकाशपुस्तकेष्वपि 'श्रीहर्षादेर्धावकादीनामिव धनम्' इत्येव पाठः. काश्मीरकमते तु धावककविः शशशृङ्गायते. अन्यदेशीयपुस्तकपाठापेक्षया काश्मीरपुस्तकस्थपाठस्य किंचिदधिकं प्रामाण्यम्, काव्यप्रकाशकर्तू राजानकमम्मटस्य काश्मीरदेशोत्पन्नत्वात्. रत्नावलीश्लोका आनन्दवर्धनाचार्येणापि ध्वनिग्रन्थ उदाहृताः सन्ति. खिस्तसंवत्सरीयाष्टमशतकमध्यभागसमुत्पन्नेन कश्मीरमहीपतेर्जयापीडस्य मन्त्रिणा दामोदरगुप्तेनापि कुट्टनीमतग्रन्थे रत्नावलीनाटिका विस्तरेण वर्णितास्ति. रत्नावलीप्रथमाङ्कस्था 'उदयनगान्तरितमियम्' इत्याद्यार्यापि प्रसङ्गागता तत्र गृहीतास्ति.

सद्योमार्जितदाक्षिणात्यतरुणीदन्तावदातद्युति-
श्चन्द्रः सुन्दरि दृश्यतामयमितश्चण्डीशचूडामणिः ॥'

अत्रापि चन्द्रमसः शृङ्गारान्तरङ्गैरनङ्गोद्दीपनैः पदैर्निर्वर्तितो वाक्यार्थः सदर्थौचित्यसामर्थ्येनात्यर्थमर्थनीयतां प्राप्तः ।

न तु यथास्यैव—

'नाले शौर्यमहोत्पलस्य विपुले सेतौ समिद्वारिधेः
शश्वत्खड्गभुजंगचन्दनतरौ क्रीडोपधाने श्रियः ।
आलाने जयकुञ्जरस्य सुदृशां कंदर्पदर्पे परं
श्रीदुर्योधनदोष्णि विक्रमपरे लीनं जगन्नन्दतु ॥'

अत्रातिशयपरकर्कशसोत्कर्षसुभटभुजस्तम्भस्यासमुचितेन कुवलयनालतुलाधिरोपणेन वाक्यार्थः सोपहासतयेव निबद्धः परिज्ञायते ।

प्रबन्धार्थौचित्यं दर्शयितुमाह—

उचितार्थविशेषेण प्रबन्धार्थः प्रकाश्यते ।
गुणप्रभावभव्येन विभवेनेव सज्जनः ॥ १३ ॥

अम्लानप्रतिभाप्रकर्षोत्प्रेक्षितेन सकलप्रबन्धार्थाप्यायिपीयूषवर्षेण समुचितार्थविशेषेण महाकाव्यं स्फुरदिव चमत्कारकारितामापद्यते ।

यथा कालिदासस्य—

'जातं वंशे भुवनविदिते पुष्करावर्तकानां
जानामि त्वां प्रकृतिपुरुषं कामरूपं मघोनः ।
तेनार्थित्वं त्वयि विधिवशाद्दूरबन्धुर्गतोऽहं
याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामा ॥'

अत्राचेतनस्य चेतनाध्यारोपेण मेघस्य दौत्ययोग्यताधानाय प्रथितपुष्करावर्तकपर्जन्यवंश्यत्वममात्यप्रकृतिपुरुषत्वं च यदुपन्यस्तं तेन समस्तप्रबन्धस्याभिधानतोत्प्रेक्षितेतिवृत्तरुचिरतरस्य निरतिशयमौचित्यमुद्द्योतितम् ।

यथा वा भवभूतेः—

'(नेपथ्ये ।)

योऽयमश्वः पताकेयमथवा वीरघोषणा ।
सप्तलोकैकवीरस्य दशकण्ठकुलद्विषः ॥

लवः—(सगर्वमिव ।) अहो संतापनान्यक्षराणि । भो भोः, किमक्षत्रिया पृथिवी यदेवमुद्घुष्यते । (विहस्य ।) आः, किं नाम स्फुरन्ति शस्त्राणि । (धनुरारोपयन् ।)

ज्याजिह्वया वलयितोत्कटकोटि दंष्ट्र-
मुद्गारिघोरघनघर्घरघोषमेतत् ।
ग्रासप्रसक्तहसदन्तकवक्त्रयन्त्र-
जृम्भाविडम्बिविकटोदरमस्तु चापम् ॥'

अत्रार्थे रामायणकथातिक्रमेण नूतनोत्प्रेक्षिता रामतनयस्य सहजविक्रमानुसारिणी शौर्योत्कर्षभूमिः परप्रतापस्पर्शासहिष्णुता प्रबन्धस्य रसबन्धुरामौचित्यच्छायां प्रयच्छति ॥

न तु यथा राजशेखरस्य—

'रावणः—यत्पार्वतीहठकचग्रहणप्रवीणे
पाणौ स्थितं पुरभिदः शरदां सहस्रम् ।
गीर्वाणसारकणनिर्मितगात्रमत्र
तन्मैथिलीक्रयधनं धनुराविरस्तु ॥

जनकः—आविरस्तु सममगर्भसंभवया सीतया ।'

अत्र 'आविरस्तु समं सीतया' इति जनकराजेन यदुच्यते तेनास्य पिशिताशनाय तनयाप्रतिपादनमभिमतमिवोपलक्ष्यते । न चैतद्विद्मः कथं भक्ष्यभूता कुसुमकोमलाङ्गी पुरुषादाय प्रतिपाद्यते । इत्यनौचित्येन प्रसिद्धेन वृत्तवैपरीत्यं परं हृदयविसंवादमादधाति ।

यथा वा कालिदासस्य—

'ऊरुमूलनखमार्गपङ्क्तिभिस्तत्क्षणं हृतविलोचनो हरः ।
वाससः प्रशिथिलस्य संयमं कुर्वतीं प्रियतमामवारयत् ॥'

अत्राम्बिकासंभोगवर्णने पामरनारीसमुचितनिर्लज्जसज्जनखराजिविराजितोरुमूलहृतविलोचनत्वं त्रिलोचनस्य भगवतस्त्रिजगद्गुरोर्यदुक्तं तेनानौचित्यमेव परं प्रबन्धार्थः पुष्णाति ।

गुणौचित्यं दर्शयितुमाह—

प्रस्तुतार्थोचितः काव्ये भव्यः सौभाग्यवान्गुणः ।
स्यन्दतीन्दुरिवानन्दं संभोगावसरोदितः ॥ १४ ॥

प्रस्तुतस्यार्थस्यौचित्येनौजःप्रसादमाधुर्यसौकुमार्यादिलक्षणो गुणः काव्ये भव्यः सौभाग्यवत्तामवाप्तः सहृदयानन्दसंदोहमिन्दुरिव स्यन्दति ॥

यथा भट्टनारायणस्य[1]—

'महाप्रलयमारुतक्षुभितपुष्करावर्तक-
प्रचण्डघनगर्जितप्रतिरवानुकारी मुहुः ।
रवः श्रवणभैरवः स्थगितरोदसीकंदरः
कुतोऽद्य समरोदधेरयमभूतपूर्वः पुरः ॥'

अत्रौजस्विनः भटमुकुटमणेरश्वत्थाम्नः स्फूर्जदूर्जितप्रतापानुरूपं वाक्यमोजसा काव्यगुणेनोदग्रतामवाप्तं सहस्रगुणमिव विक्रमौचित्यगौरवमावहति ॥

यथा वा भट्टबाणस्य[2]—

'हारो जलार्द्रवसनं नलिनीदलानि
प्रालेयशीकरमुचस्तुहिनांशुभासः ।
यस्येन्धनानि सरसानि च चन्दनानि
निर्वाणमेष्यति कथं स मनोभवाग्निः ॥'

अत्र विप्रलम्भभरभग्नधैर्यायाः कादम्बर्या विरहव्यथावर्णना माधुर्यसौकुमार्यादिगुणयोगेन पूर्णेन्दुवदनेव प्रियंवदत्वेन हृदयानन्ददायिनीं दयिततमतामातनोति ॥

---

१. अयं वेणीसंहारकर्ता नारायणभट्टः ९९९ शके अर्थात् १०७७ मिते ख्रिस्तसंवत्सरे कान्यकुब्जदेशाद्वङ्गदेशं गत इति वङ्गदेशीयानां निश्चयः परंतु ख्रिस्तसंवत्सरीयनवमशतकमध्यभागसमुद्भूतेनानन्दवर्धनाचार्येण बहवो वेणीसंहारश्लोकाः स्वकीये ध्वनिग्रन्थे समुदाहृताः, तस्मान्नवमशतकमध्यभागादपि पूर्वमासीद्वेणीसंहारकर्ता भट्टनारायणः, अतो वङ्गदेशीयानां मतमत्र नादरणीयम्. २. बाणभट्टः ख्रिस्तसंवत्सरीयसप्तमशतकस्य पूर्वभाग आसीत्. एतत्कृता त्वियं श्लोकबद्धा कादम्बरीकथा नाद्याप्युपलब्धा.

न तु यथा चन्द्रकस्य[1]—

'युद्धेषु भाग्यचपलेषु न मे प्रतिज्ञा
दैवं नियच्छति जयं च पराजयं च ।
एषैव मे रणगतस्य सदा प्रतिज्ञा
पश्यन्ति यन्न रिपवो जघनं हयानाम् ॥'

अत्र क्षत्रवृत्तिरिवौजसा काव्यगुणेनास्पृष्टा सुभटोक्तिरुचितार्थापि तेजोजीवितविरहिता दुर्गतगृहदीपशिखेव मन्दायमाना न विद्योतते ॥

यथा वा राजशेखरस्य—

'एतस्याः स्मरसंज्वरः करतलस्पर्शैः परीक्ष्यो न यः
स्निग्धेनापि जनेन दाहभयतः प्रस्थंपचः पाथसाम् ।
निर्वीर्यीकृतचन्दनौषधविधौ तस्मिंस्तडत्कारिणो
लाजस्फोटममी स्फुटन्ति मणयः सर्वेऽपि हारस्रजाम् ॥'

अत्र विरहविधुररमणीमनोभवावस्थानुरूपं माधुर्यमुत्सृज्य तडत्कारिणो लाजस्फोटं स्फुटन्तीत्योजःस्फूर्जितोर्जितस्वभावाधिवासिता सूक्तिर्लावण्यपेशलतनुर्ललितललनेव परुषभाषिणी झटित्यनौचित्यं चेतसि संचारयति ॥

अलंकारौचित्यं दर्शयितुमाह—

**अर्थौचित्यवता सूक्तिरलंकारेण शोभते ।**
**पीनस्तनस्थितेनेव हारेण हरिणेक्षणा ॥ १५ ॥**

प्रस्तुतार्थस्यौचित्येनोपमोत्प्रेक्षारूपकादिनालंकारेण सूक्तिश्चकास्ति कामिनीवोच्चकुचचुम्बिना रुचिरमुक्ताकलापेन ॥

---

१. अयं चन्द्रककविः कश्मीरदेशे तुञ्जीनस्य राज्यकाले बभूव. 'नाट्यं सर्वजनप्रेक्ष्यं यश्चक्रे स महाकविः । द्वैपायनमुनेरंशस्तत्काले चन्द्रकोऽभवत् ॥' इति राजतरङ्गिणी (२।१६). तुञ्जीनश्च ख्रिस्तसंवत्सरप्रारम्भात् १०३ मितवर्षपूर्वं राज्यसिंहासनमारुरोहेति बहूनां मतम्. कनिङ्घ्याममते तु ३१९ मिते ख्रिस्तसंवत्सरे तुञ्जीनो राज्यसिंहासनमारूढः. अत्र बहूनां मतमेव ग्राह्यम्.

यथा श्रीहर्षस्य—

'विश्रान्तविग्रहकथो रतिमाञ्जनस्य
चित्ते वसन्प्रियवसन्तक एव साक्षात् ।
पर्युत्सुको निजमहोत्सवदर्शनाय
वत्सेश्वरः कुसुमचाप इवाभ्युपैति ॥'

अत्र वत्सेश्वरस्य कुसुमचापेनोपमा शृङ्गारावसरसरसचारुतरतामौचित्येन कामपि चेतश्चमत्कारिणीमाविष्करोति ॥

न तु यथा चन्दकस्य—

'खगोत्क्षिप्तैरन्त्रैस्तरुशिरसि दोलेव रचिता
शिवा तृप्ताहारा स्वपिति रतिखिन्नेव वनिता ।
तृषार्तो गोमायुः सरुधिरमसिं लेढि बहुशो
बिलान्वेषी सर्पो हतगजकराग्रं प्रविशति ॥'

अत्रानुचितस्थानस्थितायाः पुरुषपिशिततृप्तसुप्तायाः शिवायाः सुरतकेलिक्लान्तकान्तया विच्छायैवोपमा परं वैपरीत्यं प्रकाशयति ॥

यथा वा मालवरुद्रस्य[1]—

'अभिनववधूरोषस्वादः करीषतनूनपा-
दसरलजनाश्लेषक्रूरस्तुषारसमीरणः ।
गलितविभवस्याज्ञेवाद्य द्युतिर्मसृणा रवे-
र्विरहिवनितावक्त्रौपम्यं बिभर्ति निशाकरः ॥'

अत्र कोमलकामिनीकोपेन करीषकृशानोः सादृश्यं शीतसमयस्वादुतया हृदयसंवादसुन्दरमप्यनुचितत्वेन सहसैव चेतसः संकोचमिवादधाति ॥

यथा वा राजशेखरस्य—

'चिताचक्रं चन्द्रः कुसुमधनुषो दग्धवपुषः
कलङ्कस्तत्रत्यः स्पृशति मलिनाङ्गारकलनाम् ।
यदेतत्सज्योतिर्दरदलितकर्पूरधवलं
मरुद्भिर्भस्मैतत्प्रसरति विकीर्णं दिशि दिशि ॥'

---

१. सुभाषितहारावलावयं श्लोको भासकवेः.

अत्राप्यानन्दिसुधावस्यन्दसुन्दरस्येन्दोश्चिताचक्रत्वमनुचिततया कर्णकटु-कमातङ्कमिवातनोति। योऽर्थस्तु हृदयसंवादी स यद्यनौचित्यस्पर्शलेश-रहितस्तदधिकतरामलंकारशोभां पुष्णाति॥

यथा कार्पटिकस्य—

'शीतेनोद्धृषितस्य माषशिमिवच्चिन्तार्णवे मज्जतः
शान्ताग्निं स्फुटिताधरस्य धमतः क्षुत्क्षामकण्ठस्य मे।
निद्रा कापि विमानितेव दयिता संत्यज्य दूरं गता
सत्पात्रप्रतिपादितेव वसुधा न क्षीयते शर्वरी॥'

अत्रानौचित्यस्पर्शपरिहारेण केवलं हृदयसंवादसौन्दर्यमेव स्वादुता-मादधाति॥

रसौचित्यं दर्शयितुमाह—

**कुर्वन्सर्वाशये व्याप्तिमौचित्यरुचिरो रसः।**
**मधुमास इवाशोकं करोत्यङ्कुरितं मनः॥ १६॥**

औचित्येन भ्राजिष्णुः शृङ्गारादिलक्षणो रसः सकलजनहृदयव्यापी वसन्त इवाशोकतरुमङ्कुरितं मनः करोति॥

यथा श्रीहर्षस्य—

'उद्दामोत्कलिकां विपाण्डुररुचं प्रारब्धजृम्भां क्षणा-
दायासं श्वसनोद्गमैरविरलैरातन्वतीमात्मनः।
अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवं
पश्यन्कोपविपाटलद्युति मुखं देव्याः करिष्याम्यहम्॥'

अत्रेर्ष्याविप्रलम्भरूपस्य शृङ्गाररसस्य वासवदत्तायामवेक्ष्यमाणस्य नवमालिकालतायां ललितवनितातुल्यतया विरहावस्थारोपणेन नितरामौ-चित्यरुचिरचमत्कारकारिणी दीप्तिरुपपादिता॥

यथा वा कालिदासस्य—

'बालेन्दुवक्राण्यविकासभावाद्बभुः पलाशान्यतिलोहितानि।
सद्यो वसन्तेन समागतानां नखक्षतानीव वनस्थलीनाम्॥'

---

१. राजतरङ्गिण्याम् (३।१८१) अयं श्लोको मातृगुप्तस्य.

अत्र पार्वत्यां परमेश्वरस्याभिलाषशृङ्गारे वक्ष्यमाणे प्रथममुद्दीपनविभावभूतस्य वसन्तस्य वर्णनायां कामुकाध्यारोपेण वनस्थलीललनानां कुटिललोहितपलाशकलिकाभिर्नवसंगमयोग्यनखक्षतान्युत्प्रेक्षितानि परमामौचित्यचारुतां प्रतिपादयन्ति ॥

न तु यथास्यैव—

'वर्णप्रकर्षे सति कर्णिकारं दुनोति निर्गन्धतया स्म चेतः ।
प्रायेण सामग्र्यविधौ गुणानां पराङ्मुखी विश्वसृजः प्रवृत्तिः ॥'

अत्र केवलकर्णिकारकुसुमवर्णनमात्रेण विधातृवाच्यतागर्भेणैव प्रस्तुतशृङ्गारानुपयोगिना तदुद्दीपनविभावोचितं न किंचिदभिहितम् ॥

हास्यरसे यथा मम लावण्यवतीनाम्नि काव्ये—

'सीधुस्पर्शभयान्न चुम्बसि मुखं किं नासिकां गूहसे
रे रे श्रोत्रियतां तनोषि विषमां मन्दोऽसि वेश्यां विना ।
इत्युक्त्वा मदघूर्णमाननयना वासन्तिका मालती
लीनस्यात्रिवसोः करोति बकुलस्येवासवासेचनम् ॥'

अत्र श्रोत्रियस्यात्रिवसोरपवित्रसीधुस्पर्शशङ्कासंकोचनिलीनस्य शुष्कबकुलवृक्षस्येव सरसतापादनाय वेशविलासिन्या यदासवासेचनं तदङ्गभूतशृङ्गाररसाभासस्पर्शेन हास्यरसस्य वरासवस्येव सहकाररसवेधेन सचमत्कारमौचित्यमाचिनोति ॥

यथा वा मम लावण्यवत्यामेव—

'मार्गे केतकसूचिभिन्नचरणा सीत्कारिणी केरली
रम्यं रम्यमहो पुनः कुरु विटेनेत्यर्थिता सस्मिता ।
कान्ता दन्तचतुष्कबिम्बितशशिज्योत्स्नापटेन क्षणं
धूर्तालोकनलज्जितेव तनुते मन्ये मुखाच्छादनम् ॥'

अत्रापि हास्यरसस्य कुटिलविटनर्मोक्तिवचनौचित्येन शृङ्गाररसाभासाधिवासितस्य सचमत्कारः परः परिपोषः समुन्मिषति ॥

न तु यथा श्यामलस्य—

'चुम्बनसक्तः सोऽस्या दशनं च्युतमूलमात्मनो वदनात् ।
जिह्वामूलप्राप्तं खाडिति कृत्वा निरष्ठीवत् ॥'

अत्र हास्यरसस्य बीभत्सरसाधिवासितस्य लशुनलिप्तस्येव कुसुमशेखरस्यातिजुगुप्सितत्वादनीप्सितस्य परमानौचित्येन चमत्कारस्तिरोहितः । वृद्धापरिचुम्बने जिह्वामूलप्राप्तस्य च्युतदशनस्य कण्ठलोठिनः ष्ठीवनेन बीभत्सस्यैव प्राधान्यम्, न तु हास्यरसस्य ॥

करुणो यथा मम मुनिमतमीमांसायाम्—

'प्रत्यग्रोपनताभिमन्युनिधने हा वत्स हा पुत्रके-
त्यश्मद्रावि सुभद्रया प्रलपितं पार्थस्य यत्तत्पुरः ।
येनोद्बाष्पविमुक्तशष्पकवलैः सेनातुरंगैरपि
न्यञ्चत्पार्श्वगतैककर्णकुहरैर्निःस्पन्दमन्दं स्थितम् ॥'

अत्र प्रत्यग्रोपनतप्रियतरतनयवियोगोपजनितशोकाख्यस्थायिभावोचितं दृषदामपि हृदयद्रावणं सुभद्रया यत्प्रलपितं तदर्जुनचेतसि प्रतिफलितं न केवलमुद्दीप्ततामुपगतं यावत्तिरश्चां तुरंगमाणामप्यन्तः संक्रान्तमुद्बाष्पविमुक्तशष्पकवलनिःस्पन्दस्थितादिभिरनुभावैरुदीर्णतरुणकरुणरसप्रतिपत्तिं किमप्यादधाति ॥

न तु यथा परिमलस्य—

'हा शृङ्गारतरङ्गिणीकुलगिरे हा राजचूडामणे
हा सौजन्यसुधानिधान हहहा वैदग्ध्यदुग्धोदधे ।
हा देवोज्जयिनीभुजंग युवतिप्रत्यक्षकंदर्प हा
हा सद्बान्धव हा कलामृतकर कासि प्रतीक्षस्व नः ॥'

अत्र हाहेति हतमहीपतिविरहे तद्गुणामन्त्रणपदैर्वक्तृवक्त्रगत एव शोकः केवलमुपलक्ष्यते । न तु विभावानुभावव्यभिचारिसंयोगेन शोकाख्यस्य स्थायिभावस्योचितं रसीकरणं किंचिन्निष्पन्नम् ॥

रौद्रे यथा भट्टनारायणस्य—

'यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदः पाण्डवीनां चमूनां
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा ।
यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपं
क्रोधान्धस्तस्य तस्य स्वयमपि जगतामन्तकस्यान्तकोऽहम् ॥'

अत्र क्रूरक्रोधस्थायिभावात्मकस्योन्निद्ररौद्ररसस्योचिता शिशुस्थविरगर्भगतविशसननिस्त्रिंशकर्माध्यवसायाधिरोहणसंवादिनी द्रोणवधविधुरामर्षविषविषमव्यथाकश्मलशिथिलमश्वत्थाम्नः स्थेमानं प्रतिज्ञापयति ॥

न तु यथा श्रीप्रवरसेनस्य[1]—

'दणुइन्दरुहिरलग्गे[2] जस्स फुरन्ते णहप्पहाविछड्डे ।
गुप्पन्ती विवलाआ गलिअत्थणंसुए महासुरलच्छी ॥'

अत्र क्रोधव्यञ्जकपदविरहिततया 'दनुजेन्द्ररुधिरलग्ने यस्य नरसिंहस्य स्फुरति नखप्रभासमूहे व्याकुलीभवन्ती विपलायिता गलितस्तनांशुका महासुरलक्ष्मीः' इति वर्णनया रुधिरलग्न इति बीभत्सरससंस्पर्शे व्याकुलीभवन्ती दैत्यश्रीः पलायितेति भयानकरससंकरेण प्रकृतोचितप्रधानभूतस्य रौद्ररसस्य क्वचिन्मुखमपि न दृश्यते ॥

वीरे यथा मम नीतिलतायाम्—

'शौर्याराधितभर्गभार्गवमुनेः शस्त्रग्रहोन्मार्गिणः
संक्षेपेण निवार्य संक्षयमयीं क्षत्रोचितां तीक्ष्णताम् ।
आकर्णायतकृष्टचापकुटिलभ्रूभङ्गसंसर्गिणा
येनान्यायनिषेधिना शममयी ब्राह्मी प्रदिष्टा स्थितिः ॥'

अत्र 'सोऽयं रामः' इति रावणाग्रे शुकसारणाभ्यां दूरान्निर्दिश्यमानस्य रामस्य निःसंरम्भगम्भीरावष्टम्भसंभाव्यमानप्रभावोचितायां शस्त्रसंग्रहोन्मार्गगामिनो भार्गवस्य मुनेः स्वजातिसमुचितस्थित्युपदेशे सति प्रभविष्णुतायां चापरूपभङ्ग्या भ्रूभङ्गः प्रदर्शितः, न तु स्वाभाविकः,

---

१. अयं रावणवधापरनामकसेतुबन्धाख्यप्राकृतकाव्यस्य कर्ता प्रवरसेनः कश्मीरमहाराज असीत्. १२३ मिते ख्रिस्तसंवत्सरेऽस्य राज्यप्रारम्भ इति बहूनां मतम्. कनिङ्ग्हाममते तु ४३२ मिते ख्रिस्तसंवत्सरे प्रवरसेनराज्यप्रारम्भः. 'कीर्तिः प्रवरसेनस्य प्रयाता कुमुदोज्ज्वला । सागरस्य परं पारं कपिसेनेव सेतुना ॥' इति हर्षचरितप्रारम्भे बाणभट्टः. 'महाराष्ट्राश्रयां भाषां प्रकृष्टं प्राकृतं विदुः । सागरः सूक्तिरत्नानां सेतुबन्धादि यन्मयम् ॥' इति काव्यादर्शे (१।३४) आचार्यदण्डी. २. सेतुबन्धकाव्ये (१।२) 'दनुजेन्द्ररुधिरलग्ने यस्य स्फुरति नखप्रभासमूहे । व्याकुलीभवन्ती विपलायिता गलितस्तनांशुका महासुरलक्ष्मीः ॥' इति च्छाया.

वीरस्य क्रोधे विकारासंभवात् । प्रसन्नमधुरधीरा हि वीरवृत्तिः । तदुचितमत्राभिहितम् । भार्गवाभिभवेन च प्रधाननायकस्योत्कर्षः प्रतिपादितः ॥

यथा वा राजशेखरस्य—

'स्त्रीणां मध्ये सलीलं भ्रमितगुरुगदाघातनिर्नष्टसंज्ञः
सद्यो वध्योऽभवस्त्वं पशुरिव विवशस्तेन राज्ञार्जुनेन ।
तस्य च्छेत्तापि योऽसौ सकलनृपरिपुर्जामदग्न्यो भुजानां
जित्वोच्चैः सोऽपि येन द्विज इति न हतस्तापसस्त्वेष रामः ॥'

अत्र रावणकार्तवीर्यजामदग्न्योत्कर्षोत्कर्षतरसोपानपरम्पराधिरोहणक्रमेण प्रधाननायकस्य प्रतापः परां कोटिमारोपितः ॥

न तु यथा भवभूतेः—

'वृद्धास्ते न विचारणीयचरितास्तिष्ठन्तु हुं वर्तता
युद्धं स्त्रीदमनेऽप्यखण्डयशसो लोके महान्तो हि ते ।
यानि त्रीणि कुतोमुखान्यपि पदान्यासन्खरायोधने
यद्वा कौशलमिन्द्रसूनुदमने तत्राप्यभिज्ञो जनः ॥'

अत्राप्रधानस्य रामसूनोः कुमारलवस्य परप्रतापोत्कर्षासहिष्णोर्वीररसोद्दीपनाय सकलप्रबन्धजीवितसर्वस्वभूतस्य प्रधाननायकगतस्य वीररसस्य ताडकादमनखररणापसरणान्यरणसंसक्तवालिव्यापादनादिजनविहितापवादप्रतिपादनेन स्ववचसा कविना विनाशः कृत इत्यनुचितमेतत् ॥

भयानके यथा श्रीहर्षस्य—

'कण्ठे कृत्तावशेषं कनकमयमधः शृङ्खलादाम कर्ष-
न्क्रान्त्वा द्वाराणि हेलाचलचरणरणत्किङ्किणीचक्रवालः ।
दत्तातङ्कोऽङ्गनानामनुसृतसरणिः संभ्रमादश्वपालैः
प्रभ्रष्टोऽयं प्लवङ्गः प्रविशति नृपतेर्मन्दिरं मन्दुरायाः ॥

अपि च ।

नष्टं वर्षवरैर्मनुष्यगणनाभावादकृत्वा त्रपा-
मन्तः कञ्चुकिकञ्चुकस्य विशति त्रासादयं वामनः ।

पर्यन्ताश्रयिभिर्निजस्य सदृशं नाम्नः किरातैः कृतं
कुब्जा नीचतयैव यान्ति शनकैरात्मेक्षणाशङ्किनः ॥'

अत्राङ्गनानां निशितदशननखशिखोल्लेखातङ्कदानेन प्रचुरतरवानराभिसरणभयसंभ्रान्तान्तःपुरिकवृद्धवामनकिरातकुब्जादीनां पुरुषगणनाविहीनतया धैर्यविरहकातराणामुचितचेष्टानुभाववर्णनया भयानकरससंवादिरुचिरौचित्यमाचकास्ति ॥

न तु यथा राजपुत्रमुक्तापीडस्य[1]—

'नीवारप्रसराग्रमुष्टिकवलैर्यो वर्धितः शैशवे
पीतं येन सरोजपत्रपुटके होमावशेषं पयः ।
तं दृष्ट्वा मदमन्थरालिवलयव्यालोलगल्लं(ण्डं) गजं
सानन्दं सभयं च पश्यति मुहुर्दूरे स्थितस्तापसः ॥'

अत्र गजस्याघातकविकृतचेष्टानुवर्णनाविरहिततया स्थायिभावस्य भयानुभाववर्जितस्य केवलं नाममात्रोदीरणेन च भयानकरसोचितसंभ्रमाभावादुपचितमौचित्यं न किंचिदुपलभ्यते ॥

वीभत्से यथा मम मुनिमतमीमांसायाम्—

'सर्वापायचयाश्रयस्य नियतं कुत्सानिकायस्य किं
कायस्यास्य विभूषणैः सुवसनैरानन्दनैश्चन्दनैः ।
अन्तर्यस्य शकृद्यकृत्कृमिकुलक्लोमान्त्रमालाकुले
क्लेदिन्यन्तदिने प्रयान्ति विमुखाः कौलेयकाका अपि ॥'

अत्र वैराग्यवासनाच्छुरितबीभत्सरसस्य जुगुप्साख्यस्थायिभावोचितकायगतकुत्सिततरान्त्रतन्त्रादिसमुदीरणेन परा परिपुष्टिर्निःसारशरीराभिमानवैरस्यजननी प्रतिपादिता ॥

न तु यथा चन्द्रकस्य—

'कृशः काणः खञ्जः श्रवणरहितः पुच्छविकलः
क्षुधाक्षामो रूक्षः पिठरककपालार्दितगलः ।

१. मुक्तापीड इति कश्मीरमहीपतेर्ललितादित्यस्य नामान्तरम्. सुभाषितावलावयं श्लोको भश्रुनाम्ना लिखितः. कदाचिन्मुक्तापीडस्यैव बाल्यावस्थोचितं भश्रुरिति नाम स्यात्.

व्रणैः पूतिक्लिन्नैः कृमिपरिवृतैरावृततनुः
शुनीमन्वेति श्वा तमपि मदयत्येष मदनः ॥'

अत्राशुचिचर्वणरुचेरुपचितविचिकित्सकुत्सानिकायकायस्य स्वभावजुगुप्सितयोनेः शुनकस्य किमेतैर्बीभत्सविशेषणैरतिशयनिर्बन्धानुबद्धैरधिकमुद्भासितम् । एतैरेव पुरुषगतैर्जुगुप्सा परं गौरवमावहति ॥

अद्भुते यथा चन्दकस्य—

'कृष्णेनाम्ब गतेन रन्तुमधुना मृद्भक्षिता स्वेच्छया
सत्यं कृष्ण क एवमाह मुसली मिथ्याम्ब पश्याननम् ।
व्यादेहीति विकासितेऽथ वदने दृष्ट्वा समस्तं जग-
न्माता यस्य जगाम विस्मयपदं पायात्स वः केशवः ॥'

अत्र पाण्डुराङ्गकरसाक्षिलक्षितमृद्भक्षणाक्षेपोद्यतजननीभयचकितस्यापह्नवकारिणः शिशोर्विकासितास्यस्यान्तः समस्तजगद्दर्शनेन मातुश्च तत्प्रभावानभिज्ञतया वात्सल्यविह्वलाया विस्मयगमनेनात्युचितोऽयमद्भुतातिशयः ॥

न तु यथा मम मुनिमतमीमांसायाम्—

'समस्ताश्चर्याणां जलनिधिरपारः सवसति-
स्ततोऽप्याश्चर्यं यत्पिबति सकलं तं किल मुनिः ।
इदं त्वत्याश्चर्यं लघुकलशजन्मापि यदसौ
परिच्छेत्तुं को वा प्रभवति तवाश्चर्यसरणिम् ॥'

अत्रापारसरित्पतिप्रभावेण मुनिना तस्यैकचुलकाचमनेन मुनेश्च लघुकलशजन्मना क्रमाक्रान्तिसमारूढोऽप्यसमविस्मयमयोऽयमद्भुतप्रसरः संसारस्यैवंविधैवाश्चर्यसरणिरपरिच्छिन्ना न किंचिदेतत्कौतुकमित्यर्थान्तरन्याससामर्थ्येन सहसैवावरोपित इव तिरोभूततामुपगतः ॥

शान्ते यथा मम चतुर्वर्गसंग्रहे—

'भोगे रोगभयं सुखे क्षयभयं वित्तेऽग्निभूभृद्भयं
दास्ये स्वामिभयं गुणे खलभयं वंशे कुयोषिद्भयम् ।
माने म्लानिभयं जये रिपुभयं काये कृतान्ताद्भयं
सर्वं नाम भवे भवेद्भयमहो वैराग्यमेवाभयम् ॥'

अत्र सकलजनाभिमतभोगसुखवित्तादीनां भयमयतया हेयतां प्रतिपाद्य वैराग्यमेव सकलभयायासशमनमुपादेयतया यदुपन्यस्तं तेन शान्तरसस्य निरर्गलमार्गावतरणमुचिततरमुपदिष्टं भवति ॥

यथा वा मम मुनिमतमीमांसायाम्—

'कुसुमशयनं पाषाणो वा प्रियं भवनं वनं
प्रतनु मसृणस्पर्शं वासस्त्वगप्यथ तारवी ।
सरसमशनं कुल्माषो वा घनानि तृणानि वा
शमसुखसुधापानक्षैब्ये समं हि महात्मनाम् ॥'

अत्र सकलविकल्पतल्परहिताभेदावभासमानात्मतत्त्वविश्रान्तिजनितसर्वसाम्यसमुल्लसितशमसुखपीयूषपानोदितनित्यानन्दघूर्णमानमानसानां प्रियाप्रियसुखदुःखादिषु महतां सदृशी प्रतिपत्तिरिति जीवन्मुक्तिसमुचितमभिहितम् ॥

न तु यथा श्रीमदुत्पलराजस्य[1]—

'अहौ वा हारे वा बलवति रिपौ वा सुहृदि वा
मणौ वा लोष्टे वा कुसुमशयने वा दृषदि वा ।
तृणे वा स्त्रैणे वा मम समदृशो यान्तु दिवसाः
क्वचित्पुण्यारण्ये शिवशिवशिवेति प्रलपतः ॥'

अत्र जीवन्मुक्तोचितं प्रियाप्रियरागद्वेषोपशमलक्षणमोक्षक्षमं सर्वसाम्यमहिहारसुहृदरिसमदृष्टिरूपमभिदधता क्वचित्पुण्यारण्ये यदभिहितं तद्विकल्पप्रतिपादकमभेदवासनाविरुद्धमनुचितमवभासते । धाराधिरूढसर्वसाम्यविगलितभेदाभिमानग्रन्थेर्हि सर्वत्र सर्वं शिवमयं पश्यतस्तपोवने नगरावस्करकूटे च विमलात्मलाभतृप्ततया समानदृशः क्वचित्पुण्यारण्यादिवचनमनुचितोच्चारणमेव ॥

**यथा मधुरतिक्ताद्या रसाः कुशलयोजिताः ।**
**विचित्रास्वादतां यान्ति शृङ्गाराद्यास्तथा मिथः ॥ १७ ॥**

---

१. अभिनवगुप्ताचार्यस्य परमगुरुः प्रत्यभिज्ञासूत्राद्यनेकग्रन्थकर्ता श्रीमदुत्पलराजः ख्रिस्तसंवत्सरीयदशमशतकस्य पूर्वार्धे एव कश्मीरदेश आसीत्.

तेषां परस्पराश्लेषात्कुर्यादौचित्यरक्षणम् ।
अनौचित्येन संस्पृष्टः कस्येष्टो रससंकरः ॥ १८ ॥

रसाः कटुकमधुराम्ललवणाद्याः कुशलसूदेन वेसवारपानादिषु योजिता विचित्रास्वादतामुपयान्ति तथैव परस्परमविरुद्धाः शृङ्गारादय इति । तेषामन्योन्यमङ्गाङ्गिभावयोजनायामौचित्यस्य जीवितसर्वस्वभूतस्य रक्षां कुर्यात् । अनौचित्यरजसा रससंयोगः स्पृष्टो न कस्यचिदभिमत इत्यर्थः ॥

रससंकरौचित्ये शान्तशृङ्गारयोरङ्गाङ्गिभावो यथा भगवतो महर्षेर्व्यासस्य—

'सत्यं मनोरमा रामाः सत्यं रम्या विभूतयः ।
किं तु मत्ताङ्गनापाङ्गभङ्गिलोलं हि जीवितम् ॥'

अत्र भगवता जन्तुहिताभिनिविष्टेन मोक्षक्षमोपदेशेऽङ्गिनः शान्तरसस्य रागिजनानिष्टत्वात्सकलजनमनःप्रह्लादने बालगुडजिह्विकया शृङ्गारेऽङ्गभावमुपनीते पर्यन्ते शान्तस्यैव लोलं जीवितमित्यनित्यताप्रतिपादनपरिनिर्वाहेण परममौचित्यमुच्चैः कृतम् ॥

बीभत्सशृङ्गारयोरङ्गाङ्गिभावो यथा मम बौद्धावदानकल्पलतायाम्—

'क्षीबस्येवाचलस्य द्रुतहृतहृदया जम्बुकी कण्ठसक्ता
रक्ताभिव्यक्तकामा कमपि नखमुखोल्लेखमासूत्रयन्ती ।
आस्वाद्यास्वाद्य यूनः क्षणमधरदलं दत्तदन्तव्रणाङ्कं
लग्नानङ्गक्रियायामियमतिरभसोत्कर्षमाविष्करोति ॥'

अत्र श्लेषोपमया तुल्यकक्षाधिरूढयोरपि परस्परविरुद्धयोरर्थयोर्बीभत्सशृङ्गाराङ्गाङ्गिभावयोजनायां जम्बुकी तरुणशवस्य क्षीबस्येव निश्चलस्थितेः सहसैव हृतहृदयपद्मा कृष्टचित्ता वा, कण्ठे लग्ना शोणिते भृशमभिव्यक्तस्पृहा रक्ताभिव्यक्तकामा वा, नखोल्लेखमासूत्रयन्ती दत्तदन्तव्रणमधरमास्वाद्यास्वाद्याङ्गच्छेदक्रियायामनङ्गभोगक्रियायां वा, लग्ना गात्राणामूर्ध्वगतं कर्षणं रतकौशलोत्कर्षं वा, प्रकाशयतीति समानयोर्बीभत्सशृङ्गारयोः कामिनीपदपरित्यागेन केवलं जम्बुकयाः कर्तृत्वेन बीभत्स-

स्यैव प्राधान्ये शृङ्गारेऽङ्गतामुपगते वक्तुर्बोधिसत्त्वस्यान्तर्गतगाढवैराग्यवासनाधिवासितचेतसः कुत्सार्हजुगुप्सया नितम्बिनीरतिविडम्बनमौचित्यरुचिरतामादधाति। यद्यप्यत्र महावाक्ये शान्तस्यैव प्राधान्यं तथाप्युदाहरणश्लोकवाक्ये बीभत्सस्यैव ॥

वीरकरुणयोर्यथा मम मुनिमतमीमांसायाम्—

'गाण्डीवस्रुवमार्जनप्रणयिनः स्नातस्य बाष्पाम्बुभि-
श्चण्डं खाण्डवपावकादपि परं शोकानलं बिभ्रतः ।
जिष्णोर्नूतनयौवनोदयदिनच्छिन्नाभिमन्योश्चिरं
हा वत्सेति बभूव सैन्धववधारब्धाभिचारे जपः ॥'

अत्र त्रिगर्तसङ्ग्रामगतस्य गाण्डीवधन्वनः शत्रुभिर्नवयौवनोदयसमयनिहततनयस्य कार्मुकस्रुवमुन्मार्जयतः प्रसरदश्रुस्नातस्य शोकाग्निमुद्वहतश्चिरं हा पुत्रेति जयद्रथवधारब्धाभिचारे जपो बभूवेति यदुपन्यस्तं तेनारिक्षये दीक्षासमुचितव्रतवर्णनया शोकाग्नेश्चण्डत्वेन खाण्डवपदोदीरणेन वीररसस्याङ्गिनः सहसैवागन्तुके करुणरसे प्रज्वलिते सैन्धववधारब्धाभिचाराभिधानेन पर्यन्ते शौर्यनिर्वाहेण परममौचित्यमुज्जृम्भते ॥

शान्तशृङ्गारकरुणबीभत्सानां यथा मम तत्रैव—

'तीक्ष्णान्तस्त्रीकटाक्षक्षतहृदयतया व्यक्तसंसक्तरक्ताः
क्रोधादिक्रूररोगव्रणगणगणनानीततीव्रव्यथार्ताः ।
स्नेहक्लेदातिलग्नैः कृमिभिरिव सुतैः स्वाङ्गजैर्भक्ष्यमाणाः
संसारक्लेशशय्यानिपतिततनवः पश्य सीदन्ति मन्दाः ॥'

अत्र मुख्यस्याङ्गिनः शान्तरसस्यैवोद्दीपने कारणीभूतास्तीक्ष्णान्तस्त्रीकटाक्षक्षतहृदयव्यथार्तस्नेहक्लेदातिलग्नकृमितुल्यतनयादिपदोपादानेन शृङ्गारकरुणबीभत्साः शान्तमुखप्रेक्षिणः संलीनतया स्तिमितवृत्तयो भृत्या इव परममौचित्यं दर्शयन्ति ॥

रससंकरस्यानौचित्यमुद्भावयितुमाह । शृङ्गारशान्तयोर्यथामरकस्य—

'गन्तव्यं यदि नाम निश्चितमहो गन्तासि केयं त्वरा
द्वित्राण्येव पदानि तिष्ठतु भवान्पश्यामि यावन्मुखम् ।

संसारे घटिकाप्रणालविगलद्धारा समे जीविते
को जानाति पुनस्त्वया सह मम स्याद्वा न वा संगमः ॥'

अत्र प्रकरणवर्तिनः शृङ्गाररसस्य पश्यामि यावन्मुखमित्युत्कण्ठोत्कण्ठासमुज्जृम्भमाणस्य स्वभावविरोधिनी शान्तेऽङ्गभावमुपनीते विस्तीर्णतरानित्यतावर्णनया वैराग्येण रतेर्न्यग्भावमापादयन्त्याप्रधानरससंबन्धेनाधिकमनौचित्यमुत्साहितम् । निःसारसंसाराचारुताश्रवणेन हि कठिनक्रियाक्रूरचेतसामप्युत्साहभङ्गादङ्गान्यलसीभवन्ति, किमुत कुसुमसुकुमारशृङ्गाररसकोमलमनसां विलासवताम् । प्रान्ते च शान्तपरिपोषनिर्वाहेण रागवैरस्यमेव पर्यवस्यति । तदुक्तमानन्दवर्धनेन—'विरोधी वाविरोधी वा रसोऽङ्गिनि रसान्तरे । परिपोषं न नेतव्यस्तेन स्यादविरोधिता ॥' तदेवात्र वैपरीत्येनोपलभ्यते परिपोषविपरीते स्वभावविरोधिन्यपि प्रधानानुपरोध एव ॥

यथा राजशेखरस्य—
'[1]माणं मुंचध देह वल्लहजणे दिट्ठिं तरंगुत्तरं
तारुण्णं दिअहाइं पंच दह वा पीणत्थणत्थंभणं ।
इत्थं कोइलिमंजुसिंजिणमिसाद्देवस्स पंचेसुणो
दिण्णा चित्तमहूसवेण सहसा आणव्व सव्वंकसा ॥'

अत्र 'मानं मुञ्चत ददत वल्लभजने दृष्टिं तरङ्गितां तारुण्यं दिनानि पञ्च दश वा पीनस्तनस्तम्भनमित्थं कोकिलमधुरध्वनिव्याजेन देवस्य पञ्चेषोश्चैत्रमहोत्सवेनाज्ञेव सर्वंकषा दत्ता' इति वाक्ये मुख्यः शृङ्गाररसः प्रारम्भपर्यन्तव्याप्तिशाली कतिपयदिवसस्थायि यौवनमित्यनित्यतारूपशान्तरसबिन्दुना मध्यत्रुडितेनेव विरसतां न नीतः । विरुद्धस्य परिपोषाभावात् । विरुद्धवर्णनोदितेन ह्यनौचित्येन स्थायी कुञ्जर इव श्वभ्रपातितः पुनरुत्थातुं

---

१. 'मानं मुञ्चत ददत वल्लभजने दृष्टिं तरङ्गोत्तरां तारुण्यं दिवसानि पञ्च दश वा पीनस्तनस्तम्भनम् । इत्थं कोकिलमञ्जुशिञ्जितमिषाद्देवस्य पञ्चेषोर्दत्ता चैत्रमहोत्सवेन सहसाज्ञेव सर्वंकषा ॥' इति च्छाया.

नोत्सहत इत्यलं विस्तरेण । अनया दिशा रससंकरे भेदप्रपञ्चौचित्यं विपश्चिद्भिः स्वयं विचार्यम् ॥

रसौचित्यविचारानन्तरमुद्देशानुसारक्रमेण क्रमोपगतं क्रियापदौचित्यं दर्शयितुमाह—

सगुणत्वं सुवृत्तत्वं साधुता च विराजते ।
काव्यस्य सुजनस्येव यद्यौचित्यवती क्रिया ॥ १९ ॥

काव्यस्य माधुर्यादिगुणवत्ता वसन्ततिलकादिसुवृत्तता परिपूर्णलक्षणसाधुता च विराजते, यद्यौचित्ययुक्तं क्रियापदं भवति । सुजनस्येवेति तत्तुल्यत्वं स्पष्टार्थमेव ॥

क्रियापदौचित्यं यथा मम नीतिलतायाम्—

'यः प्रख्यातजवः सदा स्थितिविधौ सप्ताब्धिसंध्यार्चने
दोर्दर्पेण निनाय दुन्दुभिवपुर्यः कालकंकालताम् ।
यः पातालमसृङ्मयं प्रविदधे निष्पिष्य मायाविनं
सुग्रीवाग्र्यविभूतिलुण्ठनपटुर्वाली स किं स्मर्यते ॥'

अत्र सप्ताब्धिसंध्यार्चनप्रख्यातजवो महिषरूपदुन्दुभिदानवोन्माथी मायाविदानवनिष्पेषोद्भूतशोणितपूरितपातालतलः स किं वाली स्मर्यत इति क्रियापदेन शुकसारणाभ्यां रावणस्य दुर्नयाभिनिवेशिनस्तद्विरामाय हितोपदेशेन भवान्वसनकोणनियमिततनुः कक्षायां निःक्षिप्त इत्युचितयुक्तियुक्तमुक्तं भवति ॥

न तु यथा श्रीप्रवरसेनस्य—

'सग्गं अपारिजाअं कोत्थुहलच्छिरहिअं महुमहस्स उरं ।
सुमिरामि महणपुरओ अमुद्धअन्दं हरअडापब्भारं ॥'

अत्र जाम्बुवताभिधीयमाने 'स्वर्गमपारिजातं कौस्तुभलक्ष्मीभ्यां विरहितं मधुमथनस्योरः स्मराम्यमृतमथनपुरतोऽप्यबालचन्द्रं हरजटाप्राग्भारम्'

१. सेतुबन्धे (४।२०) 'स्वर्गमपारिजातं कौस्तुभलक्ष्मीरहितं मधुमथनस्योरः । स्मरामि मथनपुरतोऽमुग्धचन्द्रं च हरजटाप्राग्भारम् ॥' इति च्छाया.

इति प्रगुणगुणाख्यानप्रसङ्गे क्रियापदेन जराजर्जरशरीरत्वमात्रमेव प्रतिपादितम् । न तु पौरुषोत्कर्षविशेषातिशयः कश्चिदुचितः संसूचितः ॥

कारकौचित्यं दर्शयितुमाह—

सान्वयं शोभते वाक्यमुचितैरेव कारकैः ।
कुलाभरणमैश्वर्यमौदार्यचरितैरिव ॥ २० ॥

उचितैरेव कारकैः सदन्वयवद्वाक्यं विराजते सद्वंशभूषितमैश्वर्यं सच्चरितैरिव ॥

कर्तृपदौचित्यं यथा भट्टबाणस्य—

'स्तनयुगमश्रुस्नातं समीपतरवर्ति हृदयशोकाग्नेः ।
चरति विमुक्ताहारं व्रतमिव भवतो रिपुस्त्रीणाम् ॥'

अत्र शत्रुस्त्रियो व्रतं चरन्तीति वक्तव्ये, स्तनयुगं बाष्पसलिलस्नातं शोकाग्निसमीपवर्ति विमुक्तभोजनं विगतमुक्ताहारं च सद्व्रतं चरतीत्युक्ते कर्तृपदमौचित्यमुपचितं जनयति ॥

न तु यथा परिमलस्य—

'आहारं न करोति नाम्बु पिबति स्त्रैणं न संसेवते
शेते यत्सिकतासु मुक्तविषयश्चण्डातपं सेवते ॥
त्वत्पादाब्जरजःप्रसादकणिकालोभोन्मुखस्तन्मरौ
मन्ये मालवसिंह गुर्जरपतिस्तीव्रं तपस्तप्यते ॥'

अत्र गुर्जरपतिर्विद्रुतो मरुगहनं प्रविष्टः परित्यक्ताहारादिसमस्तविषयश्चण्डातपोपसेवी तपश्चरतीति यदुक्तं तत्कर्तृपदस्य विशेषाभिप्रायोचितं न किंचिदुपलक्ष्यते शत्रुत्रासतरलतया मरुकान्तारान्तरावसन्नः सकलविषयसुखभोगपरिभ्रष्टः किमन्यत्कुरुताम् । स्तनयुगवत्कर्तृपदस्य चमत्कारोचितं न किंचिदभिहितम् ॥

कर्मपदौचित्यं यथा मम लावण्यवत्याम्—

'सदा सक्तं शैत्यं विमलजलधारापरिचितं
घनोल्लासः क्ष्माभृत्पृथुकटकपाती वहति यः ।

विधत्ते शौर्यश्रीश्रवणनवनीलोत्पलरुचिः
स चित्रं शत्रूणां ज्वलदनलतापं भवदसिः ॥'

अत्र निश्चलममलजलधारागतं शैत्यं तैक्ष्ण्यं शीतलत्वं च, घनोल्लासो निबिडोत्साहः पर्जन्यतुल्योदयश्च, क्ष्माभृतां सानुसैन्यनिपाती वहति स शौर्यश्रीश्रवणनवनीलोत्पलतुल्यस्त्वत्खड्गश्चित्रं शत्रूणां संतापं करोतीति यदुक्तं तत्कर्मभूतस्य तापस्य शिशिरतरसामग्रीजन्मनः परं वैचित्र्यं रुचिरमौचित्यमासूत्रितम् ॥

न तु यथा ममैवावसरसारे—

'भग्नाहितश्वसितवातविबोध्यमानः
काष्ठाश्रयेण सहसैव विवृद्धिमाप्तः ।
तापं तनोति निहतारिविलासिनीनां
वह्निद्युतिर्भुवननाथ भवत्प्रतापः ॥'

अत्र विद्रुताराातिनिःश्वसितानिलप्रबोध्यमानः काष्ठाश्रयेण दिक्चक्रपूरणेन प्रौढतां प्राप्तः पावकतुल्यस्त्वत्प्रतापः शत्रुकान्तानां तापमात्रं तनोतीति तत्समुचितमाश्चर्यं न किंचित् ॥

करणौचित्यं यथा गौडकुम्भकारस्य—

'लाङ्गूलेन गभस्तिमान्वलयितः प्रोतः शशी मौलिना
व्याधूता जलदाः सटाभिरुडवो दंष्ट्राभिरुत्तम्भिताः ।
प्रोत्तीर्णो जलधिर्दशैव हरिणा स्वैराट्टहासोर्मिभि-
र्लङ्केशस्य च लङ्घितो दिशि दिशि प्राज्यः प्रतापानलः ॥'

अत्र हरिणा हनुमता जलनिधितरणे तरणिलाङ्गूलेन वलयितः किरीटप्रान्तेन शशी प्रोतः सटाभिर्मेघा व्याधूतास्तारा दंष्ट्राभिरायासितास्तीर्णोऽब्धिर्दष्टैवाट्टहासतरङ्गैर्लङ्केशस्य विस्तीर्णः प्रतापाग्निः शमित इति बहुभिः करणपदैरुत्साहाधिवासितैर्विस्मयशिखरारोहणसोपानैरिव रघुपतिप्रभावारम्भविजयध्वजायमानस्य पवनसूनोरौचित्यातिशयः प्रकाशितः ॥

न तु यथा भट्टबाणस्य—

'जयत्युपेन्द्रः स चकार दूरतो बिभित्सया यः क्षणलब्धलक्षया ।
दृशैव कोपारुणया रिपोरुरः स्वयं भयाद्भिन्नमिवास्रपाटलम् ॥'

अत्र भगवतो नृसिंहस्य कोपरक्तया दृष्टैव क्षणलब्धलक्षया हिरण्यकशिपोर्वक्षः स्वयं भयाद्भिन्नमिवेति यदुक्तं तन्महोत्साहपराक्रमस्य प्रतिनायकस्य रिपोः प्रधाननायकप्रतापोद्दीपनोपकरणीभूताधिकधैर्यस्य स्वयं भयविह्वलतया हृदयस्फुटनमित्युपचितमनौचित्यं 'दृशैव' करणपदस्य शिरसि विश्रान्तम् ॥

संप्रदानौचित्यं यथा भट्टप्रभाकरस्य[1]—

'दिङ्मातङ्गघटाविभक्तचतुराघाटा मही साध्यते
सिद्धा सापि वदन्त एव हि वयं रोमाञ्चिताः पश्यत ।
विप्राय प्रतिपाद्यते किमपरं रामाय तस्मै नमो
यस्मादाविरभूत्कथाद्भुतमिदं यत्रैव चास्तं गतम् ॥'

अत्र दिग्गजचतुरस्रा भूः साध्यते, सा च सिद्धा हेलयैवान्नमुष्टिरिवैकस्मै विप्रमात्राय प्रतिपाद्यत इति निरतिशयौदार्याश्चर्यचमत्काररुचिरौचित्यचर्वणया वयं रोमाञ्चाञ्चिताः पश्यत, रोमाञ्चस्य प्रत्यक्षपरिदृश्यमानत्वात् । किमपरमपूर्वत्यागिने भार्गवाय तस्मै नम इति विप्रायेति संप्रदानपदगत एवोत्कर्षविशेषः प्रकाशते ॥

न तु यथा राजशेखरस्य—

'पौलस्त्यः प्रणयेन याचत इति श्रुत्वा मनो मोदते
देयो नैष हरप्रसादपरशुस्तेनाधिकं ताम्यति ।
तद्वाच्यः स दशाननो मम गिरा दत्ता द्विजेभ्यो मही
तुभ्यं ब्रूहि रसातलत्रिदिवयोर्निर्जित्य किं दीयताम् ॥'

अत्र रावणदूतेन परशुं याचितो भार्गवो ब्रूते—'नैष हरप्रसादलब्धः परशुर्दानयोग्यः । तत्तस्मादसद्वचसा स दशग्रीवो वाच्यः, पृथ्वी मया कश्यपाय प्रतिपादिता । तुभ्यं पातालत्रिदिवयोर्मध्यात्किं निर्जित्य दीयताम्'

---

१. कश्चन सुप्रसिद्धो मीमांसको भट्टप्रभाकर आसीत्, यस्य गुरुरिति नामान्तरम्.

इत्यनुचितं मुनेर्लोकहितप्रवृत्तस्य त्रैलोक्यकण्टकभूताय राक्षसाय भुवनप्रतिपादनम् ॥

अपादानौचित्यं यथा मालवरुद्रस्य—

'एतस्माज्जलधेर्मिताम्बुकणिकाः काश्चिद्गृहीत्वा ततः
पाथोदाः परिपूरयन्ति जगतीं रुद्धाम्बरा वारिभिः ।
भ्राम्यन्मन्दरकूटकोटिघटनाभीतिभ्रमत्तारकां
प्राप्यैकां जलमानुषीं त्रिभुवने श्रीमानभूदच्युतः ॥'

अत्र यदुक्तमेतस्मान्महोदधेः परिमिताम्बुकणिकाः प्राप्य जलदा जगत्पूरयन्ति तथा भ्रमन्मन्दरकूटकोटिसंघट्टत्रासतरलतारकामेकां जलमानुषीं श्रियं प्राप्य श्रीमानच्युतोऽभूदिति तेन सागरगतनिरतिशयोत्कर्षविशेषः प्रदर्शितः । एतस्माज्जलधेरित्येतत्पदमौचित्यस्य मूलभूमिः ॥

न तु यथा भट्टेन्दुराजस्य—

'आदाय वारि परितः सरितां मुखेभ्यः
किं नाम साधितमनेन महार्णवेन ।
क्षारीकृतं च वडवादहने हुतं च
पातालमूलकुहरे विनिवेशितं च ॥'

अत्र महार्णवव्यपदेशेनान्यायोपार्जितद्रविणदुर्व्ययकारिणः सत्संविभागविमुखस्य कस्यचिदुच्यते । सरितां मुखेभ्यः समन्तात्तोयमादायापात्रेभ्यः प्रतिपादितं दूषितम् । यत्त्वत्र सरिद्भ्यः समादायेति वक्तव्ये सरिन्मुखेभ्य इति यदुक्तं मुखशब्दस्य नैरर्थक्यादत्रानौचित्यमेव पर्यवस्यति ॥

अधिकरणौचित्यं यथा कुन्तेश्वरदौत्ये कालिदासस्य—

'इह निवसति मेरुः शेखरः क्ष्माधराणा-
मिह विनिहितभाराः सागराः सप्त चान्ये ।
इदमहिपतिभोगस्तम्भविभ्राज्यमानं
धरणितलमिहैव स्थानमस्मद्विधानाम् ॥'

१. प्रसिद्धेषु कालिदासग्रन्थेष्वयं श्लोको न प्राप्तः.

अत्र महाराजदूतोऽपि सामन्तास्थाने स्वप्रभुसमुचितगौरवपूजार्हमासनमनासाद्य कार्यवशेन भूमावेवोपविष्टः प्रागल्भ्यगाम्भीर्येणैवं ब्रूते यथा-स्मद्विधानां वसुधातल एव भुजगपतिभोगस्तम्भप्राग्भारनिष्कम्पे धरासने स्थानं युक्तं यस्मादिहैव मेरुरचलचक्रवर्ती समुपविष्टः सप्तमहाब्धयश्च तत्तुल्यतैवास्माकमित्यौचित्यमधिकरणपदसंबद्धमेव ॥

न तु यथा परिमलस्य—

'तत्र स्थितं स्थितिमतां वर देव दैवा-
द्भृत्येन ते चकितचित्तमियन्त्यहानि ।
उत्कम्पिनि स्तनतटे हरिणेक्षणानां
हारान्प्रवर्तयति यत्र भवत्प्रतापः ॥'

अत्र त्वद्भृत्येन मया तत्र तस्मिन्देशे स्थितं यत्र भवत्प्रतापः कम्पतरलस्तनतटे हरिणदृशां हारान्प्रवर्तयतीति यदुक्तं तेन शौर्यशृङ्गारगुणोत्कर्षस्तुतौ सर्वतो दिग्गमनाविच्छिन्नप्रसरः प्रतापः पारिमित्यं प्राप्तः । एकत्र परिच्छिन्ने देशे मया तत्र स्थितं यत्र त्वत्प्रतापस्तरुणीस्तनतटेषु हारतरलनं करोत्यन्यदेशे विलक्षणमुपलक्षणम् । सर्वगतश्चेत्प्रतापस्तत्सर्वत्रैव मया स्थितमिति वक्तव्ये तत्रेत्येकदेशाभिधायि पदं नोपपाद्यते । दस्युमात्रस्याप्येकदेशे जृम्भमाणप्रतापत्वात् । तदत्राधिकरणपदगतमनौचित्यमुपलभ्यते । तत्र तत्र मया स्थितं यत्र यत्र भवत्प्रताप इत्येव स्तुत्युचितं युक्तमुक्तं स्यात् ॥

लिङ्गौचित्यं दर्शयितुमाह—

**उचितेनैव लिङ्गेन काव्यमायाति भव्यताम् ।**
**साम्राज्यसूचकेनेव शरीरं शुभलक्ष्मणा ॥ २१ ॥**

प्रस्तुतार्थोचितेन लिङ्गेन काव्यं भव्यतामुपयाति, राजलक्षणेनेव शरीरम् ॥

यथा मम ललितरत्नमालायाम्—

'निद्रां न स्पृशति त्यजत्यपि धृतिं धत्ते स्थितिं न क्वचि-
द्दीर्घां वेत्ति कथां व्यथां न भजते सर्वात्मना निर्वृतिम् ।

तेनाराधयता गुणस्तव जपध्यानेन रत्नावलीं
निःसङ्गेन पराङ्गनापरिगतं नामापि नो सह्यते ॥'

अत्र वत्सेश्वरस्य रत्नावलीविरहविधुरचेतसः स्मरावस्थासमुचितं विदूषकेण सुसंगतायै यदभिहितं निद्रां न स्पृशति, धृतिं त्यजति, स्थितिं न धत्ते, दीर्घां कथां व्यथामिव वेत्ति, निर्वृतिं न भजते, तां विना तेन तद्गुणजापिना तद्ध्याननित्येन जनसङ्गत्यागिनान्यासामङ्गनानां नाममात्रमपि न सह्यते । स्थितिधृतिकथानिर्वृतीनां स्त्रीलिङ्गाभिधानेनाङ्गत्वाध्यारोपेण परममौचित्यं प्रतिपादितम् ॥

न तु यथा मम नीतिलतायाम्—

'वरुणरणसमर्था स्वर्गभङ्गैः कृतार्था
यमनियमनशक्ता मारुतोन्माथसक्ता ।
धनदनिधनसज्जा लज्जते मर्त्ययुद्धे
दहनदलनचण्डा मण्डली मद्भुजानाम् ॥'

अत्र रावणः कपिनिकारामर्षविषमविकाराविष्कारोचितं ब्रूते । वरुणादिलोकपालविशालबलावलेपविप्लवकारिणी मर्त्यमात्रयुद्धे लज्जते प्रचण्डा मद्भुजमण्डलीति स्त्रीलिङ्गेन निर्देशस्त्रैलोक्यविजयोर्जितस्य प्रतापस्य कठोरतामपहरन्ननौचित्यं सूचयति ॥

वचनौचित्यं दर्शयितुमाह—

**उचितैरेव वचनैः काव्यमायाति चारुताम् ।**
**अदैन्यधन्यमनसां वदनं विदुषामिव ॥ २२ ॥**

उचितैरेकवचनद्विवचनबहुवचनैः काव्यं चारुतामायाति । अदैन्योदारचेतसां विदुषामिव वदनमयाच्ञारुचिरौचित्यचारुभिर्वचोभिः ॥

यथा मम नीतिलतायाम्—

'त्रैलोक्याक्रमणैर्वराहविजयैर्निःसंख्यरत्नाप्तिभिः
प्रख्यातः स्वरसस्वयंवरशतैर्युद्धाब्धिमध्ये श्रियः ।
साश्चर्यैर्बलिबन्धनैश्च बहुभिर्नित्यं हसत्युत्थितः
पौलस्त्यः सकृदुद्यमश्रमवशाद्व्यासक्तनिद्रं हरिम् ॥'

अत्र शुकसारणाभ्यां रघुपतेरग्रे दशग्रीवपराक्रमेऽभिधीयमाने यदुक्तं पौलस्त्यः शेषशायिनं हरिमेकवारोद्योगश्रमवशेन संसक्तालस्यनिद्रमेक-त्रैलोक्याक्रमणैर्वराहविजयिनां सुभटानां जयैरनेकरत्नप्राप्तिभिः समरस-मुद्रमध्ये बहुवारविहितैः श्रियः स्वयंवरशतैर्बलिनां च लोकपालानां बन्धनैः प्रख्यातः सदोत्थितः सोत्साहः सततं हसतीति बहुवचनैरेव हरि-वैलक्षण्यलक्षणमुपचितमौचित्यमुदञ्चितम् ॥

न तु यथा मातृगुप्तस्य[1]—

'नायं निशामुखसरोरुहराजहंसः
कीरीकपोलतलकान्ततनुः शशाङ्कः।
आभाति नाथ तदिदं दिवि दुग्धसिन्धु-
डिण्डीरपिण्डपरिपाण्डु यशस्त्वदीयम् ॥'

अत्र नायं शशी, त्वदीयमिन्दुदुग्धाब्धिफेनपिण्डपाण्डुरं यश इति यदभिहितं तदविच्छिन्नप्रसराणां यशसां बहुवचनेन वर्णनायां समुचिता-यामेकवचनोपन्यासश्चन्द्रबिम्बाकारेण पिण्डमात्रपरिच्छिन्नतया संकोचरूप-मनौचित्यमुद्भावयति ॥

विशेषणौचित्यं दर्शयितुमाह—

**विशेषणैः समुचितैर्विशेष्योऽर्थः प्रकाशते।**
**गुणाधिकैर्गुणोदारः सुहृद्भिरिव सज्जनः ॥ २३ ॥**

काव्ये विशेष्योऽर्थः समुचितैरेव विशेषणैः शोभां लभते। गुणोदारः साधुर्यथाभ्यधिकगुणैः सुहृद्भिः ॥

यथा मम मुनिमतमीमांसायाम्—

'चैत्रे सूत्रितयौवनान्युपवनान्यामोदिनी पद्मिनी
ज्योत्स्नाप्रावरणानि रत्नवलभीहर्म्याणि रम्याः स्त्रियः।

---

१. षड्वर्षपर्यन्तमयं ब्राह्मणः कश्मीरदेशराज्यं कृतवान्. उज्जयिनीप्रभुणा हर्षापरनाम्ना विक्रमादित्येनास्मै कश्मीरराज्यं वितीर्णमित्यादिकथा राजतरङ्गिण्यां तृतीयतरङ्गे द्रष्टव्या.

सर्वं चारुतरं न कस्य दयितं यस्मिंस्तु तद्भुज्यते
तन्मृन्निर्मितमामभाजनमिव क्षिप्रक्षयं जीवितम् ॥'

अत्र युधिष्ठिरस्यासादितमहाविभूतेर्मयनिर्मितमणिमयसभाभिमानिनो विभवप्रभावे वर्ण्यमाने सकलभावाभावस्वरूपाभाववादोपदेशिनो महामुनेराशयविचारावसरे यदुक्तं कुसुमसमयसमुपचितयौवनान्युपवनानि मकरन्दामोदसुन्दरारविन्दिनीज्योत्स्नापटप्रावृतानि रत्नवलभीहर्म्याणि रमणीया रमण्यश्चेति सर्वमेतच्चारुतरं सर्वस्याभिमतम् । किं तु यस्मिन्भुज्यते तज्जीवितमाममृत्पात्रनिःसारं क्षिप्रक्षयमिति तद्विशेष्यपदोत्कर्षकारिविशेषणपदोदितसौन्दर्येण पर्यन्तनिःसारतानिर्वेदसंवादि स्फुरदौचित्यमातनोति ॥

न तु यथा भट्टलट्टनस्य[1]—

'ग्रीष्मं द्विषन्तु जलदागममर्थयन्तां
ते संकटप्रकृतयो विकटास्तडागाः ।
अब्धेस्तु मुग्धशफरीचटुलाचलेन्द्र-
निष्कम्पकुक्षिपयसो द्वयमप्यचिन्त्यम् ॥'

अत्र ग्रीष्मं द्विषन्तु, मेघागमं संकटस्वभावा विकटा विस्तीर्णाश्च तटाकाः प्रार्थयन्ताम्, महाब्धेस्तु बालशफरीलोलाचलेन्द्रनिश्चलकुक्षिपयसो ग्रीष्मघनागमावप्यगणनीयाविति यदुक्तम्, तत्र तडागविशेषणयोः संकटविकटपदयोः परस्परविरुद्धार्थयोरनौचित्यं स्पष्टमवभासते । संकटस्वभावस्य हि विकटत्वं विस्तीर्णत्वं नोपपद्यते । अथ स्वभावे संकटत्वमाकारे विपुलत्वं तदपि तटाकस्य निश्चेतनस्य स्वभावाभावादनुपपन्नमेव ॥

उपसर्गौचित्यं दर्शयितुमाह—

योग्योपसर्गसंसर्गैर्निरर्गलगुणोचिता ।
सूक्तिर्विवर्धते संपत्सन्मार्गगमनैरिव ॥ २४ ॥

उचितैः प्रादिभिरुपसर्गैः सूक्तिरुन्नतिमासादयति । विभूतिरिव सन्मार्गगमनैः ॥

---

१. एकस्मिन्पुस्तके 'भट्टवल्लभस्य' इति पाठः.

यथा मम मुनिमतमीमांसायाम्—

'आचारं भजते त्यजत्यपि मदं वैराग्यमालम्बते
कर्तुं वाञ्छति सङ्गभङ्गगलितोत्तुङ्गाभिमानं तपः ।
दैवन्यस्तविपर्ययैः सुखशिखाभ्रष्टः प्रणष्टो जनः
प्रायस्तापविलीनलोहसदृशीमायाति कर्मण्यताम् ॥'

अत्र दुर्योधनस्य घोषयात्रायां गन्धर्वबन्धपराभवभग्नाभिमानस्य प्राज्यसाम्राज्यमुत्सृज्य तपःप्रयत्नाभिनिविष्टस्य दुर्ग्रहे वर्ण्यमाने यदुक्तं सर्वो जनः सुखभ्रष्टः प्रणष्टविभवः सदाचारं भजते, मदं त्यजति, वैराग्यमाश्रयति, सङ्गभङ्गेन विगलितोत्तुङ्गाभिमानं तपः कर्तुं वाञ्छति; प्रायो बाहुल्येन तापविगलितलोहपिण्डसदृशीं कर्मण्यतामायाति; अत्रोत्पूर्वतया सोपसर्गस्य तुङ्गशब्दस्य स्वभावोन्नतिर्द्विगुणतामुपयाता दुर्मदाभिमानार्थौचित्यमुच्चैः करोति ॥

न तु यथा कुमारदासस्य—

'अयि विजहीहि दृढोपगूहनं त्यज नवसंगमभीरु वल्लभम् ।
अरुणकरोद्गम एष वर्तते वरतनु संप्रवदन्ति कुक्कुटाः ॥'

अत्राभिनवानङ्गसंगमगाढमालिङ्गननिश्चलाङ्गच्छन्नाङ्गनाप्रबोधने सख्या यदुक्तं वल्लभं मुञ्च प्रभातसंध्यायामरुणकिरणोद्गमो वर्तते, कुक्कुटाश्च संप्रवदन्तीति, तत्र संप्रोपसर्गशून्यशय्या(ब्दा)पूरणमात्रेण निरर्थकत्वादनुचितमेव ॥

निपातौचित्यं दर्शयितुमाह—

**उचितस्थानविन्यस्तैर्निपातैरर्थसंगतिः ।
उपादेयैर्भवत्येव सचिवैरिव निश्चला ॥ २५ ॥**

---

१. भगवता पतञ्जलिमुनिना व्याकरणमहाभाष्ये 'व्यक्तवाचां समुच्चारणे' (१।३।४८) इति सूत्रव्याख्यायाम् 'वरतनु संप्रवदन्ति कुक्कुटाः' इत्यस्य श्लोकस्य चतुर्थः पाद उदाहृतः. जानकीहरणकाव्यस्य कर्ता कुमारदासः. 'जानकीहरणं कर्तुं रघुवंशे स्थिते सति । कविः कुमारदासश्च रावणश्च यदि क्षमः ॥' इति राजशेखरश्लोकः. जानकीहरणस्य बहून्युदाहरणान्युज्ज्वलदत्तेनोणादिसूत्रवृत्तौ दत्तानि सन्ति. २. 'अत्राभिमाननवसंगम—' इति द्वितीयपुस्तकपाठः.

उपादेयैश्चादिभिर्निपातैरुचितपदविनिवेशितैः काव्यस्यार्थसंगतिरसंदिग्धा सत्सहायैरिव भवति ॥

यथा मम मुनिमतमीमांसायाम्—

'सर्वे स्वर्गसुखार्थिनः क्रतुशतैः प्राज्यैर्यजन्ते जडा-
स्तेषां नाकपुरे प्रयाति विपुलः कालः क्षणार्धं च तत् ।
क्षीणे पुण्यधने स्थितिर्न तु यथा वेश्यागृहे कामिनां
तस्मान्मोक्षसुखं समाश्रयत भोः सत्यं च नित्यं च यत् ॥'

अत्र स्वर्गसुखस्य वेश्याभोगवदवसानविरसचपलतायां प्रतिपादितायां निश्चलमोक्षसुखस्य निःसंदेहनिश्चिता प्रतिपत्तिर्निपातपदोपबृंहिता वाक्यार्थौचित्यं जनयति ॥

न तु यथा श्रीचक्रस्य[1]—

'देवो जानाति सर्वं यदपि च तदपि ब्रूमहे नीतिनिष्ठं
सार्धं संधाय जालान्तरधरणिभुजा निर्वृतो बान्धवेन ।
म्लेच्छानुच्छिन्धि भिन्धि प्रतिदिनमयशो रुन्धि विश्वं यशोभिः
सोदन्वन्मेखलायां परिकलय करं किं च विश्वंभरायाम् ॥'

अत्र क्षितिपतिस्तुतिप्रस्तावे 'देवो जानाति सर्वं यदपि च तदपि' इति यदुक्तं तत्र पूर्वापरपदयोरसंबद्धत्वेन निरर्थक एव निरुपयोगश्चकारः प्रततोत्सवबहुजनभोजनपङ्क्तावपरिज्ञातः स्वयमिव मध्ये समुपविष्टः पश्चादभिव्यक्तः परं लज्जादुर्मनौचित्यं प्रतनोति ॥

कालौचित्यं दर्शयितुमाह—

**कालौचित्येन यात्येव वाक्यमर्थेन चारुताम् ।**
**जनावर्जनरम्येण वेषेणेव सतां वपुः ॥ २६ ॥**

कालकृतौचित्ययुक्तेनार्थेन वाक्यं चारुतामेति वेषपरिग्रहेणेव कालयोग्येन सतामवसरज्ञानां वपुः ॥

---

१. मुक्ताकणभ्राता चक्रपाल इति कविकण्ठाभरणे. स एवायं चक्र इति भाति. मुक्ताकणश्च कश्मीरदेशोद्भूतः, आनन्दवर्धनरत्नाकरादिसमकालीनश्च.

यथा मम मुनिमतमीमांसायाम्—

'योऽभूद्गोपशिशुः पयोदधिशिरश्चौरः करीषंकष-
स्तस्यैवाद्य जगत्पते खगपते शौरे मुरारे हरे।
श्रीवत्साङ्क जडैरितिस्तुतिपदैः कर्णौ नृणां पूरितौ
ही कालस्य विपर्ययप्रणयिनी पाकक्रियाश्चर्यभूः॥'

अत्रामर्षविषविषमाविष्कारमुमूर्षुणा शिशुपालेनाभिधीयमाने यत्किल गोपालबालः पयोदधिशिरश्चौरः करीषंकषोऽभूत्तस्यैवाद्य जगन्नाथादिभिः स्तुतिपदैर्नृणां कर्णौ पूरितौ ही बत कालस्य विपर्ययकारिणी पाकक्रियाश्चर्यभूमिरिति। तत्राभूदितिभूतकालेनाश्चर्यपरिपोषरुचिरमारब्धाधिक्षेपलक्षणं वाक्यौचित्यं कृतम्॥

यथा वा मालवकुवलयस्य—

'च्युतसुमनसः[1] कुन्दाः पुष्पोद्गमैरलसा द्रुमा
मनसि च गिरं गृह्णन्तीमे किरन्ति न कोकिलाः।
अथ च सवितुः शीतोल्लासं लुनन्ति मरीचयो
न च जरठतामालम्बन्ते क्लमोदयदायिनीम्॥'

अत्र शिशुतरवसन्तकान्तोपवननवरसोल्लाससूच्यमानमनसिजोत्कण्ठावर्णनायामृतुसंधिसमुचिताः कुन्दाः कुसुमावसानशून्यतनवः, किंशुकाशोकाः कलिकोद्गमभरालसाः, मनसि कोकिलाः कलकूजितान्यनुसंदधति, रवेर्मरीचयः शीतोल्लासमथ च निवारयन्ति न च संतापदायिनीं प्रौढतामालम्बन्ते, इत्युक्ते वर्तमानकालपदेष्वेव हृदयसंवादसुन्दरमौचित्यं किमप्यामोदते॥

यथा वा भट्टभल्लटस्य—

'मृत्योरास्यमिवाततं धनुरिदं मूर्च्छेद्द्विषाश्चेषवः
शिक्षा सा विजितार्जुना प्रतिलयं सर्वाङ्गलग्ना गतिः।
अन्तः क्रौर्यमहो शठस्य मधुनो हा हारि गीतं मुखे
व्याधस्यास्य यथा भविष्यति तथा मन्ये वनं निर्मृगम्॥'

---

१. उदाहृतोऽयं श्लोको वामनवृत्तौ समताख्यगुणप्रकरणे. तस्माद्वामनात्प्राचीनोऽयं कविः.

अत्र लुब्धकस्य धनुःसायकशिक्षागतिक्रौर्यगीतानि तथा यथा वनं निर्मृगं भविष्यतीति भविष्यत्कालः प्रकृतार्थपरिपोषेण हृदयसंवादौचित्यमादधाति ॥

न तु यथा वराहमिहिरस्य—

'क्षीणश्चन्द्रो विशति तरणेर्मण्डलं मासि मासि
लब्ध्वा कांचित्पुनरपि कलां दूरदूरानुवर्ती ।
संपूर्णश्चेत्कथमपि तदा स्पर्धयोदेति भानो-
र्नो दौर्जन्याद्विरमति जडो नापि दैन्याद्व्यरंसीत् ॥

अत्र रवेर्मण्डलं क्षीणः शशी प्रतिमासं प्रविशति ततः कांचिदाप्यायिकां कलां प्राप्य दूरे दूरे भवति । परिपूर्णश्च तस्यैव स्पर्धयाभ्युदेति । दौर्जन्यान्न विरमति न च दैन्याद्व्यरंसीदित्येतौ 'विरमति' 'व्यरंसीत्' इतिपरस्परासंगतं कालपदद्वयं चन्द्रस्य सदृशयोर्दौर्जन्यदैन्ययोः सर्वकालमभिनिर्वृत्तयोर्यदुपन्यस्तं तत्र व्यरंसीदिति विरुद्धार्थत्वादनुचितमेव ॥

देशौचित्यं दर्शयितुमाह—

**देशौचित्येन काव्यार्थः ससंवादेन शोभते ।**
**परं परिचयाशंसी व्यवहारः सतामिव ॥ २७ ॥**

देशविषयौचित्येन हृदयसंवादिना काव्यार्थः सतां व्यवहार इव परिचयसूचकः शोभते ॥

यथा भट्टभवभूतेः—

'पुरा यत्र स्रोतः पुलिनमधुना तत्र सरितां
विपर्यासं यातो घनविरलभावः क्षितिरुहाम् ।
बहोर्दृष्टं कालादपरमिव मन्ये वनमिदं
निवेशः शैलानां तदिदमिति बुद्धिं द्रढयति ॥

अत्र बहुभिर्वर्षसहस्रैरतिक्रान्तैः शम्बुकवधप्रसङ्गेन दण्डकारण्यं रामः पूर्वपरिचितं पुनः प्रविष्टः समन्तादवलोक्यैवं ब्रूते—'पुरा यत्र नदीनां प्रवाहस्तत्रेदानीं तटम्, वृक्षाणां घनविरलत्वे विपर्ययश्चिराद्दृष्टं वनमिदमपूर्व-

---

१. सुभाषितावलावयं श्लोको धाराधरस्य.

मिव मन्ये, पर्वतसंनिवेशस्तु तदेवैतदिति बुद्धिं स्थिरीकरोति ।' इत्युक्ते चिरकालविपर्ययपरिवृत्तसंस्थानकाननवर्णनया हृदयसंवादी देशस्वभावः परममौचित्यमुद्द्योतयति ॥

न तु यथा राजशेखरस्य—

'[1]कर्णाटीदशनाङ्कितः शितमहाराष्ट्रीकटाक्षाहतः
प्रौढान्ध्रीस्तनपीडितः प्रणयिनीभ्रूभङ्गवित्रासितः ।
लाटीबाहुविवेष्टितश्च मलयस्त्रीतर्जनीतर्जितः
सोऽयं संप्रति राजशेखरकविर्वाराणसीं वाञ्छति ॥'

अत्र कर्णाटमहाराष्ट्रान्ध्रलाटमलयललनासंभोगसुभगः कालेन गलितरागमोहः संप्रति राजशेखरकविर्वाराणसीं गन्तुमिच्छतीत्युक्ते शृङ्गाररसतरङ्गितवराङ्गनाप्रसङ्गेऽनङ्गनिरर्गलदक्षिणापथदेशोद्देशमध्ये प्रणयिनीभ्रूभङ्गवित्रासित इति देशोपलक्षणविरहितकेवलप्रणयिनीपदेन देशौचित्यमुपचितमप्यनुचिततां नीतम् ॥

कुलौचित्यं दर्शयितुमाह—

कुलोपचितमौचित्यं विशेषोत्कर्षकारणम् ।
काव्यस्य पुरुषस्येव प्रियं प्रायः सचेतसाम् ॥ २८ ॥

पुरुषस्येव काव्यस्य कुलोन्नतमौचित्यं सविशेषोत्कर्षजनकं प्रायेण बाहुल्येन सहृदयानामभिमतम् ॥

यथा कालिदासस्य—

'अथ स विषयव्यावृत्तात्मा यथाविधि सूनवे
नृपतिककुदं दत्त्वा यूने सितातपवारणम् ।
मुनिवनतरुच्छायां देव्या तया सह शिश्रिये
गलितवयसामिक्ष्वाकूणामिदं हि कुलव्रतम् ॥'

अत्र 'अथ स राजा वृद्धस्तरुणाय सूनवे राज्यं प्रतिपाद्य तया देव्या सह तपोवनं भेजे । विरक्तचेतसामिक्ष्वाकूणामन्ते हि कुलव्रतमिदमेव' इत्युक्ते भूतवर्तमानभाविनां तद्वंश्यानामौचित्यमुन्मीलितम् ॥

१. प्रसिद्धेषु राजशेखरग्रन्थेष्वयं श्लोको न प्राप्तः.

न तु यथा यशोवर्मदेवस्य[1]—

'उत्पत्तिर्भण्डकुले यदभीष्टं तत्पदं समाक्रान्तम्।
भोगास्तथापि दैवात्सकृदपि भोक्तुं न लभ्यन्ते ॥'

अत्र ममोत्पत्तिर्भण्डकुले समीहितपदाक्रमणं च निष्पन्नं तथापि दैवार्पितप्रियाविप्रयोगाद्भोगा भोक्तुं न लभ्यन्त इत्यभिहिते स्वसंवेद्यमेव भण्डकुलमन्यत्राप्रसिद्धं स्वयमेव निर्दिश्यमानमुत्कर्षविशेषणविरहितकेवलपदोपादानेन निरर्थकतया निरौचित्यमेव। इक्ष्वाकुकुलस्य तु निर्विशेषणत्वमुपपद्यत एव। त्रिभुवनप्रसिद्धौचित्यचरित्रत्वात् ॥

व्रतौचित्यं दर्शयितुमाह—

**काव्यार्थः साधुवादार्हः सद्व्रतौचित्यगौरवात्।**
**संतोषनिर्भरं भक्त्या करोति जनमानसम् ॥ २९ ॥**

काव्यार्थः समुचितव्रतगौरवात्साधुवादयोग्यः संतोषपूर्णं जनमनः करोति। भक्तिर्विच्छित्तिः ॥

यथा मम मुक्तावलीकाव्ये—

'अत्र वल्कलजुषः पलाशिनः पुष्परेणुभरभस्मभूषिताः।
लोलभृङ्गवलयाक्षमालिकास्तापसा इव विभान्ति पादपाः ॥'

अत्र तपोधनोचितव्रतव्यञ्जकवल्कलभस्माक्षसूत्रप्रणयिपादपवर्णनायामचेतनानामपि शमसमयविमलचित्तवृत्तिरौचित्यमुपजनयति ॥

न तु यथा दीपकस्य—

'पुण्ये ग्रामे वने वा महति सितपटच्छन्नपालीकपाली-
मादाय न्यायगर्भद्विजहुतहुतभुग्धूमधूम्रोपकण्ठम्।
द्वारं द्वारं प्रवृत्तो वरमुदरदरीपूरणाय क्षुधार्तो
मानी प्राणी सनाथः स पुनरनुदिनं तुल्यकुल्येषु दीनः ॥

अत्र वैराग्यनिरर्गलवर्णनायां भिक्षाकपालीमादाय क्षुत्क्षामः कुक्षिपूरणाय प्रवृत्तो मानी वरं द्वारं द्वारं यष्टिनिविष्टपाणिः परिश्रान्तो न पुनरनिशं तुल्यकुल्येषु दीन इत्युक्ते सहजप्रशमविमलमानसविश्रान्तिसंतोषमुत्सृज्य

१. द्वितीयपुस्तके श्रीहर्षदेवस्य.

तुल्यकुल्यद्वेषविजिगीषापरमेव वाक्यं भृशमनौचित्यमुद्भावयति । वरमेतत्तीव्रव्रतकष्टं न तु स्वजनदैन्ययाचनमिति संसारग्रन्थिबन्धाभिमानोपन्यासः ॥

तत्त्वौचित्यं दर्शयितुमाह—

काव्यं हृदयसंवादि सत्यप्रत्ययनिश्चयात् ।
तत्त्वोचिताभिधानेन यात्युपादेयतां कवेः ॥ ३० ॥

तत्त्वोचिताख्यानेन कवेः सूक्तं सत्यप्रत्ययस्थैर्यात्संवादि गृह्यतां याति ॥

यथा मम बौद्धावदानलतिकायाम्—

'दिवि भुवि फणिलोके शैशवे यौवने वा
जरसि निधनकाले गर्भशय्याश्रये वा ।
सहगमनसहिष्णोः सर्वथा देहभाजां
नहि भवति विनाशः कर्मणः प्राक्तनस्य ॥'

अत्र प्राक्तनस्य कर्मणस्त्रैलोक्ये शैशवयौवनवृद्धत्वावस्थासु देहिनां सह गमने समर्थत्वान्न विनाशोऽस्तीत्युक्ते निःसंशयसकलजनहृदयसंवादितत्त्वाख्यानमौचित्यं ख्यापयति ॥

न तु यथा माघस्य—

'[1]बुभुक्षितैर्व्याकरणं न भुज्यते न पीयते काव्यरसः पिपासितैः ।
न विद्यया केनचिदुद्धृतं कुलं हिरण्यमेवार्जय निष्फलाः कलाः ॥'

अत्रार्थार्थितापरत्वेन धनमेवार्जय, क्षुधितैर्व्याकरणं न भुज्यते, न च काव्यरसः पिपासितैः पीयते, न च विद्यया कुलं केनचिदुद्धृतमित्युक्ते सर्वमेतद्दारिद्र्यदैन्यविद्रुतधैर्यकातरतया तत्त्वविरहितं विपरीतमुपन्यस्तमनौचित्यं सुयुक्तमेव । विद्यानामेव सर्वसंपत्प्रसविनीनां कुलोद्धरणक्षमत्वं नान्यस्य ॥

सत्त्वौचित्यं दर्शयितुमाह—

चमत्कारं करोत्येव वचः सत्त्वोचितं कवेः ।
विचाररुचिरोदारचरितं सुमतेरिव ॥ ३१ ॥

सत्त्वोचितं कवेर्वचश्चमत्कारं करोति । सुमतेरिव विचार्यमाणं रुचिरमुदारचरितम् ॥

---

१. माघकृते प्रसिद्धे शिशुपालवधाभिधे काव्ये नायं श्लोकः.

यथा मम चित्रभारते नाटके—

'नदीवृन्दोद्दामप्रसरसलिलापूरिततनुः
स्फुरत्स्फीतज्वालानिबिडवडवाग्निक्षतजलः ।
न दर्पं नो दैन्यं स्पृशति बहुसत्त्वः पतिरपा-
मवस्थानां भेदाद्भवति विकृतिर्नैव महताम् ॥'

अत्र पयोधिव्यपदेशेन युधिष्ठिरस्य सत्त्वोत्कर्षेऽभिधीयमाने सरित्पूरप्रवार्धिततनुर्वडवाग्निनिष्पीतश्च नोत्सेकं न संकोचमब्धिर्विपुलसत्त्वः स्पृशति । न ह्यवस्थानां भेदान्महाशयानां विकारो भवतीत्युक्ते गम्भीरधीरा सत्त्ववृत्तिरौचित्यमातनोति ॥

न तु यथा भट्टेन्दुराजस्य[1]—

'आश्चर्यं वडवानलः स भगवानाश्चर्यमम्भोनिधि-
र्यत्कर्मातिशयं विचिन्त्य मनसः कम्पः समुत्पद्यते ।
एकस्याशयघस्मरस्य पिवतस्तृप्तिर्न जाता जलै-
रन्यस्यापि महात्मनो न वपुषि स्वल्पोऽपि जातः श्रमः ॥'

अत्र वडवानलसमुद्रयोः सत्त्वमहत्त्वे वक्ष्यमाणे नातिविपुलाशयत्वादेकस्य पिबतः पयोभिस्तृप्तिर्न जाता, द्वितीयस्य तदुपजीव्यमानस्य न मनागपि खेदः, तदेतदुभयमाश्चर्यमित्युक्ते निःसंतोषतया सततया च कस्य न वडवाग्नेर्लज्जा । न च जलनिधेराश्रितैकार्थिपूरणसामर्थ्यमित्यसत्त्वे सत्त्वस्तुतिरनौचित्यमावहति ॥

अभिप्रायौचित्यं दर्शयितुमाह—

**अकदर्थनया सूक्तमभिप्रायसमर्पकम् ।**
**चित्तमावर्जयत्येव सतां स्वस्थमिवार्जवम् ॥ ३२ ॥**

अक्लेशेनाभिप्रायसमर्पकं काव्यं हृदयमावर्जयति । सज्जनानां निर्मलमार्जवमिव ॥

---

१. श्रीमदभिनवगुप्ताचार्यस्य गुरुर्भट्टेन्दुराजः.

यथा दीपकस्य—

'श्येनाङ्घ्रिग्रहदारितोत्तरकरो ज्याङ्कप्रकोष्ठान्तर
आताम्राधरपाणिपादनयनप्रान्तः पृथूरःस्थलः।
मन्येऽयं द्विजमध्यगो नृपसुतः कोऽप्यम्ब निःशम्बलः
पुत्र्येवं यदि कोष्ठमेतु सुकृतैः प्राप्तो विशेषातिथिः॥'

अत्र स्वैररमणी रमणीयं दिनावसाने युवानं पथिकमालोक्याभिप्रायसूचकं जननीमेवं ब्रूते। यदसौ राजपुत्राकृतिः श्येनग्रहनाराचपरिचयोचितः सायं समये प्राप्त इत्युक्ते मात्राप्यभिप्रायपूरकमभिहितम्। पुत्रि यद्येव तत्कोष्ठाङ्कं प्रविशतु सुकृतैर्विशेषोऽतिथिः प्राप्तः पूज्य इत्येतेन स्फुटाभिप्रायसूचकमौचित्यमुपचितमाचकास्ति॥

न तु यथास्यैव—

'अयि विरहविचित्ते भर्तुरर्थे तथार्ता
सपदि निपतिता त्वं पादयोश्चण्डिकायाः।
स्वयमुपहितधूपस्थालकच्छत्रशृङ्गो-
द्दलितमपि ललाटं येन नैवाललक्षे॥'

अत्र विनयवत्याः सुचिरात्पत्यावागते ललाटनखोल्लेखापह्नववचने सख्या समुपदिश्यमाने हे विरहोन्मत्ते भर्तुरर्थे चण्डिकापादपतने स्वयं स्थापितधूपस्थालकोटिक्षतमपि न लक्षितं भवत्या ललाटमित्युक्तौ स्वैरापह्नवशिक्षामात्रमेवोपलक्ष्यते। न तु तस्याः सख्या वा कश्चिदभिप्रायविशेषः॥

स्वभावौचित्यं दर्शयितुमाह—

**स्वभावौचित्यमाभाति सूक्तीनां चारुभूषणम्।**
**अकृत्रिममसामान्यं लावण्यमिव योषिताम्॥ ३३॥**

स्वभावोचितत्वं कविवाचामाभरणमाभाति। अकृत्रिममनन्यसामान्यं लावण्यमिव ललनानाम्॥

यथा मम मुनिमतमीमांसायाम्—

'कर्णोत्तालितकुन्तलान्तनिपतत्तोयक्षणासङ्गिना
हारेणेव वृतस्तनी पुलकिता शीतेन सीत्कारिणी।

---

१. 'प्रकोष्ठान्तिकः' इति द्वितीयपुस्तकपाठः. द्वितीयपादे 'चाताम्राधर—' इति पाठो युक्तः.

निर्धौताञ्जनशोणकोणनयना स्नानावसानेऽङ्गना
प्रस्यन्दत्कबरीभरा न कुरुते कस्य स्पृहार्द्रं मनः ॥'

अत्र व्याससूनोः शुकस्य गाढवैराग्यनिःसङ्गस्य गगनगङ्गातीरे स्नानोत्तीर्णास्त्रिदशयोषितो विवसनास्तद्दर्शननिःसंकोचाः पश्यतः प्रशमविमलमनसः स्मरव्यतिकरनिर्विकारतायां प्रतिपाद्यमानायां कर्णमूलोत्क्षिप्तालकपर्यन्तनिपतत्तोयकणसंतानेन स्तनयोः कृतिमुहूर्तहारविभ्रमा, शीतेन रोमाञ्चसीत्कारिणी, धौताञ्जनारुणनयनान्ता, प्रस्रवन्मुक्तकेशकलापा, स्नानोत्तीर्णा तरुणी कस्य स्पृहार्द्रं न मनः करोतीत्युक्ते स्वयमार्द्रस्वभावः परमप्यार्द्रीकरोतीत्युचितमेतत् ॥

न तु यथा मम तत्रैव—

'भक्तिः कातरतां क्षमा सभयतां पूज्यस्तुतिर्दीनतां
धैर्यं दारुणतां मतिः कुटिलतां विद्याबलं क्षोभताम् ।
ध्यानं वञ्चकतां तपः कुहकतां शीलव्रतं षण्ढतां
पैशुन्यव्रतिनां गिरां किमिव वा नायाति दोषार्द्रताम् ॥'

अत्र पिशुनस्वभावे वर्ण्यमाने भक्त्यादीनां गुणानां वैपरीत्ये प्रतिपादिते पिशुनानां वचसां किं वा दोषार्द्रतां नायातीत्यभिहिते स्वयमनार्द्रस्वभावस्य परार्द्रीकरणमनुचितमेव ॥

सारसंग्रहौचित्यं दर्शयितुमाह—

सारसंग्रहवाक्येन काव्यार्थः फलनिश्चितः ।
अदीर्घसूत्रव्यापार इव कस्य न संमतः ॥ ३४ ॥

सारसंग्रहवाक्येन काव्यार्थः सुनिश्चितफलः शीघ्रकारिण इव व्यापारः कस्य नाभिमतः ॥

यथा मम मुनिमतमीमांसायाम्—

'विविधगहनगर्भग्रन्थसंभारभारै-
र्मुनिभिरभिनिविष्टैस्तत्त्वमुक्तं न किंचित् ।

कृतरुचिरविचारं सारमेतन्महर्षे-
रहमिति भवभूमिर्नाहमित्येव मोक्षः ॥'

अत्र भगवद्गीतार्थविचारे सारसंग्रहोऽभिहितः, यत्किल मुनिभिरनेकभेदभिन्नशास्त्रजडैरभिनिविष्टमतिभिस्तत्त्वमुपादेयं न किंचित्कथितम् । भगवतो महर्षेर्व्यासस्य सुमतेर्विमलविचारोत्तीर्णं निश्चितमेतदेव । यदहंकारः संसारमूलभूमिर्ममतापरित्याग एव मोक्ष इति तत्संक्षेपेण भवक्षयोपदेशः प्रकृतार्थस्य परममौचित्यं पुष्णाति ॥

न तु यथा परिव्राजकस्य—

'तपो न तप्तं वयमेव तप्ता भोगा न भुक्ता वयमेव भुक्ताः ।
जरा न जीर्णा वयमेव जीर्णास्तृष्णा न याता वयमेव याताः ॥'

अत्र वयमेव तप्ता भुक्ता जीर्णा याता इत्युक्ते निःसाराचारुत्वादपर्यवसितो वाक्यार्थः फलशून्यतया सारसंग्रहोचितं न किंचित्प्रतिपादयति ॥

प्रतिभौचित्यं दर्शयितुमाह—

**प्रतिभाभरणं काव्यमुचितं शोभते कवेः ।**
**निर्मलं सुगुणस्येव कुलं भूतिविभूषितम् ॥ ३५ ॥**

प्रतिभालंकृतं कवेः काव्यमुचितं गुणवतः कुलमिव विमलं लक्ष्म्या प्रकाशितं शोभते ॥

यथा मम लावण्यवत्याम्—

'अदय दशसि किं त्वं बिम्बबुद्ध्याधरं मे
भव चपल निराशः पक्कजम्बूफलानाम् ।
इति दयितमवेत्य द्वारदेशाप्तमन्या
निगदति शुकमुच्चैः कान्तदन्तक्षतौष्ठी ॥'

अत्र कयापि द्वारदेशाप्तं प्रियं ज्ञात्वा अन्यकामुकदशनखण्डितौष्ठ्या संप्रति तदागमनानभिज्ञयेव शुकमुद्दिश्य यदुक्तं निर्दय किं त्वं बिम्बफललोभादधरं मम विदारयसि । पक्कानां जम्बूफलानामिदानीं चपलनिराशो

१. द्वितीयपुस्तके 'व्यगदत्त' इति पाठः.

भव कुपिता तुभ्यं नो दास्यामीति तेनोच्चैः प्रत्यायनापह्नवनवोन्मेषप्रज्ञाचातुर्यचारुवचनमौचित्यचमत्कारं करोति ॥

यदाह भट्टतौतः[1]—'प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता' इति ॥

न तु यथा मम तत्रैव—

निर्याते दयिते गृहे विशयने निर्माल्यमाल्ये हृते
प्राप्ते प्रातरसह्यरागिणि परे वारावहारेऽन्यया ।
द्वारालीनविलोचना व्यसनिनी सुप्ताहमेकाकिनी-
त्युक्त्वा नीविविकर्षणैः स चरणाघातैरशोकीकृतः ॥'

अत्र वेश्या व्यालग्नकामुकस्य वारावहारं विधाय नवकामुकेन सह क्षपायां नीतायां प्रभाते तस्मिन्निर्याते शय्याकुसुमादिसंभोगलक्षणे निवारिते वारवञ्चनकुपिते गाढानुरागग्रहग्रस्तमतौ पूर्वकामुके प्राप्ते त्वदालोकनकाङ्क्षिणी व्यसनिनी द्वारन्यस्तनयनाहमेकाकिनी सुप्तेति प्रत्यायनावचनविलीनमन्युसरभससरसनीविकर्षणोद्यताकृतिकृतेर्ष्याकोपया चरणनलिनप्रहारैरशोकीकृतः । शङ्काशल्योन्मूलनान्निःशोकः संपादितः । संततपुलकाङ्कुरत्वादशोकतरुतुल्यतां नीत इति वा वाक्यार्थः । केवलसत्यविप्रलम्भप्रागल्भ्यमात्रमेव गणिकाया गाढरागमूलतां च प्रतिपादयति । न तु प्रतिभोद्भूतामौचित्यकणिकां सूचयति ॥

अवस्थौचित्यं दर्शयितुमाह—

अवस्थोचितमाधत्ते काव्यं जगति पूज्यताम् ।
विचार्यमाणरुचिरं कर्तव्यमिव धीमताम् ॥ २६ ॥

अवस्थोचिततया काव्यं जगति श्लाघ्यतामायाति । मतिमतामिव कृत्यं विचारनिर्घर्षरुचिरम् ॥

यथा मम लावण्यवत्याम्—

'मुक्तः कन्दुकविभ्रमस्तरलता त्यक्तैव बाल्योचिता
मौग्ध्यं निर्धुतमाश्रिता गजगतिर्भ्रूलास्यमभ्यस्यते ।

---

१. अभिनवगुप्ताचार्यस्योपाध्यायो भट्टतौतः

यन्नर्मोर्मिषु[1] निर्मितं मृगदृशा वैदग्ध्यदिव्यं वच-
स्तद्विघ्नः सुभगाभिमानलटभाभावे[2] निबद्धो भरः ॥'

अत्र यदुक्तं कन्दुकक्रीडा त्यक्ता, बालचापल्यं परिहृतम्, मौग्ध्यं निरस्तम्, गजगतिरङ्गीकृता, भ्रूलतालास्याभ्यासः क्रियते, नर्मोर्मिषु वचनवैचित्र्यमासूत्रितम्, तेन जानीमहे शैशवावस्थां समुत्सृजन्त्या यौवनमाश्रयन्त्या प्रौढतामनारूढयापि नवसंभोगगौरवगर्भेण सुभगाभिमानेन लटभाभावे बाल्या भरो निबद्ध इत्यभिहिते स्फुटमृदुसंबद्धा(?)[3] वयोवस्थामध्यसंधिवर्णनायामौचित्यं स्फुरदिवावभासते ॥

न तु यथा राजशेखरस्य—

ज्यायान्धन्वी नवधृतधनुस्ताम्रहस्तोदरेण
क्षत्रक्षोदव्यतिकरपटुस्ताटकाताडकेन ।
कर्णाभ्यर्णस्फुरितपलितः क्षीरकण्ठेन सार्धं
योद्धुं वाञ्छन्न कथममुना लज्जते जामदग्न्यः ॥'

अत्र भार्गवः स्थविरावस्थास्थितः स्थिरतरपराक्रमकर्कशप्रौढो धनुर्धरः शिशुना रामेण धनुर्ग्रहणारुणितकोमलकरकमलतलेन क्षत्रियक्षयसंरम्भप्रगल्भस्ताटकाताडकेन स्फुरदाकर्णपलितः संभाव्यमानजननीस्तनक्षीरकण्ठेनामुना युयुत्सुः कथं न लज्जत इत्युक्ते पेशलतया राघवावस्थायां जामदग्न्यावस्थाविपरीतायां प्रतिपाद्यमानायां ताटकाताडकेनेति विरुद्धाभिधासोऽर्थः किमप्यनौचित्येन चेतसि संकोचमादधाति ॥

विचारौचित्यं दर्शयितुमाह—

**उचितेन विचारेण चारुतां यान्ति सूक्तयः ।**
**वेद्यतत्त्वावबोधेन विद्या इव मनीषिणाम् ॥ ३७ ॥**

विचारौचित्येन सूक्तयश्चारुतां यान्ति । ज्ञेयस्वरूपज्ञानेन विद्या इव विदुषाम् ॥

---

१. 'नर्मोक्तिषु' इति द्वितीयपुस्तकपाठः. २. प्रगल्भाङ्गनाभावे. ३. 'स्फुटधिया' इति द्वितीयपुस्तकपाठः.

यथा मम मुनिमतमीमांसायाम्—

'अश्वत्थामवधाभिधानसमये सत्यव्रतोत्साहिना
मिथ्या धर्मसुतेन जिह्मवचसा हस्तीति यद्व्याहृतम् ।
सा सत्यामृतरश्मिवैरमसमं संसूचयन्त्याः सदा
शङ्के पङ्कजसंश्रयेण मलिनारम्भा विजृम्भा श्रियः ॥'

अत्र द्रोणनिधनाख्याने सत्यव्रतोत्साहवता धर्मतनयेनापि मिथ्या लघुवचसा कुञ्जर इति यदुक्तं सा सततं सत्यचन्द्रद्वेषं सूचयन्त्याः श्रियः शङ्के पङ्कजसंश्रयेण मलिनव्यापारा विजृम्भेत्यभिहिते ससंवादलक्ष्मीस्वभावपरिभावनतया तत्त्वावबोधेन मूलविश्रान्त्या फलपर्यवसायी विचारः सहृदयसंवेद्यमौचित्यं व्यनक्ति ॥

न तु यथा मम तत्रैव—

'प्रम्लाने चिरकालवृत्तदयिताकेशाम्बराकर्षणे
क्रूरं राक्षसवैशसं यदि कृतं भीमेन दुःशासने ।
तत्कालक्षमिणा कुशाश्मपरुषारण्यप्रवासे चिरं
किं पीतं तत तापमग्नमहिषस्वेदाम्बुपृक्तं पयः ॥'

अत्र भीमसेनचरिते विचार्यमाणे त्रयोदशवर्षपर्युषिते कृष्णाकेशाकर्षणपराभवे भीमेन भीमं राक्षसकर्म दुःशासने यदि कृतं तत्सद्यःकृतापराधकालक्षमिणा सुचिरं दर्भसूचीविषमाश्मपरुषवनवासे किं ग्रीष्मतापनिमग्नमहिषस्वेदस्रुतिपृक्तं पयः पीतमित्यनुपपन्नकृत्येऽभिहिते कारणविचाराभावान्निर्मूलोपालम्भमात्रमनौचित्यमनुबध्नाति ॥

नामौचित्यं दर्शयितुमाह—

**नाम्ना कर्मानुरूपेण ज्ञायते गुणदोषयोः ।**
**काव्यस्य पुरुषस्येव व्यक्तिः संवादपातिनी ॥ ३८ ॥**

काव्यस्य कर्म औचित्यं तेन नाम्ना पुरुषस्येव गुणदोषव्यक्तिः संवादिनी ज्ञायते ॥

---

१. 'धर्मस्यापि सुतेन' इति द्वितीयपुस्तकपाठः

यथा कालिदासस्य—

'इदमसुलभवस्तुप्रार्थनादुर्निवारः
प्रथममपि मनो मे पञ्चबाणः क्षिणोति ।
किमुत मलयवातान्दोलितापाण्डुपत्रै-
रुपवनसहकारैर्दर्शितेष्वङ्कुरेषु ॥'

अत्र प्रारम्भ एव ममेदं मनः पञ्चबाणः सुदुर्लभवस्तुप्रार्थनादुर्निवारः शकलीकरोति । किमुत लीलोद्यानसहकारैर्मलयानिलान्दोलितबालपल्लवैरङ्कुरेषु दर्शितेष्वित्युक्ते मदनस्य पञ्चबाणाभिधानमुचितमेव ॥

यथा वा मम बौद्धावदानलतायाम्—

'तारुण्येन निपीतशैशवतया सानङ्गशृङ्गारिणी
तन्वङ्ग्या सकलाङ्गसङ्गमसखी भङ्गिर्नवाङ्गीकृता ।
निःसंरम्भपराक्रमः पृथुतरारम्भाभियोगं विना
साम्राज्ये जगतां यया विजयते देवो विलासायुधः ॥'

अत्र यौवननिपीतशैशवतया तन्वङ्ग्यानङ्गशृङ्गारवति सर्वाङ्गसंगमसखी सा काप्यभिनवा भङ्गिरङ्गीकृता यया निष्प्रयत्नपराक्रमः प्रभूततरारम्भसंभारं विहाय त्रिभुवनसाम्राज्ये जयति देवो विलासायुध इत्युक्ते कामस्य विलासायुध इति नामोपपन्नमेव । तन्वङ्गीभङ्ग्यैव सिद्धत्रैलोक्याधिपत्यविजिगीषायां कामसायकादीनां नैरर्थक्यात् ॥

न तु यथा कालिदासस्य—

'क्रोधं प्रभो संहर संहरेति यावद्गिरः खे मरुतां चरन्ति ।
तावत्स वह्निर्भवनेत्रजन्मा भस्मावशेषं मदनं चकार ॥'

अत्र पश्यतो भगवतस्त्रिनेत्रस्य स्मरशरनिपातक्षोभे वर्ण्यमाने तन्निकारकोपशमाय संहर संहर प्रभो क्रोधमिति यावद्वचः खे देवानां चरति तावद्भवनेत्रोद्भवः स वह्निर्मदनं भस्मराशिशेषमकार्षीदित्युक्ते संहारावसरे रुद्रस्य भवाभिधानमनुचितमेव ॥

आशीर्वचनौचित्यं दर्शयितुमाह—

पूर्णार्थदातुः काव्यस्य संतोषितमनीषिणः ।
उचिताशीर्नृपस्येव भवत्यभ्युदयावहा ॥ ३९ ॥

संपूर्णार्थसमर्पकस्य संतोषितविदुषः काव्यस्य नृपतेरिवोचितमाशीःपदमभ्युदयावहं भवति ॥

यथास्मदुपाध्यायगङ्गकस्य[1]—

'स कोऽपि प्रेमार्द्रः प्रणयपरिपाकप्रचलितो
विलासोऽक्ष्णां देयात्सुखमनुपमं वो मृगदृशाम् ।
यदाकूतं दृष्ट्वा पिदधति मुखं तूणविवरे
निरस्तव्यापारा भुवनजयिनः पञ्च विशिखाः ॥'

अत्र स कोऽप्यसामान्यप्रेमप्रणयविश्रान्तिप्रगल्भकुरङ्गदृशा निरुपमो नयनविलासः सुखं वो देयात् । यदभिप्रायमालोक्य भुवनजयिनः कामस्य पञ्च सायकाः समाप्तव्यापारास्तूणीरविवरे लज्जयेव मुखं पिदधतीत्युक्ते सुखं वो देयादित्याशीःपदमुचितमेव । प्रियानयनविभ्रमस्य सुखार्पणयोग्यत्वात् ॥

यथा वा मम वात्स्यायनसूत्रसारे

'कामः कामं कमलवदनानेत्रपर्यन्तवासी
दासीभूतत्रिभुवनजनः प्रीतये जायतां वः ।
दग्धस्यापि त्रिपुररिपुणा सर्वलोकस्पृहार्हा
यस्याधिक्यं रुचिरतितरामञ्जनस्येव याता ॥'

अत्र कामः प्रीतये वो जायतां यस्य दग्धस्याप्यञ्जनस्येवाधिक्यं रुचिर्यातेत्युक्ते प्रीतये जायतामित्युचितं कामस्य प्रीत्यात्मकत्वात् ॥

न तु यथामरुकस्य—

'आलोलामलकावलीं विलुलितां बिभ्रच्चलत्कुण्डलं
किंचिन्मृष्टविशेषकं तनुतरैः स्वेदाम्भसां सीकरैः ।

---

१. क्षेमेन्द्रस्योपाध्यायो गङ्गकः

तन्वङ्ग्याः सुतरां रतान्तसमये वक्त्रं रतिव्यत्यये
तत्त्वां पातु चिराय किं हरिहरस्कन्दादिभिर्दैवतैः ॥'

अत्र तन्व्या रतिव्यत्यये लोलालकं चलत्कुण्डलं स्वेदसलिलेन किंचिदुन्मृष्टतिलकं यन्मुखं तत्त्वां पातु, किं हरिहरस्कन्दादिभिर्दैवतैरित्युक्ते पातु त्वामित्यनुचितम्, आनन्दयतु त्वामित्युचितं स्यात् । अन्येषु काव्याङ्गेष्वनयैव दिशा स्वयमौचित्यमुत्प्रेक्षणीयम् । तदुदाहरणान्यानन्त्यान्न प्रदर्शितानीत्यलमतिप्रसङ्गेन ॥

आसीत्प्रकाशेन्द्र इति प्रकाशः काश्मीरदेशे त्रिदशेश्वरश्रीः ।
अभूद्गृहे यस्य पवित्रसत्रमच्छिन्नमग्रासनमग्रजानाम् ॥
यः श्रीस्वयंभूभवने विचित्रे लेप्यप्रतिष्ठापितमातृचक्रः ।
गोभूमिकृष्णाजिनवेश्मदाता तत्रैव काले तनुमुत्ससर्ज ॥
तस्यात्मजः सर्वमनीषिशिष्यः श्रीव्यासदासापरपुण्यनामा ।
क्षेमेन्द्र इत्यक्षयकाव्यकीर्तिश्चक्रे नवौचित्यविचारचर्चाम् ॥
श्रीरत्नसिंहे सुहृदि प्रयाते शार्वं पुरं श्रीविजयेशराज्ञि ।
तदात्मजस्योदयसिंहनाम्नः कृते कृतस्तेन गिरां विचारः ॥

यस्यासिः परिवारकृत्त्रिभुवनप्रख्यातशीलश्रुतेः
सर्वस्यावनतेन येन नितरां प्राप्ता विशेषोन्नतिः ।
आशाः शीतलतां नयत्यविरतं यस्य प्रतापानल-
स्तस्य श्रीमदनन्तराजनृपतेः काले किलायं कृतः ॥

इति श्रीप्रकाशेन्द्रात्मजव्यासदासापराख्यश्रीक्षेमेन्द्रकृता
औचित्यविचारचर्चा समाप्ता ।

---

१. 'तन्व्या यत्सुरतान्ततान्तनयनम्' इत्यमरुशतकपुस्तकेषु पाठः.

# KĀVYAMĀLĀ.



A collection of old and rare Sanskṛit Kāvyas, Nātakas, Champūs, Bhāṇas, Prahasanas, Chhandas, Alankāras &c.

## PART II.

EDITED BY

PAṆDIT DURGĀPRASĀD

AND

KĀS'ĪNĀTH PĀṆDURANG PARAB,

VĀSUDEV LAXMAN SHĀSTRĪ PANSHĪKAR.

Second Edition.

PUBLISHED

BY

PĀNDURANG JĀWAJĪ,

PROPRIETOR OF THE 'NIRNAYA SÂGAR' PRESS,

BOMBAY.

1932.

*Price 1 Rupee.*

॥ श्रीः ॥

# काव्यमाला ।

नाम

नानाविधप्राचीनकाव्यनाटकचम्पूभाणप्रहसन-
च्छन्दोलंकारादिसाहित्यग्रन्थानां
संग्रहः ।

## द्वितीयो गुच्छकः ।

पण्डितदुर्गाप्रसादेन, परबोपाह्वपाण्डुरङ्गात्मजकाशिनाथशर्मणा,
पणशीकरोपाह्वलक्ष्मणात्मजवासुदेवशर्मणा च
संशोधितः ।

द्वितीयं संस्करणम् ।

स च
मुम्बय्यां
पाण्डुरङ्ग जावजी श्रेष्ठिभिः
स्वीये निर्णयसागराख्ययन्त्रालये मुद्राक्षरैरङ्कयित्वा प्राकाश्यं नीतः ।

शाकः १८५३ खिस्ताब्दः १९३२.

मूल्यमेको १ रूप्यकः ।

# अनुक्रमणिका ।

# काव्यमाला।

## भगवत्पादश्रीशंकराचार्यकृतं
## विष्णुपादादिकेशान्तवर्णनस्तोत्रम्।

टिप्पणसहितम्।

लक्ष्मीभर्तुर्भुजाग्रे कृतवसति सितं यस्य रूपं विशालं
नीलाद्रेस्तुङ्गशृङ्गस्थितमिव रजनीनाथबिम्बं विभाति।
पायान्नः पाञ्चजन्यः स सकुलदितिजत्रासनैः पूरयन्स्वै-
र्निर्ध्वानैर्नीरदौघध्वनिपरिभवदैरम्बरं कम्बुराजः॥ १॥

स पाञ्चजन्यो नाम कम्बुराजः शङ्खश्रेष्ठो नोऽस्मान्पायात्। किंविशिष्टः। स्वैर्निर्ध्वानैर्नितरां ध्वानैरम्बरं नभः पूरयन्। नीरदा मेघास्तेषामोघोऽविच्छिन्नस्तोमस्तस्य ध्वनीनां गर्जितशब्दानां परिभवमभिभवं ददतीत्येवंविधैरित्यर्थः। मेघौघशङ्खयोर्युगपद्ध्वनतोः श्रुतिमतां शङ्खशब्द एव श्रुतिगोचरो न मेघौघशब्द इति मेघध्वनयः शङ्खध्वनिभिरभिभूयन्त इत्युच्यते। एतेन विशेषणेन निर्ध्वानैरित्यत्र निरुपसर्गद्योतितोऽतिशयः साधितः। कुलैः सह वर्तमानाः सकुलास्ते च ते दितिजा दैत्यास्तांस्त्रासयन्तीति तैः। यस्य कम्बुराजस्य रूपं लक्ष्मीभर्तुः श्रीकान्तस्य भुजाग्रे। वामोर्ध्वकर इति यावत्। कृता वसतिर्येन रूपेण तत्। सितं शुभ्रम्। विशालं महत्। उत्प्रेक्षते—नीलाद्रिरिन्द्रनीलमणिपर्वतस्तस्य यत्तुङ्गमुन्नतं शृङ्गं शिखरं तत्र स्थितं रजनीनाथस्य चन्द्रमसो बिम्बं मण्डलमिव। इन्द्रनीलगिरिरिव भगवन्मूर्तिस्तच्छृङ्गवत्करस्तत्रस्थचन्द्रमण्डलवच्छङ्ख इति योज्यम्॥

आहुर्यस्य स्वरूपं क्षणमुखमखिलं सूरयः कालमेतं
ध्वान्तस्यैकान्तमन्तं यदपि च परमं सर्वधाम्नां च धाम।

---

१. बहवो ग्रन्थाः स्तोत्राणि च शंकराचार्यकृतित्वेन प्रसिद्धानि समुपलभ्यन्ते. तानि सर्वाण्यपि प्रधानशंकराचार्यकृतानीति न मन्तव्यम्, किं तु तत्सिंहासनाधिरूढैरधुनापि शंकराचार्यपदप्रसिद्धैस्तच्छिष्यप्रशिष्यैरपि बहूनि विरचितानीति ज्ञेयम्. एतद्विष्णुपादादिकेशान्तवर्णनस्तोत्रं तु प्रधानशंकराचार्यकृतमेव भाति, यतो माधवीयशंकरविजये चतुर्दशे सर्गे 'मुमूर्षुस्वजननीप्रेरणया शंकराचार्यैर्विष्णुस्वरूपवर्णनमकारि' इत्यादिका कथा वर्तते. सा च विष्णुस्तुतिरियमेवेति बहूनां मतम्. प्रधानशंकराचार्यास्तु ख्रिस्तसंवत्सरीयाष्टमशतकसमाप्तौ प्रादुर्बभूवुरित्यार्यविद्यासुधाकरधृतशंकरमन्दारसौरभादिवचनेभ्योऽवसीयते. षष्ठशतकोत्तरभागे सप्तमशतकपूर्वभागे वा शंकराचार्यस्थितिरासीदिति नव्यविदुषां मतम्. एतदेव युक्तियुक्तं प्रतीयते.

चक्रं तच्चक्रपाणेर्दितिजतनुगलद्रक्तधाराक्तधारं
शश्वन्नो विश्ववन्द्यं वितरतु विपुलं शर्म घर्मांशुशोभम् ॥ २ ॥

चक्रपाणेर्नारायणस्य तच्चक्रं दक्षिणोर्ध्वकरस्थितं नोऽस्माकं विपुलं शर्म सुखं वितरतु । किंविशिष्टम् । विश्ववन्द्यम् । पुनः किंविशिष्टम् । युद्धावसरे दितिजानां तनुभ्यो विदारिताभ्यो या गलन्त्यो रक्तधारास्ताभिरक्ता लिप्ता धारा नेम्यग्रं यस्य तत् । सूरयो विद्वांसः क्षणमुखं क्षणलवत्रुटिप्रभृतिकमखिलं संवत्सरान्तमेतं सर्वं कालं यस्य चक्रस्य स्वरूपमाहुस्तच्चक्रमिति संबन्धः । अपि च यच्चक्रं ध्वान्तस्यैकान्तमव्यभिचार्येन्तमन्तकरं सूरय आहुः । अन्तयति नाशयतीत्यन्तम् । सर्वेषां धाम्नां तेजसां चापि परमं निरतिशयं धामाश्रयीभूतम । घर्मांशोः सूर्यस्येव शोभा यस्य । सूर्येऽपि कालात्मकत्वं निरतिशयतेजोमयत्वं निःशेषतमोनाशकत्वं विश्ववन्द्यत्वं च सर्वागमप्रसिद्धमेव ॥

अव्यान्निर्घातघोरो हरिभुजपवनामर्शनाध्मातमूर्ते-
रस्मान्विस्मेरनेत्रत्रिदशनुतिवचःसाधुकारैः सुतारः ।
सर्वं संहर्तुमिच्छोररिकुलभुवनं स्फारविस्फारनादः
संयत्कल्पान्तसिन्धौ शरसलिलघटावार्मुचः कार्मुकस्य ॥ ३ ॥

कार्मुकस्य धनुषः स्फारविस्फारनादोऽस्मानव्यात् । स्फारः प्रबलोऽतिशयितो वा विस्फारनादो धनुषघोषः 'विस्फारो धनुषः स्वानः' इत्यमरः । ज्याकर्षणविशेषजो ध्वनिरित्यर्थः । किंविशिष्टः । निर्घातोऽशनिपातशब्दस्तद्वद्घोरो दुःसहः । पुनः किंविशिष्टः । किमिदमित्यकस्माद्विस्मेराणि विकसितानि नेत्राणि येषां ते च ते त्रिदशास्तेषां नुतिवचःसाधुकारैर्विस्मितदेवकृतैः 'जय जय, रक्ष रक्ष' इत्यादिस्तुतिवचनसत्कारैर्मिश्रितः सन्सुतारः सुतरामुच्चः । हरेर्नारायणस्य भुजः कर एव पवनस्तेनामर्शनं यदीषदाकर्षणं तेनाध्मातोपचिता मूर्तिर्यस्य । सर्वमशेषमरिकुलभुवनं शत्रुसमूह एव भुवनं जगत्संहर्तुं नाशयितुमिच्छोः । संयत्सङ्ग्राम एव कल्पान्तसिन्धुः प्रलयकालीनसमुद्रस्तस्मिन् । शरा एव सलिलानि तेषां घटा धाराः । अनवच्छिन्नपरम्परा शरवृष्टिरिति यावत् । तस्या वार्मुक् मेघस्तस्य । अत्र वार्मुक्शब्दो मेघे रूढ एव ग्राह्यः, सलिलशब्देन पौनरुक्त्यापातात् । यथा प्रलयकालीनो मेघः पवनामर्शनाध्मातमूर्तिः सर्वजगत्संहारेच्छुः सर्वसंहारकप्रलयसिन्धुपूरणाय सलिलघटां मुञ्चति तद्वद्धनुरपि ॥

जीमूतश्यामभासा मुहुरपि भगवद्बाहुना मोहयन्ती
युद्धेषूद्धूयमाना झटिति तडिदिवालक्ष्यते यस्य मूर्तिः ।
सोऽसिस्त्रासाकुलाक्षत्रिदशरिपुवपुःशोणितास्वादहृष्टो
नित्यानन्दाय भूयान्मधुमथनमनोनन्दको नन्दको नः ॥ ४ ॥

सोऽसिः खड्गो नन्दको नन्दकनामा नोऽस्माकं नित्यानन्दाय भूयात् । किंलक्षणः ।

त्रासेनाकुलान्यक्षाणीन्द्रियाणि येषां ते च ते त्रिदशरिपवस्तेषां वपूंषि तेषु शोणितं रुधिरं तस्यास्वादः पानं तेन दृप्तो दर्पाविष्टः । मधुमथनो मधुसूदनस्तस्य मनो नन्दयतीति नन्दनः । यस्य मूर्तिर्युद्धेषु झटिति शीघ्रं तडिदिव चपलगतिरालक्ष्यते । किंलक्षणा मूर्तिः । जीमूतश्यामभासा भगवतो बाहुना मुहुरुद्धूयमाना कम्प्यमाना । अपिशब्दान्मेघान्तस्तडिदिव दैत्यदेहेषु प्रविश्यमानेति । अत एव मोहयन्ती । दैत्यानिति शेषः । अत्रानुक्तमपि चर्म खड्गसहचरं बोद्धव्यम्, अष्टायुधसहिताष्टबाहुयुक्तभगवन्मूर्तेः पुराणेषु प्रसिद्धत्वात् ॥

कम्राकारा मुरारेः करकमलतलेनानुरागाद्गृहीता
सम्यग्वृत्ता स्थिताग्रे सपदि न सहते दर्शनं या परेषाम् ।
राजन्ती दैत्यजीवासवमदमुदिता लोहितालेपनार्द्रा
कामं दीप्तांशुकान्ता प्रदिशतु दयितेवास्य कौमोदकी नः ॥ ५ ॥

एवंविशिष्टा सा कौमोदकी भगवद्गदा नोऽस्मभ्यं काममभीष्टं प्रदिशतु । किंलक्षणा । कम्रो मनोहर आकारो यस्याः सा । तथा मुरारेः करकमलतलेनानुरागाद्गृहीता । निमित्तार्थो पञ्चमी । सम्यग्वृत्ता वर्तुला । अग्रे भगवत्पुरतः स्थिता । परेषां शत्रूणां दर्शनं न सहते । सपदि सहसैव तान्निर्भर्त्सयतीति शेषः । यद्वा सपदि कदापि परेषां दर्शनं न सहते । राजन्ती शोभमाना । दैत्यानां जीवो जीवनं स एवासवो मद्यं तदास्वादकृतमदेन हर्षेण मुदिता । तथा दैत्यदेहस्थलोहितकृतालेपनेनाङ्गरागेणार्द्रा क्लिन्ना । तथा दीप्तैरंशुभिः किरणैः कान्ता कमनीया । अस्य भगवतो दयितेव । कथं तदुच्यते— अनुरागाद्गृहीतेत्यन्तं यथाव्याख्यातमेव । वृत्तं चारित्रम् । परेषां परपुरुषाणाम् । लोहितचन्दनलेपनेनार्द्रा । दीप्त उज्ज्वलोंऽशुकस्य वस्त्रस्याऽग्रभागो यस्याः सा ॥

यो विश्वप्राणभूतस्तनुरपि च हरेर्यानकेतुस्वरूपो
यं संचिन्त्यैव सद्यः स्वयमुरगवधूवर्गगर्भाः पतन्ति ।
चञ्चच्चण्डोरुतुण्डत्रुटितफणिवसारक्तपङ्काङ्कितास्यं
वन्दे छन्दोमयं तं खगपतिममलस्वर्णवर्णं सुपर्णम् ॥ ६ ॥

तं सुपर्णं गरुडं वन्दे । किंलक्षणम् । अमलं यत्स्वर्णं सुवर्णं तस्य वर्ण इव वर्णो यस्य । खगाः पक्षिणस्तेषां पतिस्तम् । चञ्चद्देदीप्यमानं चण्डमतिकोपनमुरु महच्च यत्तुण्डं मुखं तेन त्रुटितारिछन्ना ये फणिनस्तेषां वसा रक्तं च तयोः पङ्कः कर्दमस्तेनाङ्कितं लिप्तमास्यं मुखं यस्य । पुनः किंविशिष्टम् । छन्दोमयम् । यो विश्वप्राणभूतः । सर्वप्राणेभ्यो भूत उद्भूतः । एकीभूतसकलप्राणिबलमूर्तिरित्यर्थः । अपि च हरेस्तनुर्मूर्त्यन्तरम् । तथा तस्यैव यानकेतुस्वरूपः । वाहनरूपो ध्वजरूपश्चेत्यर्थः । यं संचिन्त्यैव, न तु दृष्ट्वा, सद्य उरगवधूवर्गस्य सर्पस्त्रीसमूहस्य गर्भा जठरान्तःस्थिता अपि नागसंतानाः स्वयं पतन्ति ॥

विष्णोर्विश्वेश्वरस्य प्रवरशयनकृत्सर्वलोकैकधर्ता
सोऽनन्तः सर्वभूतः पृथुविमलयशाः सर्ववेदैश्च वेद्यः ।
पाता विश्वस्य शश्वत्सकलसुररिपुध्वंसनः पापहन्ता
सर्वज्ञः सर्वसाक्षी सकलविषभयात्पातु भोगीश्वरो नः ॥ ७ ॥

सोऽनन्तोऽनन्तनामा भोगीश्वरो नागकुलपतिर्नोऽस्मान्सकलविषभयात्पातु । विश्वेश्वरस्य विष्णोः प्रवरं श्रेष्ठं यच्छयनं शय्या तत्करोतीति । अत एव सर्वलोकैकधर्ता । स्वान्तःस्थितसकलजगतः परमात्मनो धारयितेत्यर्थः । सृष्टिकाले सर्वभूतमुत्पन्नमस्मादिति सर्वभूतः । अत एव पृथु महद्विमलं पावयितृ यशो यस्य । सर्ववेदैः । वेद इत्युपलक्षणम् । इतिहासपुराणादिभिरपि वेद्य इत्यर्थः । जगत्स्थितिकाले विश्वस्य पाता पालयिता । शश्वत्सदा । सकलसुररिपुध्वंसनः । अखिलधर्मप्रतिपक्षध्वंसन इत्यर्थः । नतिनुतिस्मरणादिभिः सर्वजनानां पापहन्ता । सर्वज्ञः । सर्वसाक्षी । अनन्तस्य विष्णोरवतारत्वेन वर्णितत्वात्सर्वाणि विशेषणानि युक्तानि ॥

वाग्भूगौर्यादिभेदैर्विदुरिह मुनयो यां यदीयैश्च पुंसां
कारुण्यार्द्रैः कटाक्षैः सकृदपि पतितैः संपदः स्युः समग्राः ।
कुन्देन्दुस्वच्छमन्दस्मितमधुरमुखाम्भोरुहां सुन्दराङ्गीं
वन्दे वन्द्यामशेषैरपि मुरभिदुरोमन्दिरामिन्दिरां ताम् ॥ ८ ॥

तामिन्दिरां लक्ष्मीं वन्दे । किंलक्षणाम् । मुरभिदो नारायणस्योरो वक्षो मन्दिरं गृहं यस्याः । अशेषैः समस्तैर्वन्द्या । सुन्दराण्यङ्गानि यस्याः । कुन्दः कुसुमविशेषः, इन्दुश्चन्द्रः । कुन्देन्दू इव स्वच्छं शुभ्रं मन्दमल्पं च तत्स्मितं तेन मधुरं मनोहरं मुखाम्भोरुहं यस्याः । यां मुनयो व्यासादयो वाक्सरस्वती, भूर्धरित्री, गौरी पार्वती । आदिपदाद्द्वियादीनां ग्रहणम् । तैर्भेदैर्विदुः । पुनः किंलक्षणाम् । यदीयैः कारुण्यार्द्रैः कृपापरवशैः कटाक्षैः सकृदेकवारमपि पतितैः पुंसां समग्राः संपूर्णाः संपदः स्युः । ताम् ॥

या सूते सत्त्वजालं सकलमपि सदा संनिधानेन पुंसो
धत्ते या सत्त्वयोगाच्चरमचरमिदं भूतये भूतजातम् ।
धात्रीं स्थात्रीं जनित्रीं प्रकृतिमविकृतिं विश्वशक्तिं विधात्रीं
विष्णोर्विश्वात्मनस्तां विपुलगुणमयीं प्राणनाथां प्रणौमि ॥ ९ ॥

विश्वात्मनो विष्णोः प्राणनाथां प्रकृतिं तां प्रणौमि प्रकर्षेण स्तौमि । विश्वस्यात्मा तस्य । विश्वाधिष्ठानस्येत्यर्थः । प्राणनाथां प्राणप्रियात् । भार्यामिति यावत् । प्रक्रियते प्रसूयते सर्वमस्या इति प्रकृतिर्जनिमतामुपादानम् । किंलक्षणम् । विकृतिर्विकारः । न विकृतिरविकृतिस्ताम् । अनादिमित्यर्थः । विश्वस्मिन्प्रपञ्चे शक्तिरुत्पादनसामर्थ्यं यस्याः ।

विधात्रीम् । स्थात्रीं स्थिरस्वभावाम् । जनित्रीमपूर्वाकारोत्पादयित्रीम् । विपुला विस्तीर्णा गुणाः सत्त्वादयस्तन्मयीं तत्स्वरूपाम् । लोहितशुक्लकृष्णमयीमिति वा । या पुंसः सर्वाधिष्ठानस्य विष्णोः संनिधानेन संनिधिसत्तामात्रेण सत्त्वजालं प्राणिसमूहं सदा सूते जनयति । सकलमित्यनेन न केवलं भूमिगतानामेव प्रसवित्री, अपि तु देवादीनामपीति गम्यते । पुनः, या पुंसः सत्त्वयोगात्सत्तासंबन्धादिदं प्रत्यक्षादिसंनिधापितं चरं जङ्गममचरं स्थावरं च भूतजातं भूतये विभूत्यर्थम् । प्राणिविस्तारार्थमिति यावत् । धत्ते बिभर्ति ॥

येभ्योऽसूयद्भिरुच्चैः सपदि पदमुरु त्यज्यते दैत्यवर्गै-
र्येभ्यो धर्तुं च मूर्ध्ना स्पृहयति सततं सर्वगीर्वाणवर्गः ।
नित्यं निर्मूलयेयुर्निचिततरममी भक्तिनिघ्नात्मनां नः
पद्माक्षस्याङ्घ्रिपद्मद्वयतलनिलयाः पांसवः पापपङ्कम् ॥ १० ॥

अमी पद्माक्षस्य पुण्डरीकाक्षस्य हरेरङ्घ्रिपद्मद्वयस्य तलमधोभागस्तन्निलयः स्थानं येषां ते पांसवो रेणवो नोऽस्माकं पापपङ्कं दुरितकर्दमं नित्यं निर्मूलयेयुः । नित्यमिति पापपङ्कविशेषणम् । नितरां चितं निचितमुपर्युपरि संचितम्, तत्राप्यतिशयेन निचितं निचिततरम् । पूर्वपूर्वचितमनुत्सार्यैव पुनःपुनरुपर्युपरि चितमित्यर्थः । कथंभूतानां नः । भक्तिनिघ्नात्मनां भक्त्यधीनचित्तानाम् । येभ्यः पादतलपांसुभ्योऽसूयद्भिः । यान्द्विषद्भिरित्यर्थः । दैत्यवर्गैरसुरकुलैः । उच्चैरुन्नतैः । आक्रान्तदेवकुलैरिति यावत् । उरु बह्वैश्वर्ययुक्तमपि पदं स्वस्थानं सपदि तत्क्षणमेव त्यज्यत उत्सृज्यते । पुनः किंभूतानाम् । सर्वगीर्वाणवर्गः सततं मूर्ध्ना धर्तुमुद्वोढुं येभ्यः स्पृहयति । यान्धर्तुं वाञ्छतीत्यर्थः ॥

रेखा लेखाभिवन्द्याश्चरणतलगताश्चक्रमत्स्यादिरूपाः
स्निग्धाः सूक्ष्माः सुजाता मृदुललिततरक्षौमसूत्रायमाणाः ।
दद्युर्नो मङ्गलानि भ्रमरभरजुषा कोमलेनाब्धिजायाः
कम्रेणाम्रेड्यमानाः किसलयमृदुना पाणिना चक्रपाणेः ॥ ११ ॥

चक्रपाणेर्नारायणस्य चरणतलगताश्चक्रमत्स्यादिरूपा रेखा नोऽस्मभ्यं मङ्गलानि दद्युः । किंविशिष्टाः । लेखा देवास्तैर्वन्द्या वन्दनार्हाः । स्निग्धा अरूक्षाः । सूक्ष्माः कृशाः । सुजाताः । स्वाश्रयसमतलत्वाविरोधिन्य इत्यर्थः । मृदूनि श्लक्ष्णानि च तानि ललिततराण्यतिशयमनोहराणि च यानि क्षौमसूत्राणि तद्वदाचरन्तीति ताः । अब्धिजाया लक्ष्म्याः पाणिनाम्रेड्यमानाः पुनःपुनरामृज्यमानाः । कथंभूतेन पाणिना । किसलयमृदुना । कम्रेण कमनीयेन । भ्रमन्ति रुवन्ति वेति व्युत्पत्त्या सशब्दं भ्रममाणानि प्रकोष्ठनिष्ठकरभूषणानि भ्रमराणि तेषां भरः स्तोमस्तं जुषते तेन । कोमलेन श्लक्ष्णेन ॥

यस्मादाक्रामतो द्यां गरुडमणिशिलाकेतुदण्डायमाना-
दाश्च्योतन्ती बभासे सुरसरिदमला वैजयन्तीव कान्ता।
भूमिष्ठो यस्तथान्यो भुवनगृहबृहत्स्तम्भशोभां दधानः
पातामेतौ पयोजोदरदलिततलौ पङ्कजाक्षस्य पादौ॥ १२॥

यस्मात्पादादाश्च्योतन्त्यापतन्ती सुरसरिद्गङ्गा। अमला निर्मलोदका कान्ता मनोहरा वैजयन्ती पताकेव बभासे। किंलक्षणात्। द्यामाक्रामतः। अण्डकपालस्फुटनपर्यन्तं दीर्घकृतादित्यर्थः। गरुडमणिर्मरकतमणिस्तन्मयी या शिला तद्रूपो यः केतुदण्डः पताकाश्रयभूता यष्टिस्तद्वदाचरतीति तस्मात्। एवं वामपादं वर्णयित्वा दक्षिणं वर्णयति—तथान्यो दक्षिणः पादो भूमिष्ठः। भुवनं त्रैलोक्यं तदेव गृहं तस्मिन्बृहन्महान्यः स्तम्भस्तस्य शोभां दधानः। त्रैलोक्यभवनोत्तम्भनस्तम्भ इव स्थित इत्यर्थः। यावेवंविधौ पङ्कजाक्षस्य हरेः पादौ तावेतौ पातां पालयेताम्। अस्मानिति शेषः। पयोजं कमलं तस्योदरं मध्यं तद्दलितं पराभूतं याभ्यां तादृशे तले ययोस्तौ। पयोजोदरादपि सुकुमारतलावित्यर्थः॥

आक्रामद्भ्यां त्रिलोकीमसुरसुरपती तत्क्षणादेव नीतौ
याभ्यां वैरोचनीन्द्रौ युगपदपि विपत्संपदोरेकधाम।
ताभ्यां ताम्रोदराभ्यां मुहुरहमजितस्याञ्चिताभ्यामुभाभ्यां
प्राज्यैश्वर्यप्रदाभ्यां प्रणतिमुपगतः पादपङ्केरुहाभ्याम्॥ १३॥

तत्क्षणादेव यस्मिन्क्षणे बलिदैत्यदत्तोदकं हस्ते पतितं तदैव त्रिलोकीमाक्रामद्भ्यां याभ्यामसुरसुरपती वैरोचनीन्द्रौ बलिशक्रौ युगपत्समकालमेव क्रमेण विपत्संपदोरैश्वर्यभ्रंशतत्संपत्त्योरेकलधाम मुख्यं स्थानं नीतौ प्रापितौ। विरोचनापत्यं बलिर्विपद्धामलम्, इन्द्रश्च संपद्धामलं नीत इत्यर्थः। अपिशब्दो विरोधद्योतकः। एकस्यामाक्रमणक्रियायां विरुद्धोभयकार्ययोगो विरोधः। याभ्यामेवं कृतं ताभ्यामुभाभ्यामजितस्य विष्णोः पादपङ्केरुहाभ्यामहं मुहुः शश्वत्प्रणतिं नम्रतामुपगतः। ताम्रेत्यादीनि पादविशेषणानि। ताम्रे आरक्ते उदरे अधस्तले ययोः। अञ्चिताभ्यां पूजिताभ्याम्। ब्रह्मादिभिरिति शेषः। प्राज्यमधिकमैश्वर्यं भक्तेभ्यः प्रददत इति ताभ्याम्॥

येभ्यो वर्णश्चतुर्थश्चरमत उदभूदादिसर्गे प्रजानां
साहस्री चापि संख्या प्रकटमभिहिता सर्ववेदेषु येषाम्।
व्याप्ता विश्वंभरा यैरतिविततनोर्विश्वमूर्तेर्विराजो
विष्णोस्तेभ्यो महद्भ्यः सततमपि नमोऽस्त्वङ्घ्रिपङ्केरुहेभ्यः॥ १४॥

विश्वमूर्तेर्विराजो विराड्रूपस्य विष्णोस्तेभ्योऽप्यङ्घ्रिपङ्केरुहेभ्यः सततं सर्वदा नमोऽस्तु।

अतिविततनोरपरिच्छिन्नदेहस्य । किंलक्षणेभ्यः । महद्भ्यः । येभ्यः सकाशात्प्रजानामादिसर्गे चतुर्थो वर्णः शूद्राख्यश्चरमतो वर्णत्रयोत्पत्त्यनन्तरमुदभूत् । अपि च येषामङ्घ्रिपङ्केरुहाणां साहस्री संख्या प्रकटं स्फुटं सर्ववेदेष्वभिहिता । 'सहस्राक्षः सहस्रपात्' इत्याद्येत्यर्थः । यैर्विश्वंभरा पृथिवी व्याप्ता पूर्णा ॥

विष्णो पादद्वयाग्रे विमलनखमणिभ्राजिता राजते या
राजीवस्येव रम्या हिमजलकणिकालंकृताग्रा दलाली ।
अस्माकं विस्मयार्हाण्यखिलमुनिजनप्रार्थनीयानि सेयं
दद्यादाद्यानवद्या ततिरतिरुचिरा मङ्गलान्यङ्गुलीनाम् ॥ १५ ॥

सेयं विष्णोरङ्गुलीनां ततिः पङ्क्तिरस्माकं मङ्गलानि दद्यात् । किंभूता । आद्या भवाद्या पूर्वसिद्धा । भक्तानामखिलाभीष्टकारणभूतेत्यर्थः । अनवद्या निर्मला । अम्लानेत्यर्थः । अतिरुचिरा । या पादद्वयाग्रे विमला निर्मला ये नखमणयस्तैर्भ्राजिता सती राजते । राजीवस्य कमलस्य दलाली दलपङ्क्तिरिव । किंलक्षणा दलाली । रम्या । हिमजलानां कणिकाभिर्बिन्दुभिरलंकृतान्यग्राणि यस्याः सा । किंलक्षणानि मङ्गलानि । विस्मयार्हाण्याश्चर्ययोग्यानि । अदृष्टपूर्वाणीति यावत् । तथाखिलमुनिजनप्रार्थनीयानि ॥

यस्यां दृष्ट्वामलायां प्रतिकृतिममराः स्वां भवन्त्यानमन्तः
सेन्द्राः सान्द्रीकृतेर्ष्याः स्वपरसुरकुलाशङ्कयातङ्कवन्तः ।
सा सद्यः सातिरेकां सकलसुखकरीं संपदं साधयेन्न-
श्चञ्चच्चार्वंशुचक्रा चरणनलिनयोश्चक्रपाणेर्नखाली ॥ १६ ॥

सा चक्रपाणेश्चरणनलिनयोर्नखाली नोऽस्माकं संपदं सद्यः साधयेत् । सकलान्यैहिकामुष्मिकाणि सुखानि करोति ताम् । सातिरेकामधिकाम् । किंलक्षणा नखाली । चञ्चन्तः प्रसरन्तश्चारवो येंऽशवस्तेषां चक्रं समूहो यस्याः । यस्यां नखाल्याममलायां सेन्द्रा अमरा आनमन्तः सन्तः स्वां प्रतिकृतिं प्रतिबिम्बं दृष्ट्वा स्वपरसुरकुलाशङ्कया स्वप्रतिपक्षदेवसमूहभ्रान्त्या सान्द्रीकृतेर्ष्या अतिशयेर्ष्यायुक्ता आतङ्कवन्तः शङ्कानिमित्तकभययुक्ताश्च भवन्ति ॥

पादाम्भोजन्मसेवासमवनतसुरव्रातभास्वत्किरीट-
प्रत्युप्तोच्चावचाश्मप्रवरकरगणैश्चित्रितं यद्विभाति ।
नम्राङ्गाणां हरेर्नो हरिदुपलमहाकूर्मसौन्दर्यहारि-
च्छायं श्रेयःप्रदायि प्रपदयुगमिदं प्रापयेत्पापमन्तम् ॥ १७ ॥

हरेरिदं प्रपदयुगं पादाग्रद्वन्द्वं नोऽस्माकं पापमन्तं नाशं प्रापयेत् । कथंभूतानां नः । नम्राङ्गाणाम् । साष्टाङ्गं प्रणामं कुर्वतामित्यर्थः । किंलक्षणं प्रपदयुगम् । हरिदुपलो हरित-

वर्णो मणिविशेषस्तन्निर्मितो यो महाकूर्मस्तस्य सौन्दर्यं लावण्यं हरतीत्येवंविधा छाया कान्तिर्यस्य तत् । यथा श्रेयःप्रदायि । पादावेवाम्भोजन्मनी कमले तयोः सेवा तस्यां समवनता ये सुरास्तेषां यो व्रातः समूहस्तस्मिन्यानि भास्वन्ति किरीटानि तेषु प्रत्युता निखाता य उच्चावचा नानाविधा अश्मप्रवरा मणिश्रेष्ठास्तेषां करा रश्मयस्तेषां गणैः समूहैश्चित्रितं कर्बुरितं यद्विभाति ॥

श्रीमत्यौ चारुवृत्ते करपरिमलनानन्दहृष्टे रमायाः
सौन्दर्याढ्येन्द्रनीलोपलरचितमहादण्डयोः कान्तिचौरे ।
सूरीन्द्रैः स्तूयमाने सुरकुलसुखदे सूदितारातिसंघे
जङ्घे नारायणीये मुहुरपि जयतामस्सदंहो हरन्त्यौ ॥ १८ ॥

नारायणस्येमे जङ्घे मुहुः शश्वदस्सदंहः पापं हरन्त्यौ सत्यौ जयताम् । श्रीमत्यौ शोभावत्यौ । चारु सुन्दरं यथा स्यात्तथा वृत्ते वर्तुले । रमाया लक्ष्म्याः करयोः परिमलनेन य आनन्दस्तेन हृष्टे पुलकिते । सौन्दर्येण लावण्येनाढ्यो य इन्द्रनीलोपलस्तेन रचितौ यौ महादण्डौ तयोः कान्तिचौरे । सूरीन्द्रैर्विद्वच्छ्रेष्ठैः स्तूयमाने वर्ण्यमाने । सुरकुलस्य सुखदे । यस्मात्सूदितारातिसंघे हतदेवशत्रुकुले ॥

सम्यक्साह्यं विधातुं सममपि सततं जङ्घयोः खिन्नयोर्ये
भारीभूतोरुदण्डद्वयभरणकृतोत्तम्भभावं भजेते ।
चित्तादर्शं निधातुं महितमिव सतां ते समुद्गायमाने
वृत्ताकारे विधत्तां हृदि मुदमजितस्यानिशं जानुनी नः ॥ १९ ॥

अजितस्य हरेस्ते जानुनी नोऽस्माकं चित्ते मुदमनिशं विधत्ताम् । वृत्ताकारे मण्डलवत्समवर्तुलाकारे । सतां भक्तानां चित्तादर्शं मनोदर्पणं निधातुं समुद्गायमान आदर्शकोषायमाणे इव । महितं निर्मलीकृतं चित्तदर्शम् । ये खिन्नयोर्जङ्घयोः सम्यगौचित्येन साह्यं सहलम् । उपकारमिति यावत् । समं युगपदेव भारीभूतस्योरुदण्डद्वयस्य यद्भरणं धारणं तस्मिन्कृत उत्तम्भभावोऽवष्टम्भलं तद्भजेते । अपिशब्दः संभावनायाम् ॥

देवो भीतिं विधातुः सपदि विदधतौ कैटभाख्यं मधुंया-
वारोप्यारूढगर्वावधिजलधि ययोरेव दैत्यो जघान ।
वृत्तावन्योन्यतुल्यौ चतुरमुपचयं बिभ्रतावभ्रनीला-
वूरू चारू हरेस्तौ मुदमतिशयिनीं मानसे नो विधत्ताम् ॥ २० ॥

हरेस्तावूरू नोऽस्माकं मानसेऽतिशयिनीं मुदं विधत्ताम् । चारू मनोहरौ । वृत्तौ वर्तुलौ । अन्योन्यं परस्परं तुल्यौ समौ । चतुरं यथा स्यात्तथोपचयं पुष्टिं बिभ्रतौ । करिकरसदृशाकारावित्यर्थः । अभ्रनीला सजलजलदवच्छ्यामौ । तौ कौ । ययोरिति सप्तमी-

द्विवचनम् । देवो विष्णुर्ययोरूर्वोर्दैत्यं कैटभाख्यं मधुं चारोप्य जघानैव । कथंभूतौ । विधातुर्ब्रह्मणः सपदि स्वोत्पत्तिमात्रेण भीतिं विदधतौ । आरूढगर्वौ । कुत्र जघान । अधिजलधि समुद्रे ॥

पीतेन द्योतते यच्चतुरपरिहिते नाम्बरेणात्युदारं
जातालंकारयोगं जलमिव जलधेर्वाडवाग्निप्रभाभिः ।
एतत्पातित्यदान्नो जघनमतिघनादेनसो माननीयं
सातत्येनैव चेतोविषयमवतरत्पातु पीताम्बरस्य ॥ २१ ॥

पीताम्बरस्य विष्णोरेतद्व्याख्यास्यमानविशेषणं जघनं सातत्येन चेतोविषयमवतरन्मनोवृत्तिसमारूढं सत् । एनसः पापान्नोऽस्मान्पातु । कथंभूतादेनसः । अतिघनात् । अनेकजन्माभ्याससंचितादित्यर्थः । अत एव पातित्यदात् । किंलक्षणं जघनम् । माननीयं मानार्हम् । चतुरैरलंकरणकर्मकुशलैर्भक्तैश्चतुरं यथा स्यात्तथेति वा परिहितेनासञ्जितेन पीतेन सुवर्णाभेनाम्बरेण वस्त्रेण जातालंकारयोगं सदात्युदारं यथा स्यात्तथा द्योतते प्रकाशते तदेतत् । वाडवाग्निप्रभाभिर्जलधेर्जलमिव ॥

यस्या दाम्न्या त्रिधाम्नो जघनकलितया भ्राजतेऽङ्गं यथाब्धे-
र्मध्यस्थो मन्दराद्रिर्भुजगपतिमहाभोगसंनद्धमध्यः ।
काञ्ची सा काञ्चनाभा मणिवरकिरणैरुल्लसद्भिः प्रदीप्ता
कल्यां कल्याणदात्रीं मम मतिमनिशं कम्ररूपा करोतु ॥ २२ ॥

त्रिधाम्नो भगवतोऽङ्गं यस्याः काञ्च्या दाम्न्या रशनया तस्यैव जघनकलितया नितम्बनिबद्धया भ्राजते सा काञ्ची मम मतिमनिशं सर्वदा कल्यां समर्थां कल्याणदात्रीं मङ्गलकरीं करोतु । अब्धेः क्षीरसमुद्रस्य मध्ये स्थितो मन्दराद्रिर्भुजगपतेर्वासुकेर्महाभोगेन पृथुदीर्घेण कायेन संनद्धं परिवेष्टितं मध्यं यस्यैवंविधो यथाभ्राजीत्तथा भ्राजते । किंलक्षणा काञ्ची । काञ्चनाभा सुवर्णराजिकृतशोभा । मणिवराणां वज्रादीनां किरणैरुल्लसद्भिः प्रदीप्ता प्रकाशिता । अत एव कम्ररूपा कमनीयाकारा । पीताम्बरं हि तरङ्गितसमुद्रजलवत्, तदन्तराले भगवन्मूर्तिर्मन्दराचलवत्, तत्परिवेष्टनं काञ्चीदाम्नी वासुकिशरीरवत्, इति योज्यम् ॥

उन्नम्रं कम्रमुच्चैरुपचितमुदभूद्यत्र पत्रैर्विचित्रैः
पूर्वं गीर्वाणपूज्यं कमलजमधुपस्यास्पदं तत्पयोजम् ।
तस्मिन्नीलाश्मनीलैस्तरलरुचिजलैः पूरिते केलिबुद्ध्या
नालीकाक्षस्य नाभीसरसि वसतु नश्चित्तहंसश्चिराय ॥ २३ ॥

यत्र यस्मिन्नाभीसरसि तत्पयोजं कमलं पूर्वं सृष्टिकाल उदभूत्तस्मिन्नालीकाक्षस्य

कमलनयनस्य भगवतो नाभीसरसि सरोवद्गम्भीरवर्तुले नाभिमण्डले नोऽस्माकं चित्तहंसश्चिराय दीर्घकालं केलिबुद्ध्या रमणेच्छया वसतु । कथंभूते नाभीसरसि । नीलाश्मनीलैरिन्द्रनीलमणिवन्नीलवर्णैस्तरलैश्चञ्चलै रुचिजलैर्देहप्रभाकान्तिपूरैः पूरिते । किंलक्षणं पयोजम् । उन्नम्रमुन्नतम् । कम्रं मनोहरम् । विचित्रैर्नानावर्णैः पत्रैरुच्चैरतिशयेनोपचितम् । तथा गीर्वाणानां देवानां पूज्यम् । तथा कमलजो ब्रह्मा स एव मधुपो भ्रमरस्तस्यासदं स्थानम् ॥

पातालं यस्य नालं वलयमपि दिशां पत्रपङ्क्तिं नगेन्द्रा-
न्विद्वांसः केसरालीर्विदुरिह विपुलां कर्णिकां स्वर्णशैलम् ।
भूयाद्गायत्स्वयंभूमधुकरभुवनं भूमयं कामदं नो
नालीकं नाभिपद्माकरभवमुरु तन्नागशय्यस्य शौरेः ॥ २४ ॥

नागः शेषाख्यः शय्या यस्य तस्य शौरेर्विष्णोर्नाभिरेव पद्माकरः सरस्तत्र भवतीति तथाविधमुरु बृहन्नालीकं कमलं नोऽस्माकं कामदं भूयात् । गायन्वेदान्पठन्स्वयंभूर्ब्रह्मा स एव मधुकरस्तस्य भवनं गृहम् । तथा भूमयं पृथ्वीस्वरूपम् । किं तत् । विद्वांसो विदितसकलवेद्या यस्य नालं पातालमाहुः । तथा यस्य पत्रपङ्क्तिं दिशां वलयं मण्डलमाहुः । तथा नगेन्द्रान्हिमवदादीन्यस्य केसरालीर्विदुः । तथा स्वर्णशैलं मेरुं यस्य विपुलां कर्णिकां विदुः । तत् ॥

कान्त्यम्भःपूरपूर्णे लसदसितवलीभङ्गभास्वत्तरङ्गे
गम्भीराकारनाभीचतुरतरमहावर्तशोभिन्युदारे ।
क्रीडत्वानद्धहेमोदरनविनमहावाडवाग्निप्रभाढ्ये
कामं दामोदरीयोदरसलिलनिधौ चित्तमत्स्यश्चिरं नः ॥ २५ ॥

दामोदरस्य भगवत उदरसलिलनिधौ । 'कुक्षौ समुद्राश्चत्वारः' इत्युक्तत्वात् । नोऽस्माकं चित्तमत्स्यः कामं यथेष्टं क्रीडतु । उदरसलिलनिधिविशेषणानि । कान्तिर्देहदीप्तिः सैवाम्भ उदकं तस्य पूरः प्रवाहप्रसर्पणं तेन पूर्णे । तथा लसन्तः शोभमाना असिता नीला वलीनामुदरदेशस्थरेखाविशेषाणां भङ्गा एव भास्वन्तस्तरङ्गा यस्मिन् । तथा गम्भीरोऽगाध आकारो यस्य स चासौ नाभिश्चेति स एव चतुरतरोऽतिशयेन चतुरः सुन्दरो महानावर्तस्तेन शोभा विद्यते यस्मिन् । अत एवोदारे मनोहरे । तथानद्धमासमन्ताद्बद्धं यद्धेममयमुदरनविनमुदराभरणं तदेव महती वाडवाग्निप्रभा तयाढ्ये संभृते । यद्वा 'हेमोदरनलिन-' इति पाठः । तदा 'कर्णिकां स्वर्णशैलम्' (२४) इति पूर्वश्लोके मेरुकर्णिकस्य नाभिकमलस्योक्तत्वात् । हेमोदरं हेम कर्णिकाख्यमुदरे मध्ये यस्य तच्च तन्नलिनं च तदेव महावाडवाग्निप्रभेति व्याख्येयम् ॥

नाभीनालीकमूलादधिकपरिमलोन्मोहितानामलीनां
माला नीलेव यान्ती स्फुरति रुचिमती वक्रपद्मोन्मुखी या ।
रम्या सा रोमराजिर्महितरुचिमती मध्यभागस्य विष्णो-
श्चित्तस्था मा विरंसीच्चिरतरमुचितां साधयन्ती श्रियं नः ॥ २६ ॥

विष्णोर्मध्यभागस्य संबन्धिनी रोमराजिर्नोऽस्माकं चित्तस्था सती मा विरंसीद्विरतिं मा करोतु । तत्र भूयादित्यर्थः । किं कुर्वती । उचितामसद्योग्यां श्रियं साधयन्ती । किंभूता । रम्या । महितरुचिमती महिता सर्वैः प्रशस्ता या रुचिस्तद्वती । या नाभीनालीकस्य मूलाद्वक्त्रपद्मोन्मुखी । अलीनां भ्रमराणां नीला मालेव रुचिमती रुचिरा स्फुरति । कथंभूतानामलीनाम् । अधिकपरिमलोन्मोहितानाम् । नाभिकमलसौरभ्याघ्राणादधिकमोहितानामित्यर्थः ॥

आदौ कल्पस्य यस्मात्प्रभवति विततं विश्वमेतद्विकल्पैः
कल्पान्ते यस्य चान्तः प्रविशति सकलं स्थावरं जङ्गमं च ।
अत्यन्ताचिन्त्यमूर्तेश्चिरतरमजितस्यान्तरिक्षस्वरूपे
तस्मिन्नस्माकमन्तःकरणमतिमुदा क्रीडतात्क्रोडभागे ॥ २७ ॥

अजितस्य हरेः क्रोडभागे भुजद्वयमध्यप्रदेशे वक्षःस्थलादधोभागेऽस्माकमन्तःकरणं चिरतरमतिमुदा क्रीडतात् । कीदृशे । अन्तरिक्षस्वरूपे । हृदयाकाशस्थान इत्यर्थः । किंभूतस्याजितस्य । अत्यन्तं सर्वात्मना न चिन्त्या मूर्तिः स्वरूपं यस्य । यस्मात्क्रोडभागात्सकलं निरवशेषं विश्वं कल्पस्यादौ प्रभवत्युद्भवति । तथा कल्पान्ते यस्यान्तः स्थावरं जङ्गमं च विश्वं प्रविशति । किंलक्षणं विश्वम् । मन्वन्तरादिभेदैर्विततं विस्तीर्णम् ॥

संस्तीर्णं कौस्तुभांशुप्रसरकिसलयैर्मुग्धमुक्ताफलाढ्यं
श्रीवत्सोल्लासि फुल्लप्रतिवनवनमालांशुराजद्भुजान्तम् ।
वक्षः श्रीवृक्षकान्तं मधुकरनिकरश्यामलं शार्ङ्गपाणेः
संसाराध्वश्रमार्तैरुपवनमिव यत्सेवितं तत्प्रपद्ये ॥ २८ ॥

शार्ङ्गपाणेर्नारायणस्य तद्वक्षः प्रपद्ये तात्पर्येणाश्रये । यत्संसाराध्वश्रमार्तैर्जन्ममरणभोगवेदनादिमार्गभ्रमणजश्रमपीडितैरुपवनमिव सेवितमुपासितम् । उपवनतुल्यतामेव प्रतिपादयति—कौस्तुभस्य भगवत्कण्ठस्थितरत्नविशेषस्यांशवः किरणास्तेषां प्रसरास्तान्येव किसलयानि तैः संस्तीर्णम् । सर्वत्र विप्रसृतमिति यावत् । तथा मुग्धानि सुन्दराणि मुक्ताफलानि तैराढ्यम् । मौक्तिकानि यत्र फलतुल्यानीति यावत् । श्रीवत्सो नाम भगवद्वक्षसि प्रदक्षिणरोमावर्तो भृगुपदप्रहारस्थानगतश्चिह्नविशेषस्तस्योल्लासोऽभिव्यक्तिर्विद्यते यस्मिन् । तथा च फुल्ला विकसिता प्रतिवनं वने वने जाता या वनमाला

तस्या अंशुभिः परागै राजच्छोभमानं भुजान्तं यस्मिन् । पत्रपुष्पमय्या पादलम्बिनी माला वनमालेत्युच्यते । तथा श्रीवृक्षो नाम शुभावर्तविशेषस्तेन कान्तम् । अथवा श्रीरेव वृक्षस्तेन कान्तम् । तथा मधुकरनिकरवच्छ्यामलम् । उपवनमपि किसलयसंस्तीर्णम्, फलाढ्यम्, श्रीमतां शोभमानानां गवादिवत्सानामुल्लासैर्युक्तम्, तथा फुल्लानि यानि प्रतिवनानि संमुखवनानि तेषां या वनमाला संभजनीया(?) माला पङ्क्तिस्तस्यां राजन्तो भुजा विटपास्तेषामन्तः पर्यन्तो यस्मिंस्तादृशम्, श्रीवृक्षैर्बिल्वद्रुमैः कान्तम्, मधुकरनिकरैः श्यामलं च भवति ॥

कान्तं वक्षो नितान्तं विदधदिव गलं कालिमा कालशत्रो-
रिन्दोर्बिम्बं यथाङ्को मधुप इव तरोर्मञ्जरीं राजते यः ।
श्रीमान्नित्यं विधेयादविरलमिलितः कौस्तुभश्रीप्रतानैः
श्रीवत्सः श्रीपतेः स श्रिय इव दयितो वत्स उच्चैः श्रियं नः २९

श्रीपतेर्नारायणस्य श्रीवत्सश्चिह्नविशेषो नोऽस्माकं श्रियं नित्यमुच्चैरधिकं विधेयात् । किंलक्षणः । श्रीमाञ्शोभाढ्यः । यतः कौस्तुभश्रीप्रतानैः कौस्तुभमणिप्रभाप्रसरणैरविरलं निरन्तरं यथा स्यात्तथा मिलितः । श्रियो लक्ष्म्या भगवद्वक्षःस्थलस्थाया दयितः प्रीत्यास्पदो वत्स इव । तया नित्यं संलाल्यमानत्वात् । यः श्रीवत्सः कालशत्रोः शिवस्य गलं कालिमा कालकूटकार्ष्ण्यमिव, अङ्कः कलङ्क इन्दोर्बिम्बमिव, मधुपो भ्रमरस्तरोर्मञ्जरीमिव श्रीपतेर्वक्षो नितान्तं कान्तं मनोरमं विदधद्राजते शोभते ॥

संभूयाम्भोधिमध्यात्सपदि सहजया यः श्रिया संनिधत्ते
नीले नारायणोरःस्थलगगनतले हारतारोपसेव्ये ।
आशाः सर्वाः प्रकाशा विदधदपिदधच्चात्मभासान्यतेजां-
स्याश्चर्यस्याकरो नो द्युमणिरिव मणिः कौस्तुभः सोऽस्तु भूत्यै ॥ ३० ॥

यः सहजया श्रिया सहाम्भोधिमध्यात्संभूयाविर्भूय नारायणस्योरःस्थलमेव नीलविशालाकारवत्त्वाद्गगनतलं तस्मिन्संनिधत्त उच्चैः प्रत्यक्षो भवति । किंलक्षणे । हारो मुक्तामाला स एव तारा नक्षत्राणि तैरुपसेव्ये । किं कुर्वन् । सर्वा आशा दिश आत्मभासा प्रकाशा विदधत् । तथान्यतेजांस्याभरणान्तराणां प्रभा अपिदधत् । आत्मभासाच्छादयन्नित्यर्थः । तथाश्चर्यस्य विस्मयस्याकरः स्थानभूतः । स कौस्तुभो नोऽस्माकं भूत्या अस्तु । उत्प्रेक्षते—द्युमणिरिव सूर्य इव । सूर्योऽपि प्रातः समुद्रादुद्गच्छति । सहसिद्धया श्रिया शोभया युक्तः । नीलवर्णे तारायुक्ते गगनतले संनिधत्ते आशाः प्रकाशयति । अन्यत्तेजांसि चन्द्रनक्षत्रादितेजांसि पिदधाति ॥

या वायावानुकूल्यात्सरति मणिरुचा भासमानासमाना
साकं साकम्पमंसे वसति विदधती वासुभद्रं सुभद्रम् ।

सारं सारङ्गसंघैर्मुखरितकुसुमा मेचकान्ता च कान्ता
माला मालालितासान्न विरमतु सुखैर्योजयन्ती जयन्ती ॥ २१ ॥

या माला विष्णोरंसे साकम्पमीषत्कम्पसहितं यथा स्यात्तथा वसति । सास्मान्सुखैर्योजयन्ती सती न विरमतु । किंलक्षणा । जयन्ती जयकरी जयन्त्याख्या वा । वायौ मारुत आनुकूल्यात्सरति वहति सति साकम्पमिति योज्यम् । मणिरुचा कौस्तुभप्रभया साकं सह भासमानात एवासमानानुपमा । तथा वासुभद्रं वासुदेवं सुभद्रं शोभनं विदधती । भूषयन्तीत्यर्थः । तथा सारङ्गसंघैर्भ्रमरसमूहैः सारं यथा स्यात्तथा मुखरितकुसुमा । तथा मेचकान्ता श्यामवर्णकुसुमगुम्फितप्रान्ता । अत एव कान्ता । तथा मालालिता वक्षःस्थया लक्ष्म्यानुमोदिता ॥

हारस्योरुप्रभाभिः प्रतिवनवनमालांशुभिः प्रांशुभिर्य-
च्छ्रीभिश्चाप्यङ्गदानां शबलितरुचिभिर्निष्कभाभिश्च भाति ।
बाहुल्येनैव बद्धाञ्जलिपुटमजितस्याभियाचामहे त-
द्बन्धार्तिं बाधतां नो बहुविहतिकरीं बन्धुरं बाहुमूलम् ॥ २२ ॥

अजितस्य भगवतस्तद्बाहुमूलमंसदेशमभियाचामहे प्रार्थयामहे । किंलक्षणम् । बन्धुरं सुन्दरम् । किं कृत्वा । बाहुल्येन पुनःपुनरेवाञ्जलिपुटं बद्ध्वा । किं याच्ञयेति चेत् । नोऽस्माकं बहुविहतिकरीमनेकानर्थकरीं बन्धार्तिं बन्धनरूपां पीडां बाधताम् । संसारनिगडादस्मान्मोचयत्वित्यर्थः । यद्बाहुमूलं हारस्योरुप्रभाभिरतिकान्तिभिः । तथा प्रतिवनजातपुष्परचितवनमालाया अंशुभिरंशुस्थानीयैर्विचित्रवर्णैः । निष्कस्य भूषणविशेषस्य भाभिः शबलिता रुचयो यासाम् । ताभिरङ्गदानां बाहुभूषणानां श्रीभिर्भाति । प्रांशुभिरित्यंशुविशेषणम् ॥

विश्वत्राणैकदीक्षास्तदनुगुणगुणक्षत्रनिर्माणदक्षाः
कर्तारो दुर्निरूपाः स्फुटगुरुयशसां कर्मणामद्भुतानाम् ।
शार्ङ्गं बाणं कृपाणं फलकमरिगदे पद्मशङ्खौ सहस्रं
बिभ्राणाः शस्त्रजालं मम ददतु हरेर्बाहवो मोहहानिम् ॥ २३ ॥

हरेर्बाहवो मम मोहहानिं ददतु । किंविशिष्टाः । विश्वस्य जगतस्त्राणे रक्षण एका मुख्या दीक्षा व्रतधारणं येषाम् । अत एव तस्य विश्वत्राणस्यानुगुणा योग्या गुणाः शौर्यादयो यस्य तादृशक्षत्रस्य निर्माणे दक्षाः समर्थाः । दुर्निरूपाः । एते एवंप्रकारा इयन्तश्चेत्यवधारयितुमशक्याः । तथा स्फुटगुरुयशसामतिस्पष्टमहत्ख्यातियुक्तानामद्भुतानां कर्मणां पराक्रमाणां कर्तारः । तथा शार्ङ्गं धनुः, बाणम्, कृपाणं खड्गम्, फलकं चर्म, अरिं सुदर्शनं चक्रम्, गदा कौमोदकी, पद्मम्, शङ्खः पाञ्चजन्यः, इत्येवंविधमन्यच्च सहस्रमपरिमितं शस्त्रजालं बिभ्राणाः । सहस्रं बाहव इति वा योजना ॥

कण्ठाकल्पोद्गतैर्यः कनकमयलसत्कुण्डलोस्रैरुदारै-
रुद्योतैः कौस्तुभस्याप्युरुभिरुपचितश्चित्रवर्णो विभाति ।
कण्ठाश्लेषे रमायाः करवलयपदैर्मुद्रिते भद्ररूपे
वैकुण्ठीयेऽत्र कण्ठे वसतु मम मतिः कुण्ठभावं विहाय ॥ ३४ ॥

अत्र वैकुण्ठस्य विष्णोरयं वैकुण्ठीयस्तस्मिन्कण्ठे मम मतिः कुण्ठभावमालस्यं विहाय वसतु स्थिरीभवतु । यैः कण्ठाकल्पाः कण्ठभूषणानि तेभ्य उद्गतैरुद्योतैः । तथा कनकमये लसन्ती ये कुण्डले तयोरुस्रैः किरणैः । उदारैर्मनोहरैरिष्टार्थदैर्वा । तथा कौस्तुभस्याप्युरुभिरुद्योतैरुपचितः सन् । चित्रवर्णो विभाति । पुनः किंलक्षणे । कण्ठे रमायाः कण्ठाश्लेषे लक्ष्मीकृतकण्ठालिङ्गने सति तस्या एव करवलयपदैर्मुद्रिते । अत एव भद्ररूपे सुन्दराकारे ॥

पद्मानन्दप्रदाता परिलसदरुणश्रीपरीताग्रभागः
काले काले च कम्बुप्रवरशशधरापूरणे यः प्रवीणः ।
वक्त्राकाशान्तरस्थस्तिरयति नितरां दन्ततारौघशोभां
श्रीभर्तुर्दन्तवासोद्युमणिरघतमोनाशनायास्त्वसौ नः ॥ ३५ ॥

असौ श्रीभर्तुर्दन्तवासो दन्ताच्छादनम् । ओष्ठद्वयमिति यावत् । स एव द्युमणिः सूर्यो नोऽस्माकमघतमोनाशनाय पापान्धकारदूरीकरणायास्तु । किंलक्षणः । पद्मा लक्ष्मीस्तस्या आनन्दप्रदाता । तथा परिलसन्ती यारुणश्री रक्तवर्णा कान्तिस्तया परीतो व्याप्तोऽग्रभागो यस्य । तथा काले काल उचितसमयेषु कम्बुप्रवरः शङ्खश्रेष्ठः स एव शशधरश्चन्द्रस्तस्यापूरणमाध्मानं तत्र यः प्रवीणः । तथा वक्त्ररूपो य आकाशस्तस्यान्तरे मध्ये तिष्ठतीति तथाविधः सन् । दन्तरूपाणां ताराणामोघः समूहस्तस्य शोभां तिरयत्यभिभवति । प्रसिद्धोऽपि द्युमणिः पद्मानामानन्दप्रदाता । अरुणः सूर्यसारथिस्तच्छ्रिया परीताग्रभागः । काले काले शुक्लपक्षतिथिषु चन्द्रस्य वृद्धिकरणे प्रवीणः । आकाशमध्यस्थः सन् । तारौघशोभां तिरस्करोति ॥

नित्यं स्नेहातिरेकान्निजकमितुरलं विप्रयोगाक्षमा या
वक्त्रेन्दोरन्तराले कृतवसतिरिवाभाति नक्षत्रराजिः ।
लक्ष्मीकान्तस्य कान्ताकृतिरतिविलसन्मुग्धमुक्ताफलश्री-
र्दन्ताली संततं सा नतिनुतिनिरतान्रक्षतादक्षता नः ॥ ३६ ॥

सा लक्ष्मीकान्तस्य दन्ताली दन्तपङ्क्तिर्नतिनुतिनिरतान्नमस्कारस्तुतितत्परान्नोऽस्मान्संततं रक्षतात् । किंलक्षणा । अक्षता क्षतरहिता । निरन्तरेति यावत् । कान्ताकृतिर्मनोहराकारा । तथातिविलसतामत्यन्तशोभिनां मुग्धानां सुन्दराणां मुक्ताफलानां

श्रीरिव श्रीर्यस्याः या नित्यं स्नेहातिरेकात्प्रेमबाहुल्यान्निजकमितुः स्वकान्तस्य विप्रयोगं वियोगं न क्षमते सा विप्रयोगाक्षमा । एवंभूता सती वक्त्रेन्दोर्मुखचन्द्रस्यान्तराले मध्ये कृतवसतिर्नक्षत्रराजिरिवालमाभाति ॥

ब्रह्मन्ब्रह्मण्यजिह्मां मतिमपि कुरुषे देव संभावये त्वां
शंभो शक्र त्रिलोकीमवसि किममरैर्नारदाद्याः सुखं वः ।
इत्थं सेवावनम्रं सुरमुनिनिकरं वीक्ष्य विष्णोः प्रसन्न-
स्यास्येन्दोरास्रवन्ती वरवचनसुधा ह्लादयेन्मानसं नः ॥ ३७ ॥

विष्णोरास्येन्दोर्मुखचन्द्रादास्रवन्ती सम्यङ्निःसरन्ती वरा श्रेष्ठा वचनसुधा वचनामृतं नोऽस्माकं मानसं ह्लादयेत् सुखयतु । 'आह्लादयेत्' इति वा छेदः । किंलक्षणस्य । सेवावनम्रं सुरमुनिनिकरं वीक्ष्य प्रसन्नस्य । अनुग्रहेच्छोरित्यर्थः । का वचनसुधा । हे ब्रह्मन्प्रजापते, ब्रह्मणि स्वस्वरूपेऽजिह्मामकुटिलां तादात्म्यलक्षणां मतिमपि कुरुषे । हे देव शंभो, त्वां संभावये । कुशलं पृच्छामीत्यर्थः । हे शक्र, अमरैः सह त्रिलोकीमवसि किम् । सम्यक्पालयसीत्यर्थः । हे नारदाद्या मुनयः, वो युष्माकं किं सुखं वर्तते ॥

कर्णस्थस्वर्णकम्रोज्ज्वलमकरमहाकुण्डलप्रोतदीप्य-
न्माणिक्यश्रीप्रतानैः परिमिलितमलिश्यामलं कोमलं यत् ।
प्रोद्यत्सूर्यांशुराजन्मरकतमुकुराकारचोरं मुरारे-
र्गाढामागामिनीं नो गमयतु विपदं गण्डयोर्मण्डलं तत् ॥ ३८ ॥

मुरारेर्नारायणस्य तद्गण्डयोः कपोलयोर्मण्डलं नोऽस्माकं गाढां दृढामनेकानर्थकरीमागामिनीं भाविनीं विपदं गमयतु दूरीकरोतु । 'दमयतु' इति वा पाठः । किंलक्षणम् । प्रोद्यन्प्रादुर्भवन्यः सूर्यस्तस्यांशुवद्राजद्दीप्यमानं यन्मरकतरत्नं तन्निर्मितो मुकुरो दर्पणस्तस्य य आकारस्तस्य चोरम् । तत्सदृशमित्यर्थः । कोमलम् । अलिवच्छ्यामलम् । तथा कर्णस्थयोः स्वर्णमययोः कम्रयोः कमनीययोरुज्ज्वलयोर्मकराकारयोर्महाकुण्डलयोः प्रोतानां दीप्यतां माणिक्यानां श्रीप्रतानैः परिमिलितं परितो व्याप्तम् ॥

वक्त्राम्भोजे लसन्तं मुहुरधरमणिं पक्वबिम्बाभिरामं
दृष्ट्वा दष्टुं शुकस्य स्फुटमवतरतस्तुण्डदण्डायते यः ।
घोणः शोणीकृतात्मा श्रवणयुगलसत्कुण्डलोस्रैर्मुरारेः
प्राणाख्यस्यानिलस्य प्रसरणसरणिः प्राणदानाय नः स्तात् ॥ ३९ ॥

मुरारेर्घोणो नासिकादण्डो नोऽस्माकं प्राणदानाय जीवनं दातुं स्ताद्भूयात् । कथंभूतः । श्रवणयुगे लसतोः कुण्डलयोरुस्रैः किरणैः शोणीकृतात्मा । प्राणाख्यस्यानिलस्य प्राणवायोः प्रसरणसरणिः । संचारमार्ग इत्यर्थः । यो वक्त्राम्भोजे लसन्तं पक्वबिम्बफलव-

दभिराममारक्तमधरमणिं मुहुर्दृष्ट्वा पुनःपुनरवलोक्य दष्टुं खादितुमवतरतः शुकस्य कीरस्य स्फुटं यथा स्यात्तथा तुण्डदण्डायते चञ्चुदण्डवदाचरंस्तिष्ठति ॥

दिक्कालौ वेदयन्तौ जगति मुहुरिमौ संचरन्तौ रवीन्दू
त्रैलोक्यालोकदीपावभिदधति ययोरेव रूपं मुनीन्द्राः ।
अस्मानब्जप्रभे ते प्रचुरतरकृपानिर्भरं प्रेक्षमाणे
पातामाताम्रशुक्लासितरुचिरुचिरे पद्मनेत्रस्य नेत्रे ॥ ४० ॥

पद्मनेत्रस्य पुण्डरीकाक्षस्य नेत्रे अस्मान्पातां रक्षताम् । किंलक्षणे । अब्जप्रभे । तथा प्रचुरतरा या कृपा तया निर्भरं परिपूर्णं यथा स्यात्तथा प्रेक्षमाणे । भक्तानिति शेषः । तथाताम्रेषद्रक्ता शुक्ला सिता च या रुचिः कान्तिस्तया रुचिरे । ते के । मुनीन्द्रा ययोरेव रूपमिमौ प्रसिद्धौ रवीन्दू अभिदधति वदन्ति । किंलक्षणौ रवीन्दू । जगति दिक्प्राच्यादिका, कालो मुहूर्तादिः । तौ वेदयन्तौ प्रकाशयन्तौ । अत एव त्रैलोक्यालोकदीपौ । तथा मुहुः प्रत्यहोरात्रं संचरन्तौ भ्रमन्तौ ॥

लक्ष्माकारालकालिस्फुरदलिकशशाङ्कार्धसंदर्शमील-
न्नेत्राम्भोजप्रबोधोत्सुकनिभृततरालीनभृङ्गच्छदाभे ।
लक्ष्मीनाथस्य लक्षीकृतविबुधगणापाङ्गबाणासनार्ध-
च्छाये नो भूतिभूरिप्रसवकुशलते भ्रूलते पालयेताम् ॥ ४१ ॥

लक्ष्मीनाथस्य भ्रूलते नोऽस्मान्पालयेताम् । कथंभूते । लक्ष्माकाराश्चिह्नाकृतयो येऽलकास्तेषामालिस्तया स्फुरद्यदलिकं ललाटं तदेव शशाङ्कार्धं तस्य संदर्शनेन मीलन्ती ये नेत्राम्भोजे तयोः प्रबोधे विकासननिमित्तमुत्सुकस्तथा निभृततरमालीनो यो भृङ्गस्तस्य छदौ पक्षौ तद्वदाभा ययोः । तथा लक्षीकृतो विबुधगणो यैस्तेषामपाङ्गबाणानां यदसनं धनुस्तस्यार्धच्छाये । धनुरर्धभागसदृश इत्यर्थः । तथा भूतीनामैश्वर्याणां यो भूरिप्रसवोऽधिकोद्भूतिस्तत्र कुशलता सामर्थ्यं ययोः । भक्तानां सर्वाभीष्टप्रद इत्यर्थः ॥

पातात्पातालपातात्पतगपतिगतेर्भ्रूयुगं भुग्नमध्यं
येनेषच्चालितेन स्वपदनियमिताः सासुरा देवसंघाः ।
नृत्यल्लालाटरङ्गे रजनिकरतनोरर्धखण्डावदाते
कालव्यालद्वयं वा विलसति समया बालिकामातरं नः ॥ ४२ ॥

पतगपतिर्गरुडस्तेन गतिर्गमनं यस्य तस्य भगवतो भ्रूयुगं नोऽस्मान्पातालपातान्नरकपतनात्पाताद्रक्षतात् । कीदृशम् । भुग्नमध्यम् । येनेषच्चालितेन सासुरा देवसंघाः स्वपदे स्वस्वस्थाने व्यापारे च नियमिता वर्तन्ते । उत्प्रेक्षते—ललाटमेव लालाटं तदेव रङ्गो नृत्यस्थानं तस्मिन्बालिकामातरं समया नृत्यत्कालव्यालद्वयं वा । वाशब्द इवार्थः । समया-

शब्दो नैकथ्यवाची । वालिकाशब्दः शङ्खास्थ्नोरुपरिभ्रूलतापुच्छदेशवाचकः कपोलप्रान्तगताग्रकुन्तलपुञ्जविशेषवाचको वा । सा वालिकासर्पमातृत्वेनोत्प्रेक्षिता । किंभूते लालाटरङ्गे । रजनिकरतनोश्चन्द्रमण्डलस्यार्धखण्डवदर्धभागवदवदाते निर्मले ॥

रूक्षस्मारेक्षुचापच्युतशरनिकरक्षीणलक्ष्मीकटाक्ष-
प्रोत्फुल्लत्पद्ममालाविलसितमहितस्फाटिकेशानलिङ्गम् ।
भूयाद्भूयो विभूत्यै मम भुवनपतेर्भ्रूलताद्वन्द्वमध्या-
दुत्थं तत्पुण्ड्रमूर्ध्वं जनिमरणतमःखण्डनं मण्डनं च ॥ ४३ ॥

भुवनपतेर्भगवतस्तदूर्ध्वं पुण्ड्रं तिलकं मम भूयो विभूत्या अधिकैश्वर्याय भूयात् । किंलक्षणम् । जनिमरणतमःखण्डनम् । जन्ममरणकारणाज्ञानरूपतमोनाशकमित्यर्थः । भ्रूलताद्वन्द्वमध्यादुत्थं स्वयमेवोद्भूतं स्फाटिकेशानलिङ्गं स्फटिकमणिमयशिवलिङ्गमिव । रूक्षः क्रूरो यः स्मारेक्षुचापात्कामसंबन्धीक्षुकोदण्डाच्च्युतः शरनिकरस्तेन क्षीणं कृशमेवंविधं तत् लक्ष्मीकटाक्षेत्यादि चेति कर्मधारयः । लक्ष्मीकटाक्षा एव प्रोत्फुल्लद्विकसत्पद्मानां माला तया विलसितमुज्जृम्भितं महितं महत्त्वं यस्य तच्च तत्स्फटिकेशानलिङ्गं च ॥

पीठीभूतालकान्ते कृतमुकुटमहादेवलिङ्गप्रतिष्ठे
लालाटे नाट्यरङ्गे विकटतरतटे कैटभारेश्चिराय ।
प्रोद्घाट्यैवात्मतन्द्रीप्रकटपटकुटीं प्रस्फुरन्तीं स्फुटाङ्गं
पट्वीयं भावनाख्यां चटुलमति नटी नाटिकां नाटयेन्नः ॥ ४४ ॥

कैटभारेर्भगवतो ललाटमेव लालाटं तस्मिन्नाट्यरङ्गे नोऽस्माकमियं स्वभावसिद्धा चटुला चपला मतिरेव नटी नर्तकी भावनाख्यां भावनानाम्नीं नाटिकां स्वकन्यां चिराय दीर्घकालं नाटयेन्नर्तयेत् । अस्मन्मतिर्भगवल्ललाटे ध्यानात्मिकां वृत्तिं नैरन्तर्येण प्रवर्तयेदित्यर्थः । किंलक्षणा । पट्वी चतुरा । किं कृत्वा । आत्मतन्द्री स्वालस्यं तद्रूपां प्रकटपटकुटीं प्रसिद्धावरणपटं प्रोद्घाट्य । आलस्यरूपनिविडतिरस्करिणीमपसार्येत्यर्थः । किंलक्षणां नाटिकाम् । स्फुटाङ्गं प्रस्फुरन्तीम् । कथंभूते नाट्यरङ्गे । पीठीभूतः पीठतां गतो योऽलकान्तः केशोद्गमप्रान्तदेशो ललाटोपरिरेखा तत्र कृता मुकुटलक्षणमहादेवलिङ्गस्य प्रतिष्ठा यस्मिन् । तथा विकटतरतटेऽतिशयेन विशालतटे ॥

मालालीवालिधाम्नः कुवलयकलिता श्रीपतेः कुन्तलाली
कालिन्द्यारुह्य मूर्ध्नो गलति हरशिरःस्वर्धुनीस्पर्धया नु ।
राहुर्वा याति वक्त्रं सकलशशिकलाभ्रान्तिलोलान्तरात्मा
लोकैरालोच्यते या प्रदिशतु सकलैः साखिलं मङ्गलं नः ॥ ४५ ॥

अलिवच्छ्यामलं धाम तेजो यस्य तस्य श्रीपतेः सा कुन्तलाली नोऽस्माकमखिलं मङ्गलं प्रदिशतु । या सकलैर्लोकैः कुवलयकलिता नीलोत्पलरचिता मालाली मालापरंपरेव । अथवा कालिन्दी यमुना हरशिरःस्वर्धुनीसर्धया महादेवमस्तकस्थगङ्गेर्ष्यया भगवन्मूर्धानमारुह्य ततो गलति नु । यद्वा सकला चासौ शशिकला शशिप्रकाशस्तदाकारभ्रान्तियुक्तश्चासौ लोलश्चपलोऽन्तरात्मा मनो यस्यैतादृशो राहुर्वेत्यालोच्यत उत्प्रेक्ष्यते ॥

सुप्ताकाराः प्रसुप्ते भगवति विबुधैरप्यदृष्टस्वरूपा
व्याप्तव्योमान्तरालास्तरलरुचिजलारञ्जिताः स्पष्टभासः ।
देहच्छायोद्गमाभा रिपुवपुरगुरुप्लोषरोषाग्निधूम्याः
केशाः केशिद्विषो नो विदधतु विपुलक्लेशपाशप्रणाशम् ॥ ४६ ॥

केशिद्विषः केशिनामकासुरहन्तुर्भगवतः केशा नोऽस्माकं विपुला वहुला ये क्लेशा अविद्यास्मितारागद्वेषाभिनिवेशास्त एव पाशास्तेषां प्रकर्षेण नाशं विदधतु । किंलक्षणाः । भगवति प्रसुप्ते सुप्ताकाराः सुप्तस्य भगवत आकार इवाकारो येषां ते । अत एव विबुधैरपि न दृष्टं स्वरूपं येषां ते तथाविधाः । तथा व्याप्तं व्योमान्तरालं ब्रह्माण्डोदरं यैः । तथा तरलानि चपलानि रुचिमन्त्युज्ज्वलानि च जलानि क्षीरसागरनीराणि तैरासमन्ताद्रञ्जिताः । स्पष्टभासः । देहस्य श्रीमन्मूर्तेश्छाया कान्तिस्तस्या उद्गम उपरिप्रचारस्तद्वदाभान्ति ते । रिपूणां वपूंष्येवागुरुस्तस्य प्लोषो दाहस्तस्मिन्रोषरूपो योऽग्निस्तस्य धूम्या धूमसमूह इव । एतैर्विशेषणैः केशानां मेघसाम्यं ध्वनितम् । 'यस्य केशेषु जीमूताः' इति पुराणप्रसिद्ध्या ॥

यत्र प्रत्युप्तरत्नप्रवरपरिलसद्भूरिरोचिःप्रतान-
स्फूर्त्या मूर्तिर्मुरारेर्द्युमणिशतचितव्योमवद्दुर्निरीक्ष्या ।
कुर्वत्पारेपयोधि ज्वलदकृतमहाभास्वदौर्वाग्निशङ्कां
शश्वन्नः शर्म दिश्यात्कलिकलुषतमःपाटनं तत्किरीटम् ॥ ४७ ॥

तन्मुरारेः किरीटं नोऽस्माकं शश्वच्छर्म दिश्यात् । कथंभूतम् । कलिकलुषतमःपाटनम् । पारेपयोधि समुद्रमध्ये ज्वलन्नकृत्रिमो महान्प्रौढो भास्वान्प्रकाशवहुलश्च य और्वाग्निर्वाडवानलस्तस्य शङ्कां कुर्वत् । यत्र किरीटे प्रत्युप्तानां खचितानां रत्नप्रवराणां परितो लसद्भूर्यधिकं यद्रोचिस्तस्य प्रतानो विस्तारस्तस्य स्फूर्त्या स्फुरणेन मुरारेर्मूर्तिर्द्युमणिशतचितव्योमवद्युगपदुदितानेकसूर्यव्याप्ताकाशवद्दुर्निरीक्ष्या दुष्प्रेक्ष्या तत् ॥

भ्रान्त्वा भ्रान्त्वा यदन्तस्त्रिभुवनगुरुरप्यब्दकोटीरनेका
गन्तुं नान्तं समर्थो भ्रमर इव पुनर्नाभिनालीकनालात् ।

उन्मज्जन्नूर्जितश्रीस्त्रिभुवनमपरं निर्ममे तत्सदृक्षं
देहाम्भोधिः स देयान्निरवधिरमृतं दैत्यविद्वेषिणो नः ॥ ४८ ॥

दैत्यविद्वेषिणो नारायणस्य स देहाम्भोधिर्नोऽस्मभ्यममृतं कैवल्यं देयात् । त्रिभुवनगुरुस्त्रैलोक्यपिता ब्रह्मापि यदन्तर्मध्येऽनेका असंख्याता अब्दकोटीः । अनेककोटिसंवत्सरपर्यन्तमित्यर्थः । भ्रान्त्वा भ्रान्त्वा बहुशो विभ्रम्यान्तमवसानं गन्तुं प्राप्तुं न समर्थोऽभूदित्यध्याहारः । पुनरन्तप्राप्त्याशाविच्छेदानन्तरं नाभिनालीकनालाद्भ्रमर इवोन्मज्जन्नपरं त्रिभुवनं तत्सदृक्षं निर्ममे । किंलक्षणः । ऊर्जितश्रीः । कथंभूतो देहाम्भोधिः । निरवधिः ॥

मत्स्यः कूर्मो वराहो नरहरिणपतिर्वामनो जामदग्न्यः
काकुत्स्थः कंसघाती मनसिजविजयी यश्च कल्की भविष्यन् ।
विष्णोरंशावतारा भुवनहितकरा धर्मसंस्थापनार्थाः
पायासुर्मां त एते गुरुतरकरुणाभारखिन्नाशया ये ॥ ४९ ॥

हरिणपतिः सिंहः । नरश्चासौ हरिणपतिश्चेति विग्रहान्नरसिंहः । कंसघाती कृष्णः । मनसिजविजयी मारजितपस्विवेषो भगवान्बुद्धः । भविष्यन्कलियुगान्ते । अन्यत्स्फुटम् । विष्णोरेतेंऽशावताराः । भुवनहितकराः । यतो धर्मसंस्थापनार्थाः । तथा गुरुतरेण करुणाभारेण खिन्नः खेदं प्राप्तः । परवशीकृत इत्यर्थः । आशयोऽन्तःकरणं येषां ते मां भक्तं पायासुः ॥

यस्माद्वाचो निवृत्ताः सममपि मनसा लक्षणामीक्षमाणाः
स्वार्थालाभात्परार्थव्यपगमकथनश्लाघिनो वेदवादाः ।
नित्यानन्दं स्वसंविन्निरवधिममृतं स्वान्तसंक्रान्तबिम्ब-
च्छायापत्त्यापि नित्यं सुखयति यमिनो यत्तदव्यान्महो नः ॥५०॥

तन्महस्तेजो नोऽस्मान्सदाव्यात् । यस्मान्मनसा समं वाचोऽपि निवृत्ताः । तदिदमेवेति बोधयितुमसमर्थाः । किंलक्षणाः । लक्षणा मुख्यवृत्तेर्वृत्त्यन्तरं तामीक्षमाणा आकाङ्क्षमाणाः । कस्मात् । वेदलक्षणवादाः स्वार्थस्य शक्तिविषयस्यार्थस्यालाभात्परे च तेऽर्थास्तेषां व्यपगमो निरसनं तत्कथनेन श्लाघा येषां ते । किंलक्षणं महः । नित्यानन्दम् । स्वसंवित्स्वयं प्रकाशकम् । तथा निरवधिं निरवधिकम् । ककारोऽत्र लुप्तो द्रष्टव्यः । अमृतमपरिणामि । कूटस्थमित्यर्थः । अपि च यन्महः स्वान्तमन्तःकरणं तत्र संक्रान्ता बिम्बच्छाया बिम्बाकृतिस्तदापत्त्यापि तावन्मात्रप्राप्त्यापि यमिनो यतीन्नित्यं सुखयत्यानन्दयति ॥

आ पादादा च शीर्ष्णो वपुरिदमनघं वैष्णवं यः स्वचित्ते
धत्ते नित्यं निरस्ताखिलकलिकलुषे संततान्तःप्रमोदः ।

जुह्वज्जिह्वाकृशानौ हरिचरितहविः स्तोत्रमन्त्रानुपाठै-
स्तत्पादाम्भोरुहाभ्यां सततमपि नमस्कुर्महे निर्मलाभ्याम् ॥ ५१ ॥

आ पादात्पादमारभ्य, आ च शीर्ष्णः शिरःपर्यन्तमिदं पूर्ववर्णितं वैष्णवं वपुर्विष्णुस्वरूपं ये निरस्ताखिलकलिकलुषे स्वचित्ते संततान्तःप्रमोद आनन्दभरितान्तःकरणः सन् नित्यं धत्ते निर्मलाभ्यां तत्पादाम्भोरुहाभ्यामपि वयं नमस्कुर्महे । किं कुर्वन् । स्तोत्रमन्त्रानुपाठैर्जिह्वाकृशानौ जिह्वारूपेऽग्नौ हरिचरितहविः सततं जुह्वत् । हरिचरितानि तत्स्तोत्राणि च सदा पठन्नित्यर्थः ॥

इति भगवत्पादश्रीशंकराचार्यकृतं विष्णुपादादिकेशान्तवर्णनस्तोत्रं सटिप्पणं समाप्तम् ।

---

## श्रीगुमानिकविप्रणीतम्

## उपदेशशतकम् ।

त्रिषु[1] देवेषु महान्तं भृगुर्बुभुत्सुः परीक्ष्य हरिमेकम् ।
मेनेऽधिकं महिम्ना सेव्यः सर्वोत्तमो विष्णुः ॥ १ ॥

रुक्माङ्गदः स्वपुत्रं निहत्य खड्गेन मोहिनीवचसा ।
सत्यां ररक्ष वाचं न संकटेऽपि त्यजेद्धर्मम् ॥ २ ॥

निर्वासितो हितेप्सुर्विभीषणो रावणेन लङ्कायाः ।
तन्नाशहेतुरासीन्नहि निजबन्धुर्विरोद्धव्यः ॥ ३ ॥

हृतराज्यदर्पसारं सुयोधनं निग्रहीतुमपि शक्ताः ।
प्रोषुर्वनेषु पार्था धीरः समयं प्रतीक्षेत ॥ ४ ॥

मणिहेतोरभिशप्तः कृष्णः सत्राजिताथ जाम्बवतः ।
जित्वा ददौ तमस्मै जनापवादाद्भजेद्भीतिम् ॥ ५ ॥

स्वाराज्यमश्नुवानः प्रकोप्य नहुषो मुनीनहिर्भूत्वा ।
न्यपतत्त्वरितमधस्तात्प्राप्तैश्वर्यो न दृप्तः स्यात् ॥ ६ ॥

सहधर्मिणीं[3] वनान्ताद्दशरथसूनोर्जहार दशवक्त्रः ।
बन्धनमाप समुद्रो न दुर्जनस्यान्तिके निवसेत् ॥ ७ ॥

---

१. एतच्छतकोदाहरणकथास्तु प्रायः श्रीमद्भागवते हरिवंशे च वर्तन्ते. २. इयं भृगुकथा श्रीमद्भागवते दशमस्कन्धे नवाशीतितमितेऽध्याये द्रष्टव्या. ३. 'खलः करोति दुर्वृत्तं नूनं फलति साधुषु । दशाननोऽहरत्सीतां बन्धनं च महोदधेः ॥' इति प्राचीनः श्लोकः.

हन्तुं देवकतनयां वसुदेवेनोद्यतायुधः कंसः ।
मधुरोक्तिभिरनुनीतः साम्ना मूर्खं वशे कुर्यात् ॥ ८ ॥
भ्रातर्महदतिचारो न युक्त इति वादिनं दशग्रीवः ।
धनदं बबन्ध युद्धे मूढमतिर्नोपदेष्टव्यः ॥ ९ ॥
विश्रब्धश्चटुवचनैः कैकेय्यै दशरथो वरं दत्त्वा ।
संकटमाप दुरन्तं स्त्रीषु न कुर्वीत विश्वासम् ॥ १० ॥
गर्वाद्योद्धुमुपेतः पौलस्त्यः सपदि कार्तवीर्येण ।
क्रीडामृग इव बद्धो न बलोद्रिक्तेन योद्धव्यम् ॥ ११ ॥
संदीपिताग्रपुच्छो बद्धतनुस्ताडितोऽपि रक्षोभिः ।
लङ्कां मारुतिरदहद्विपदि विजह्यान्न शूरत्वम् ॥ १२ ॥
रुक्मी छलेन दीव्यन्बलं[1] विजित्याथ परिहसन्नुच्चैः ।
द्राग्वधमाप सभायां नोपहसेन्निर्जितं द्यूते ॥ १३ ॥
शकुनिसुयोधनकर्णैर्जितोऽक्षधूर्तैर्युधिष्ठिरो द्यूते ।
निर्वासितः स्वराष्ट्रात्कितवैः सह नाचरेद्द्यूतम् ॥ १४ ॥
मखरक्षणाय पुत्रं विश्वामित्राय दशरथोऽर्थयते ।
प्रायच्छदृतशङ्कं दुस्त्यजमप्यर्थिने देयम् ॥ १५ ॥
त्यज पार्थैः सह रणमिति विदुरेणोक्तोऽम्बिकासुतः[2] सततम् ।
तदमत्वा क्षयमापत्कर्तव्यं भाषितं सुहृदाम् ॥ १६ ॥
शिशुपालः क्रतुकाले हरिमर्हं गर्हयन्ननर्होक्त्या ।
तत्क्षणमियाय नाशं न महान्तं क्वापि गर्हेत ॥ १७ ॥
अन्यद्विजाय मोहान्नृगो[3] वदान्यो द्विजस्य गां दत्त्वा ।
सद्योऽभूत्कृकलासो ब्रह्मस्वं दूरतो विसृजेत् ॥ १८ ॥
सुग्रीवो रघुपतिना हृतदारेणोपगम्य हृतदारः ।
दृढमाबबन्ध सख्यं समानदुःखः सखा कार्यः ॥ १९ ॥

---

१. बलदेवम्. २. धृतराष्ट्रः. ३. नृगोपाख्यानं महाभारतेऽनुशासनपर्वणि सप्तति-मितेऽध्याये द्रष्टव्यम्.

वीरो वैतनिकः सन्विराटनगरोषितः कुमारीणाम् ।
नर्तयितार्जुन आसीद्भजेदवस्थोचितां वृत्तिम् ॥ २० ॥
दुष्यन्तः स्ववधूमपि कण्वानीतां शकुन्तलां ससुताम् ।
सुचिरं विमृश्य भेजे कार्यं सहसा न विदधीत ॥ २१ ॥
जमदग्निना नियुक्तः सद्यो निजघान मातरं रामः ।
निर्दोषः पुनरासीद्गुरूक्तमविचारितं कुर्यात् ॥ २२ ॥
शतयोजनततमब्धिं विलङ्घ्य वातात्मजोऽविशल्लङ्काम् ।
वीराग्रतःसरोऽभूद्यशोऽर्जयन्साहसं कुर्यात् ॥ २३ ॥
प्रहितः सुरैर्जिगीषुर्हरं प्रहर्तुं स्मरोऽभ्ययाद्यावत् ।
भस्मीबभूव तावन्न चिकीर्षेद्दुष्करं कर्म ॥ २४ ॥
संकुच्य पादघातैः कालिन्द्यां कालियं[1] कृतागस्कम् ।
निरयापयन्मुकुन्दो दुष्टे दण्डः प्रयोक्तव्यः ॥ २५ ॥
कुलिशाहतिहृतशिरसेऽप्यदात्कबन्धाय[2] जीवते शक्रः ।
अशनायोरसि वदनं दीनो रिपुरप्यनुग्राह्यः ॥ २६ ॥
सुग्रीवाय शुकः[3] स्वादृशमुखसंदेशमादिशन्कपिभिः ।
संताड्य सपदि बद्धो न दूतभावं भजेदसतः ॥ २७ ॥
अश्वत्थामा हत इति युधि गिरमनृतां युधिष्ठिरोऽवादीत् ।
पुनरनुतापमवापत्पापं कृत्वानुतप्येत ॥ २८ ॥
भोगान्बहून्ययातिर्भुक्त्वा वयसा सुतस्य चिरकालम् ।
निर्विद्यता[4]वितृप्तः कामं मन्येत दुष्पूरम् ॥ २९ ॥
बलिरिन्द्रजित्त्रिलोक्यां भुञ्जन्भोगांश्चिराद्विनष्टश्रीः ।
सुतलेऽबध्यत पाशैर्भोगान्क्षणभङ्गुरान्विद्यात् ॥ ३० ॥
विलपन्तं हतपुत्रं धृतराष्ट्रं वीक्ष्य करुणया कृष्णः ।
क्षणमनुशुशोच सास्रं दुःखितमनु दुःखितो भूयात् ॥ ३१ ॥

---

१. एतन्नामकं सर्पम्. २. कबन्धकथा वाल्मीकिरामायणेऽरण्यकाण्डे द्रष्टव्या.
३. सारणसहचरो रावणदूतः. ४. निर्वेदं प्राप.

निःक्षत्रियां न चक्रे यावद्रामो भुवं रुषा तावत् ।
आसीद्रणैकतानो विरमेदसमाप्य नारब्धम् ॥ ३२ ॥
दुहिता विदेहभर्तुर्दाशरथेर्भामिनी सीता ।
वधमाप राक्षसीनां विधेर्विचित्रा गतिर्बोध्या ॥ ३३ ॥
निगमागमैकवेत्ता द्रोणस्तस्वा तपोऽर्थमन्विच्छन् ।
धानुष्कवृत्तिरासीद्धर्मं चार्थं च सेवेत ॥ ३४ ॥
अधिशंभुमौलि निवसन्नेककलात्मा यथार्च्यते चन्द्रः ।
न तथा स पूर्णबिम्बः श्रयेन्महान्तं महत्त्वाय ॥ ३५ ॥
शरतल्पमधिशयानाद्भीष्मादाकर्ण्य धर्मजो धर्मान् ।
दुःखं जहौ दुरन्तं प्रष्टव्याः सत्पथं वृद्धाः ॥ ३६ ॥
कर्णेन घातयित्वा घटोत्कचं शक्रशक्तिनिर्मोक्षात् ।
जीवितमरक्षि पार्थैः स्वात्मानं सर्वतो रक्षेत् ॥ ३७ ॥
पृथुकोपहारपाणिर्हरिं सखायं प्रपद्य दीनात्मा ।
श्रीमानभूत्सुदामा श्रयेत सन्मित्रमापत्सु ॥ ३८ ॥
दृष्ट्वा हरिः समक्षं बाणत्राणाय [1]कोटवीं नग्नाम् ।
समरे पराङ्मुखोऽभूत्स्त्रियं विवस्त्रां न वीक्षेत ॥ ३९ ॥
अदिशल्लक्ष्मणहेतोर्मारुतिमानेतुमोषधीं रामः ।
तामानयत्स दूराद्धुर्यः कार्ये नियोक्तव्यः ॥ ४० ॥
आराध्य कैतवज्ञो रौद्रं रुद्राद्[2]वृको वरं लब्ध्वा ।
गौरीमियेष हर्तुं न विनीतं विश्वसेद्धूर्तम् ॥ ४१ ॥
दशकण्ठरक्षितायां लङ्कायां रक्षसामभूद्वसताम् ।
गृहवित्तबन्धुनाशो वसेन्न राष्ट्रे कुभूपाले ॥ ४२ ॥
शश्वाँ[3]म्बरीषमार्यं दुर्वासाः कोपनो निरागस्कम् ।
चक्रेण तापितोऽभून्न विदध्यात्क्रोधमस्थाने ॥ ४३ ॥

---

१ कोटवी नग्ना स्त्री. तत्कथा हरिवंशे बाणासुरयुद्धे प्रसिद्धा. २. शकुनिसूनुर्वृको नाम कश्चिदसुरः. तत्कथा श्रीमद्भागवते दशमस्कन्धेऽष्टाशीतितमेऽध्याये द्रष्टव्या. ३. भागवतादिप्रसिद्धं विष्णुभक्तं कंचिद्राजविशेषम्.

मखशिखिनि हूयमानं तक्षकमवितुं प्रपन्नमसमर्थः ।
अजहान्न तु पुरुहूतः शरणमुपेतो न हातव्यः ॥ ४४ ॥
हत्वा स्वसुस्तनूजान्सद्यो जातान्बहून्खलः कंसः ।
उत्सन्नः सहसाभून्न कुत्सितं कर्म कुर्वीत ॥ ४५ ॥
सीतां विसृज्य रामः साकं मुनिभिर्मुनिव्रतो राज्यम् ।
शासन्नुवास पुर्यां नेयः सद्भिः समं समयः ॥ ४६ ॥
कृष्णधनंजयभीमान्द्विजवेषस्थाञ्जरासुतश्चिह्नैः ।
क्षात्रैः क्षिप्रमजानादाकारैरिङ्गितं विद्यात् ॥ ४७ ॥
यां यां दिशं गतोऽभूद्धिरण्यकशिपुर्यदृच्छया विचरन् ।
तां तां सुराः प्रणेमुर्दुष्टजनं दूरतः प्रणमेत् ॥ ४८ ॥
कुर्वन्नपि मुनिशप्तः स्वजीवितार्थी परीक्षितो यत्नम् ।
दष्टोऽहिना विनष्टो ज्ञेयो मृत्युः सुदुर्वारः ॥ ४९ ॥
सदिति प्रतीयमानं जगन्मृषैवेति केवलं बुद्ध्वा ।
जनको विमुक्तिमागात्स्वप्नवदन्तर्जगद्बोध्यम् ॥ ५० ॥
विहरन्वधूभिरन्तःपुरेऽग्निवर्णो दिवानिशं कामी ।
ग्रस्तोऽथ यक्ष्मणाभूद्विषयान्विषभीषणान्विद्यात् ॥ ५१ ॥
विप्रः पतिर्वृषल्या हिंस्रोऽप्यभिवादनान्महर्षीणाम् ।
वाल्मीकिर्मुनिरासीत्पुरुषानभिवादयेन्महतः ॥ ५२ ॥
निशि कामयन्दुरात्मा द्रुपदसुतां कीचको रहः प्राप्ताम् ।
वधमाप भीमसेनात्परस्त्रियं नाभिकाङ्क्षेत ॥ ५३ ॥
युधि कुरवः कृतवैरा वीरं व्यूहं विशन्तमभिमन्युम् ।
बहवो निजघ्नुरेवं नैको रिपुमण्डलं प्रविशेत् ॥ ५४ ॥
पुष्करनिर्जितराज्यः पुरमृतुपर्णस्य नैषधो गत्वा ।
सारथिरभून्निगूढो दुरवस्थो न प्रकाशः स्यात् ॥ ५५ ॥

---

१. 'स संचरिष्णुर्भुवनान्तराणि याम्' (१।४६) इत्यादि शिशुपालवधश्लोकानुसारिणीयमार्या. २. अग्निवर्णकथा रघुवंशस्यैकोनविंशे सर्गे प्रसिद्धैव. ३. लोकप्रसिद्धैवेयं कथा. रामायणादिषु न प्राप्यते. ४. नलभ्राता. ५. नलः.

क्षात्रं विमृष्य धर्मं मान्यैर्गुरुभिर्द्विजैः समं समरे ।
युयुधेऽर्जुनो धनुष्मान्घोरमपि स्वं चरेद्धर्मम् ॥ ५६ ॥

हरिरम्बुधिमथनोत्थां सुधां सुरेभ्यः सुरां सुरारिभ्यः ।
व्यतरत्समं यथार्हं योग्यं योग्याय दातव्यम् ॥ ५७ ॥

अथ चैकत्वमवाप्ताः सुरां निपीयोद्धता मिथो घ्नन्तः ।
युधि यादवाः प्रणेशुर्धीमान्मद्यं न सेवेत ॥ ५८ ॥

यज्ञोत्सवे स्वपित्रा हठादनाकारिता सती गत्वा ।
तनुमजहात्परिभूता क्वापि न गच्छेदनाहूतः ॥ ५९ ॥

मुचकुन्देन मुकुन्दो यदुभिरवध्यस्य कालयवनस्य ।
छलतोऽचीकरदन्तं वध्योऽरिर्वञ्चयित्वापि ॥ ६० ॥

असकृद्युधि विजितादपि भीतो बार्हद्रथाज्जले दुर्गम् ।
कृत्वा हरिन्र्यवात्सीद्विजितोऽप्याशङ्कनीयोऽरिः ॥ ६१ ॥

तुरगार्थेऽभिसरन्तः प्रकोप्य कपिलं क्षणात्समं सर्वे ।
सगरसुताः क्षयमीयुर्न कोपयेत्तापसं शान्तम् ॥ ६२ ॥

मुनिरपि विश्वामित्रः श्वा भूत्वा गूढमुर्वशीवशगः ।
अन्वव्रजत्स्मरार्तो भेतव्यं दुर्जयात्कामात् ॥ ६३ ॥

बलदर्पितस्त्रिलोक्यां तृणवद्गणयन्दशाननः शूरान् ।
युधि निर्जितः प्लवंगैर्न वहेद्गर्वं बुधो मनसा ॥ ६४ ॥

मातुर्वाक्शरविद्धः पञ्चाब्दो दुष्करं तपस्तप्त्वा ।
ध्रुव उच्चैःपदमभजत्पुंसा व्यवसायिना भाव्यम् ॥ ६५ ॥

नीता रहसि सखीभ्यो बहुमहिता बल्लवी पथि श्रान्ता ।
वह मामिति हरिमूचे न ह्यतिसंमानयेत्प्रमदाम् ॥ ६६ ॥

दधतः स्वलक्ष्म युद्धे मुहुः शृगालस्य जल्पतः परुषम् ।
श्रुत्वा जहास शौरिर्न वाग्विवादं शठैः कुर्यात् ॥ ६७ ॥

---

१. दक्षप्रजापतिना. २. राजविशेषेण. ३ जरासंधात्. ४ द्वारकारूपम्. ५. उत्तानपादसूनुः. ६. राजविशेषस्य.

अकृतागसमपि रामो वालिनमन्तर्हितश्छलेनैव ।
सख्युर्जघान शत्रुं सुहृद्रिपुं भावयेद्रिपुवत् ॥ ६८ ॥
क्रुद्धो हली कुरूणां पुर[1]मुत्थाप्य क्षिपन्नद्याम् ।
अनुनीतस्तदमुञ्चत्क्रोधाविष्टोऽनुनेतव्यः ॥ ६९ ॥
बद्धार्पितं कुमारैर्द्रोणो द्रुपदं कृतापराधमपि ।
व्यसृजद्विसृज्य रोषं क्षमिणा पुरुषेण भवितव्यम् ॥ ७० ॥
दुर्योधने सभायां मानभ्रष्टे जहास यद्भीमः ।
तदभूद्विग्रहवीजं न वैरमुत्पादयेत्स्वस्मात् ॥ ७१ ॥
स्वपितॄन्समुद्दिधीर्षन्प्रापय्य क्ष्मां भगीरथो गङ्गाम् ।
पावितवानितरानपि हितं चरेत्कर्म सर्वेषाम् ॥ ७२ ॥
तारां जहार चन्द्रः स्त्रियं गुरोर्दुह्यतां मिथस्तेन ।
समरोऽभवत्सुराणां बोध्यं वैरैकवीजं स्त्री ॥ ७३ ॥
अधिवेश्म पू[2]जनीया चिरमुषिता ब्रह्मदत्तभूपस्य ।
अन्धं चकार पुत्रं न नीचमावासयेत्स्वगृहे ॥ ७४ ॥
लुब्धो बलाज्जिघृक्षन्कामदुघं कौशिको वसिष्ठस्य ।
न प्राप जातदर्पो हठं न कुर्याद्दुरापेऽर्थे ॥ ७५ ॥
दृप्तं बलेन रोषान्निबध्य वैरं किरीटिना कर्णम् ।
कुरवो व्यधुः सखायं रिपोर्विपक्षः सखा कार्यः ॥ ७६ ॥
द्विषतां वधे सहायं ककुत्स्थमिन्द्रो रणे वृषो भूत्वा ।
अवहद्विहाय लज्जां कार्यार्थी नावहेन्मानम् ॥ ७७ ॥
अपि गौतमो द्विनेत्रं शक्रमहल्यारतं शपन्क्रुद्धः ।
चक्रे सहस्रनेत्रं गुणवान्बोध्यः सतां शापः ॥ ७८ ॥
धनदः पुष्पकमेकं लङ्कापतये युयुत्सवे दत्त्वा ।
अलकामपात्समग्रां बहु रक्षेदल्पदानेन ॥ ७९ ॥

---

१. हस्तिनापुरम्. २. पूजनीया नाम काचिच्चटका. तत्कथा महाभारते शान्तिपर्वण्यापद्धर्मे एकोनचत्वारिंशदधिकशततमेऽध्याये, हरिवंशे च प्रथमपर्वणि विंशेऽध्याये द्रष्टव्या.

तनये विनयिनि वीरे पार्थः कुरुभिर्हतेऽपि सौभद्रे[1] ।
युयुधे विधूय शोकं न गते शोको विधातव्यः ॥ ८० ॥
व्यासाच्छ्रुतं भविष्यद्भीमं जनमेजयः स्वकं वृत्तम् ।
शश्वत्स्मरन्नशोचन्न भाविनं चिन्तयेदर्थम् ॥ ८१ ॥
वैकर्तनमपि कुन्त्याः सुतमपि लोकोऽन्यसेविनं कर्णम् ।
राधेयमेव मेने बुधः स्ववृत्त्यानुवर्तेत ॥ ८२ ॥
हित्वान्यान्हरिदारान्सात्राजित्यै[2] सुरर्षिरर्थज्ञः[3] ।
दिव्यं ददौ प्रसूनं मनोऽनुवृत्तिं प्रभोः कुर्यात् ॥ ८३ ॥
रोहिण्या वशगोऽन्याः स्त्रियः परित्यज्य दक्षशापेन ।
यक्ष्मी बभूव चन्द्रो नैकरतः स्याद्बहुस्त्रीकः ॥ ८४ ॥
तपसा विधूतपापं माण्डव्यं दण्डयन्यमः सद्यः ।
शूद्रत्वमाप शापान्नादण्ड्ये पातयेद्दण्डम् ॥ ८५ ॥
सत्राजितं निशायां निर्भरनिद्राणमेव शतधन्वा ।
अवधीत्स्यमन्तकार्थे नातिशयालुर्भवेद्रात्रौ ॥ ८६ ॥
हतवत्यपि निजतनुजान्गाधिसुते वीर्यवान्विधेः सुनुः[4] ।
प्रतिकर्तुमाप लज्जां कुलानुरूपं वहेच्छीलम् ॥ ८७ ॥
विद्यां कचो बुभुत्सुः शुक्रात्संजीविनीं विनीतात्मा ।
सुरपक्षगोऽपि लेभे विनयात्संसाधयेत्कार्यम् ॥ ८८ ॥
द्रोणे सख इति वादिनि नारथिरथिनोः सखित्वमित्याह ।
द्रुपदो विधूय सख्यं नृपं न मित्रं विजानीयात् ॥ ८९ ॥
अपि शक्तः परिहर्तुं ययातिशापं[5] हरिर्हते कंसे ।
राजासनं न भेजे पुरातनीं पालयेत्संस्थाम् ॥ ९० ॥
विमुखो द्युमद्गदार्तः प्रद्युम्नो धिकृतो रणे हरिणा ।
परिभवमाप महान्तं न भवेद्विमुखो रणाद्धीरः ॥ ९१ ॥

---

१. अभिमन्यौ. २. सत्यभामायै. ३. नारदः. ४. वसिष्ठः. ५. यदुवंशीया राज्यं न प्राप्स्यन्तीत्यादि रूपम्.

एकाग्रतां स्वकर्मणि दत्तात्रेयः प्रशस्य शरकर्तुः।
समशिक्षतात्मयोगं नीचादपि सद्गुणो ग्राह्यः॥ ९२॥
अपि वञ्चयन्विरिञ्चिः कृष्णं वत्सान्सवत्सपान्हृत्वा।
स्वयमेव वञ्चितोऽभून्मायाविषु नाचरेन्मायाम्॥ ९३॥
मृगयारतः प्रसेनो विघटितसेनोऽटवीमटन्नेकः।
केसरिणा विनिजघ्ने नैकाकी संचरेद्विपिनम्॥ ९४॥
शिवलिङ्गान्तमलब्धं लब्धं विधिनेति कामधुक्प्राह।
अथ निन्द्यमाप शापं न विदध्यात्कूटसाक्षित्वम्॥ ९५॥
पुत्रेण सव्यसाची पराजितो बभ्रुवाहनेनाजौ।
तुष्यन्हृदि न ललज्जे पराजयं पुत्रतोऽन्विच्छेत्॥ ९६॥
चिरसंगताय कुन्ती कृष्णाय क्लेशिता कुरुक्षेत्रे।
व्यसनं स्वमाह सर्वं सुहृदे विनिवेदयेद्दुःखम्॥ ९७॥
पाञ्चालीगजराजौ हरिणा दुःशासनावहाराभ्याम्[1]।
त्रातौ क्षणात्प्रपन्नौ हरिं भयार्तः प्रपद्येत॥ ९८॥
दैवाद्वनोपलब्धां ययातिरब्राह्मणोऽपि गतशङ्कम्।
शुक्रसुतामुपयेमे विधिप्रणीते प्रवर्तेत॥ ९९॥
असुरो हितमुपदिष्टः प्रह्लादो नारदेन गर्भस्थः।
तत्त्वविदुषां वरोऽभूद्धितोपदेशं सदा शृणुयात्॥ १००॥
स्फुटमार्याशतगदितान्पृथक्प्रमाणीकृतानुदाहरणैः।
शतमेतानुपदेशान्विभावयन्भावयेत्सिद्धिम्॥ १०१॥
कुतुकाय कोविदानां मूढमतीनां महोपकाराय।
निरमात्कविर्गुमानिः शतोपदेशप्रबन्धममुम्॥ १०२॥

इति श्रीगुमानिकविप्रणीतमुपदेशशतकं समाप्तम्।

---

1. अवहारो ग्राहापरनामा जलजन्तुः.

महाकविश्रीक्षेमेन्द्रकृतं

# सुवृत्ततिलकम् ।

प्रथमो विन्यासः ।

गणपतिगुरोर्वक्रश्चूडाशशाङ्ककलाङ्कुरः
स्फुटफणिफणारत्नच्छायाछटाच्छुरणारुणः ।
गिरिपतिसुतासंसक्तेर्ष्याविलासकचग्रह-
च्युतनखशिखालेखाकान्तस्तनोतु सुखानि वः ॥ १ ॥
स्वच्छन्दलघुरूपाय त्रिजगद्गुरवे नमः ।
स्पष्टवामनवृत्ताय मायावक्राय चक्रिणे ॥ २ ॥
नमश्छन्दोनिधानाय सुवृत्ताचारवेधसे ।
तपःसत्यनिवासाय व्यासायामिततेजसे ॥ ३ ॥
क्षेमेन्द्रेण सुशिष्याणां सरस्वत्याः प्रसाधनम् ।
सुवृत्ततिलकं वर्णरुचिरं क्रियते मुखे ॥ ४ ॥
दृष्ट्वा छन्दांसि सौन्दर्यं विचार्यार्थप्रियः कृतः ।
प्रसिद्धकाव्यकर्मण्यवृत्तानामेष संग्रहः ॥ ५ ॥
दीर्घं संयोगपूर्वं च गुरुसंज्ञा प्रकीर्तिता ।
असंयोगग्रहं ह्रस्वं लघुसंज्ञं प्रकीर्तितम् ॥ ६ ॥
त्रिगुरुः प्राग्गुरुर्मध्यगुरुरन्तगुरुस्तथा ।
त्रिलघुः प्राग्लघुर्मध्यलघुरन्तलघुस्तथा ॥ ७ ॥
मभजाः सनया रेफतकारौ चेति संज्ञिताः ।
ज्ञेयो लघुर्लकारोऽत्र गकारश्च गुरुर्मतः ॥ ८ ॥ (युग्मम्)
क्वचिद्विक्षिप्तसंस्थानैः क्वचिदेकपदस्थितैः ।
संयोगस्थैः क्वचिद्दत्तमुदाहरणमक्षरैः ॥ ९ ॥

---

१. शिवस्य. २. ऽ ऽ ऽ मगणः, ऽ। । भगणः, । ऽ । जगणः, । । ऽ सगणः, । । । नगणः, । ऽ ऽ यगणः, ऽ । ऽ रगणः, ऽ ऽ । तगणः इति गणस्वरूपम्.

पूर्वाक्षरद्वयासक्तविरामेण षडक्षरा ।
तकारेण यकारेण तनुमध्याभिधीयते ॥ १० ॥

यथा मम—

'तेन प्रविभक्ता कामं वयसा सा ।
येन प्रविलासं धत्ते तनुमध्या ॥'

सप्ताक्षरसमायुक्तं जसाभ्यां गुरुणा तथा ।
अविरामं विदुर्वृत्तं कुमारललिताभिधम् ॥ ११ ॥

यथा मम—

'जनं स्मृतिदशाप्तं गतानुगतिकः किम् ।
न शोचति जनोऽयं कुमारललितं[1] तत् ॥'

मकारयुगपर्यन्ते यत्संयुक्तगुरुद्वयम् ।
विद्युन्मालाभिधं तद्धि वृत्तमष्टाक्षरं विदुः ॥ १२ ॥

यथा मम—

'मौनं ध्यानं भूमौ शय्या गुर्वी तस्याः कामावस्था ।
मेघोत्सङ्गे नृत्तासक्ता यस्मिन्काले विद्युन्माला ॥'

लघोर्गुरोश्च विच्छित्त्या यत्रानन्तर्यसंगतिः ।
वृत्तप्रमाणनिपुणैः सा प्रमाणीति कीर्तिता ॥ १३ ॥

यथा मम—

'लघु श्रुतं मदोद्धतं गुरुश्रमाय केवलम् ।
न यत्परोपकारकृद्वृथैव तत्प्रमाण्यपि[2] ॥'

पञ्चमं लघु सर्वेषु सप्तमं द्विचतुर्थयोः ।
गुरु षष्ठं च सर्वेषामेतच्छ्लोकस्य लक्षणम् ॥ १४ ॥
असंख्यो भेदसंसर्गादनुष्टुप्छन्दसां गणः ।
तत्र लक्ष्यानुसारेण श्रव्यतायाः प्रधानता ॥ १५ ॥

---

१. केवलं बालत्वमेवेति भावः.　२. प्रमाणयुक्तमपि.

यथा भगवतो व्यासस्य[1]—

'ततः कुमुदनाथेन कामिनीगण्डपाण्डुना ।
नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलंकृता ॥'

**नवाक्षरापि ननमैरक्षैरुपलक्षिता ।**
**[2]भुजगाग्रा शिशुभृता कथिता वृत्तकोविदैः ॥ १६ ॥**

यथा मम—

'न नमति चरणौ भक्त्या किमिति जडमतिर्लोकः ।
भवभयशमनौ शंभोर्भुजगशिशुभृतावग्रे ॥'

**संयुक्तं भमसैरन्ते गुरुणा च दशाक्षरम् ।**
**वृत्तं रुक्मवती नाम कथितं वृत्तशालिभिः ॥ १७ ॥**

यथा मम—

'भग्नमसत्यैः कायसहस्रैर्मोहमयी गुर्वी भवमाया ।
स्वप्नविलासा योगवियोगा [3]रुक्मवती हा कस्य कृते श्रीः ॥'

**तकाराभ्यां जकारेण युक्तं गुरुयुगेण च ।**
**इन्द्रवज्राभिधं प्राहुर्वृत्तमेकादशाक्षरम् ॥ १८ ॥**

यथा मम—

'तौ जन्मगूढौ चरणेन यस्य कष्टौ निविष्टौ हृदि कामकोपौ ।
तं दुःसहास्ता ज्वलदिन्द्रवज्रपातोपमाः क्लेशदशा विशन्ति ॥'

**जतजैर्गुरुयुग्मेन संसक्तैरुपलक्षितम् ।**
**वदन्त्युपेन्द्रवज्राख्यं वृत्तमेकादशाक्षरम् ॥ १९ ॥**

यथा मम—

'जितो जगत्येष भवभ्रमस्तैर्गुरूदितं ये गिरिशं स्मरन्ति ।
उपास्यमानं कमलासनाद्यै[4]रुपेन्द्रवज्रायुधवारिनाथैः ॥'

---

१. महाभारते द्रोणपर्वणि (१८४।४६). २. भुजगोपपदा शिशुभृता. भुजगशिशुभृतेत्यर्थः. ३. सुवर्णरत्नादियुक्तेति यावत्. ४. उपेन्द्रो विष्णुः, वज्रायुधः शक्रः, वारिनाथो वरुणः, तैः.

पदानन्तरविन्यासयोगैर्बहुभिरेतयोः ।
वैचित्र्यजातिरुचिरा भवन्त्येवोपजातयः ॥ २० ॥

भकारत्रयसंयुक्तमन्ते गुरुयुगान्वितम् ।
कथितं दोधकं नाम वृत्तमेकादशाक्षरम् ॥ २१ ॥

यथा मम—

'भो भवविभ्रमभङ्गुरभोगा गच्छत नास्त्यधुना मम मोहः ।
तिष्ठति चेतसि चन्द्रकलाभृद्भक्तजनाभयदोऽथ कपाली[1] ॥'

पूर्वाक्षरचतुष्कान्तविरतिर्मततान्विता ।
गुरुद्वितययुक्ता च शालिन्येकादशाक्षरा ॥ २२ ॥

यथा मम—

'मत्ता गोष्ठीगर्भमूढप्रलापा प्रौढा गाढालिङ्गिता यौवनेन ।
मध्वाताम्रस्वेदमीलत्कपोला लोला लीलाशालिनी कस्य नेष्टा ॥'

रनरैरन्वितं युक्तं लघुना गुरुणा तथा ।
ख्यातं रथोद्धता नाम वृत्तमेकादशाक्षरम् ॥ २३ ॥

यथा मम—

'रम्यनर्मकलभोगतर्जनी भ्रूलतेव तरलारियोषिताम् ।
वैजयन्त्यभिमुखी रणे रणे भाति ते नरपते रथोद्धता[2] ॥'

गुरुद्वययुतैरन्तेरनभैरुपलक्षिता ।
गदिता स्वागतानाम वृत्तमेकादशाक्षरम् ॥ २४ ॥

यथा मम—

'रत्नभङ्गविमलैर्गुणतुङ्गैरर्थिनामभिमतार्पणसक्तैः ।
स्वागताभिमुखनम्रशिरस्कैर्जीव्यते जगति साधुभिरेव ॥

सकारैरन्वितं वृत्तं चतुर्भिर्युगपत्स्थितैः ।
उदितं तोटकं नाम वृत्तज्ञैर्द्वादशाक्षरम् ॥ २५ ॥

---

१. शिवः. २. रथोपरि स्थितेति भावः.

यथा मम—

'सरसः स्मरसारतरो वयसः समयः स्मृतिशेषदशापतितः ।
गलिताखिलरागरुचिर्विजने परि[1]तोऽट कपालकरः सुमते ॥'

संलक्षितं जतजरैर्द्वादशाक्षरमक्षरैः ।
छन्दोविचक्षणा वृत्तं वंशस्थाख्यं प्रचक्षते ॥ २६ ॥

यथा मम—

'जनस्य तीव्रातपजार्तिवारणा जयन्ति सन्तः सततं समुन्नताः ।
सितातपत्रप्रतिमा विभान्ति ये विशाल[2]वंशस्थतया गुणोचिताः ॥'

अभिव्यक्तं नभभरैरक्षरैर्द्वादशाक्षरम् ।
वदन्ति वृत्तजातिज्ञा वृत्तं द्रुतविलम्बितम् ॥ २७ ॥

यथा मम—

'नभसि भर्गगलच्छविभिर्घनैर्द्रु[3]तविलम्बितगैः परिवारितः ।
सितकरः कलहंस इवाभितस्तरति संवलितो यमुनोर्मिभिः ॥'

[4]समन्वितं मनजरैश्छिन्नं पूर्वाक्षरैस्त्रिभिः ।
त्रयोदशाक्षरं नाम्ना कीर्तयन्ति प्रहर्षिणीम् ॥ २८ ॥

यथा मम—

'मानौजःसुरभिगुणैर्यशःसितानां निर्व्याजा निजभुजविक्रमक्रमाप्ता ।
सर्वाशाप्रणयिजनोपजीव्यमाना भव्यानां भवति प[5]रप्रहर्षिणी श्रीः ॥'

अभिज्ञातं तभजजैरन्तासक्तगुरुद्वयम् ।
चतुर्दशाक्षरं वृत्तं वसन्ततिलकं विदुः ॥ २९ ॥

यथा मम—

'तद्भाजि जन्मसचिवे भगवत्यनङ्गे
प्राप्ते लसत्कुसुममण्डलपाण्डुरेण ।
भृङ्गावलीकुटिलकुन्तलसंनिवेशा
कान्ता वसन्ततिलकेन विभूषिता भूः ॥'

---

१. समन्तात् अट भ्रमणं कुरु. २. वंशः कुलं वेणुदण्डश्च. ३. केचिच्छीघ्रगामिनः, केचिन्मन्थरगामिनस्तैः. ४. अन्ते च गुरुणा युक्तमिति शेषः. ५. अन्येषां सुखप्रदा.

अष्टाक्षरविरामेण युक्ता ननमयैः संयैः[1] ।
वदन्ति मालिनीनाम वृत्तं पञ्चदशाक्षरम् ॥ ३० ॥

यथा मम—

'ननननमयवाणी मेखलाकृष्टिकाले
प्रविचलदिव शीलं नोत्सृजन्ती दुकूलम् ।
तृणलवचलनेऽपि स्वैरिणी शङ्कमाना
दिशि दिशि कृतदृष्टिर्मालिनी[2] कस्य नेष्टा ॥'

नजभैर्जजलैरन्तगुरुभिर्नर्कुटाभिधम् ।
वृत्तं चानष्टविच्छेदं विदुः सप्तदशाक्षरम् ॥ ३१ ॥

यथा मम—

'निजभुजजैर्विशालगुणविक्रमकीर्तिभरैः
प्रविदधता सुधांशुधवलं भवता भुवनम् ।
कथय कथं कृतेयमतिरागवतीं जनता
चरितमपूर्वमेव तव कस्य न नर्कुटकृत्[3] ॥'

जसजैः सयलैर्गेन युताष्टनवसंहृतिः ।
दशसप्ताक्षरा पृथ्वी कथिता वृत्तवेदिभिः ॥ ३२ ॥

यथा मम—

'जवात्स रजसा युतः श्रमविसंस्थुलाङ्गः पथा
व्रजन्सततसेवकः पिशुनधाम वेश्म प्रभोः ।
कदाचिदवलोकनैः फलविवर्जितैर्मन्यते
जडः करसमर्पितामिव मदेन पृथ्वीमिमाम्[4] ॥'

नसमै रसलैर्गेन युक्ता सप्तदशाक्षरा ।
विच्छिन्ना हरिणी षड्भिश्चतुर्भिः सप्तभिस्तथा ॥ ३३ ॥

---

१. यगणेन सहितैरित्यर्थः. २. मालाधारिणी. ३. नर्कुटशब्दोऽत्राश्चर्यवाचक इति भाति. ४. मूर्खः स्वामिदृक्पातमात्रेण वसुधां स्वहस्तगतां मन्यते.

यथा मम—

'न समरसनाः काले भोगाश्चलं घनयौवनं
कुरुत सुकृतं यावन्नेयं तनुः प्रविशीर्यते ।
किमपि कलना कालस्येयं प्रधावति सत्वरा
तरुणहरिणी संत्रस्तेव प्लवप्रविसारिणी ॥'

**यमनैः सभलैर्गेन युक्ता सप्तदशाक्षरा ।**
**षडेकादशविच्छेदवती शिखरिणी मता ॥ ३४ ॥**

यथा मम—

'यथा मन्युर्लीनः स च विभवभग्नः स्मरपद-
स्तथा जाने जाता शमसमयरम्या परिणतिः ।
इदानीं संसारव्यतिकरहरा तीव्रतपसे
विविक्ता युक्ता मे गिरिवरमही सा शिखरिणी ॥'

**चतुःषट्सप्तविरतिर्वृत्तं सप्तदशाक्षरम् ।**
**मन्दाक्रान्ता मभनतैस्तगगैश्चाभिधीयते ॥ ३५ ॥**

यथा मम—

'मध्येभङ्गीवलनविततापाङ्गसंसङ्गभाजः
स्मर्यन्ते ते यदि धृतिमुषः पक्ष्मलाक्षीकटाक्षाः ।
तत्किं मिथ्या नियमनिभृतैः कानने धीयते धी-
र्मन्दाक्रान्ता[1] दशति निशिता पन्नगी पाणिसक्ता ॥'

**मसजैः सततैर्गेन युक्तमेकोनविंशवत् ।**
**शार्दूलक्रीडितं प्राहुश्छिन्नं द्वादशसप्तभिः ॥ ३६ ॥**

यथा मम—

'माद्यत्सज्जसमाततोग्रसुभटोद्भिन्नेभकुम्भस्थल-
श्लिष्यन्मौक्तिकदन्तुरः सरभसोद्वेल्लद्यशःकेसरः ।
जृम्भारम्भभयंकरव्यतिकरत्रस्तैः समुद्वीक्षितः
शत्रूणां त्वदसिः करोति समरे शार्दूलविक्रीडितम् ॥'

---

१. मन्दं यथा स्यात्तथा धृता।

युक्तं मरभनैर्यैश्च त्रिभिः सप्ताक्षरैस्त्रिभिः ।
छेदैश्च स्रग्धरावृत्तमेकविंशाक्षरं विदुः ॥ ३७ ॥

यथा मम—

'सारारम्भानुभावप्रियपरिचयया स्वर्गरङ्गाङ्गनानां
लीलाकर्णावतंसश्रियमतनुगुणश्लेषया संश्रयन्त्या ।
आभाति व्यक्तमुक्ताविचकिललवलीवृन्दकुन्देन्दुकान्त्या
त्वत्कीर्त्या भूषितेयं भुवनपरिवृढ स्रग्धरेव त्रिलोकी ॥'[1]

इति सरलतरत्वात्सर्वकाव्योचितत्वा-
त्सुकविपरिचितत्वात्कीर्णकर्णामृतत्वात् ।
परुषविषममात्रादुर्विरामोज्झितेयं
प्रचुररुचिरवृत्तव्यक्तिरुक्ता हिताय ॥ ३८ ॥

इति श्रीप्रकाशेन्द्रात्मजव्यासदासापरनामश्रीक्षेमेन्द्रविरचिते सुवृत्ततिलके वृत्तावचयो नाम प्रथमो विन्यासः ।

---

द्वितीयो विन्यासः ।

कृते प्रसिद्धवृत्तानां लक्ष्यलक्षणसंग्रहे ।
अधुना क्रियते तेषां गुणदोषप्रदर्शनम् ॥ १ ॥
न षट्सप्ताक्षरे वृत्ते विश्राम्यति सरस्वती ।
भृङ्गीव मल्लिकाबालकलिकाकोटिसंकटे ॥ २ ॥
समासैर्लघुवृत्तानामसमासैर्महीयसाम् ।
शोभा भवति भव्यानामुपयोगवशेन वा ॥ ३ ॥
अनुष्टुप्छन्दसां भेदे कैश्चित्सामान्यलक्षणम् ।
यदुक्तं पञ्चमं कुर्याल्लघु षष्ठं तथा गुरु ॥ ४ ॥
तत्राप्यनियमो दृष्टः प्रबन्धे महतामपि ।
तस्माद्व्यभिचारेण श्रव्यतैव गरीयसी ॥ ५ ॥

---

१. अतिशुभ्रया त्वत्कीर्त्या सितकुसुममालभारिणीवेयं त्रिलोकी शोभत इति भावः.

यथा कालिदासस्य—

'तदन्वये शुद्धिमति प्रसूतः शुद्धिमत्तरः ।
दिलीप इति राजेन्दुरिन्दुः क्षीरनिधाविव ॥'

**उपजातिविकल्पानां सिद्धो यद्यपि संकरः ।**
**तथापि प्रथमं कुर्यात्पूर्वपादाक्षरं लघु ॥ ६ ॥**

यथा श्रीमदुत्पलराजस्य—

'हृताञ्जनश्यामरुचस्तवैते स्थूलाः किमित्यश्रुकणाः पतन्ति ।
भृङ्गा इव व्यायतपक्ष्मयो ये तनीयसीं रोमलतां श्रयन्ति ॥'

**सूत्रस्येवात्र तीक्ष्णाग्रं श्लोकस्य लघुना मुखम् ।**
**कर्णं विशति निर्विघ्नं सरलत्वं च नोज्झति ॥ ७ ॥**
**गुर्वक्षरेण संरुद्धं ग्रन्थियुक्तमिवाग्रतः ।**
**करोति प्रथमं स्थूलं किंचित्कर्णकदर्थनाम् ॥ ८ ॥**

यथा कालिदासस्य—

'अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः ।
पूर्वापरौ तोयनिधी वगाह्य स्थितः पृथिव्या इव मानदण्डः ॥'

**त्र्यक्षरैस्त्र्यक्षरैरेव च्छेदैराभाति दोधकम् ।**
**अतोऽल्पैरधिकैर्वापि यतिं तालमिवोज्झति ॥ ९ ॥**

यथा मम—

'सज्जनपूजनशीलनशोभामर्जय वर्जय दुर्जनसङ्गम् ।
दुस्तरसंसृतिसागरवेगे मज्जनकारणवारणमेतत् ॥'

अतोऽल्पाधिकैर्यथा तुञ्जीरस्य[1]—

'त्वन्मुखचन्द्रनिरीक्षणवर्त्या यः सुतरामिह निर्मलनेत्रः ।
सर्वजनस्य पुरः स्थितमेतत्सोऽन्तकवर्त्म न पश्यति चित्रम् ॥'

---

१. शारदाक्षरेषु नकाररकारयोरतिस्वल्पो भेदः, तस्मात्कदाचित्तुञ्जीन इति नाम स्यात्. तुञ्जीन इति तु कश्मीराधिपते रणादित्यस्य नामान्तरमस्ति. 'तस्यानुजो धरणिभृद्रणादित्यस्ततोऽभवत् । तुञ्जीनापरनामानं यं जनाः प्राहुरञ्जसा ॥' इति राजतरङ्गिणी (३।३८८). रणादित्यनामाङ्कितः श्लोकः सुभाषितावलीमध्ये वर्तते, तस्माद्रणादित्यः कविरासीदिति स्फुटमेव.

शालिनी श्लथबन्धैव स्वभावेन विभाव्यते ।
उत्तेजयेत्तां यत्नेन मन्ददीपशिखामिव ॥ १० ॥

श्लथा यथा मम—

'प्लोषक्लेशं प्रोषितानां दिशन्ती मानम्लानिं मानिनीनां दधाना ।
गाढं सक्ता सद्गुणग्लानिदाने चन्द्रस्य श्रीर्दुर्जनस्येव जाता ॥'

शत्रन्ताक्षरसंयोगैः किंचित्कार्कश्यकारिभिः ।
अन्ते विसर्जनीयैश्च शालिनी याति दीप्तताम् ॥ ११ ॥

यथा मम—

'लज्जामज्जल्लोलतारान्तकान्तास्तिर्यङ्निर्यत्केतकीपत्रतीक्ष्णाः ।
मग्नाश्चित्ते कस्य निर्यान्ति भूयः प्रेमोन्मीलत्पक्ष्मलाक्षीकटाक्षाः ॥'

श्लथस्वभावान्माधुर्यं शालिन्याः परिवर्ज्यते ।
रुचिः प्रयाति मन्दाग्नेः क्षीरेणात्यन्तमन्दताम् ॥ १२ ॥
विसर्गयुक्तैः पादान्तैर्विराजति रथोद्धता ।
कलापरिचयैर्याता लटभेव प्रगल्भताम् ॥ १३ ॥

यथा मम—

'अत्र चैत्रसमये निरन्तराः प्रोषिताहृदयकीर्णपावकाः ।
वान्ति कामुकमनोविमोहना व्याललोलमलयाचलानिलाः ॥'

अविसर्गैस्तु पादान्तैर्निष्प्रभैव रथोद्धता ।
अप्रार्थनाप्रणयिनी म्लानमानेव मानिनी ॥ १४ ॥

यथा कलशकस्य[1]—

'अञ्जलौ जलमधीरलोचना लोचनप्रतिशरीरशारितम् ।
आत्तमात्तमपि कान्तमुक्षितुं कातरा शफरशङ्किनी जहौ ॥'

---

१. अनन्तराजसूनुः कलशः कश्मीरमहाराज आसीत्. अस्यैव राज्यकाले बिह्लणकविः कश्मीरदेशं परित्यज्य देशान्तरं गतः. अयं कलशः कविरासीदिति बिह्लणेनैव विक्रमाङ्कदेवचरितेऽष्टादशे सर्गे वर्णितम्. कलशस्य केचन श्लोकाः सुभाषितावलीमध्येऽपि सन्ति. कलशराज्यसमयस्तु १०८० मितात्खिस्तसंवत्सरादारभ्य १०८८ पर्यन्तमासीत्. अस्यैव कलशस्य सूनुर्हर्षदेवो बभूव, यत्प्रशस्तिरूपो राजेन्द्रकर्णपूरग्रन्थः.

**साकाराद्यैर्विसर्गान्तैः सर्वपादैः सविभ्रमा ।**
**स्वागता स्वागता भाति कविकर्मविलासिनी ॥ १५ ॥**

यथा मम—

'व्यावलन्ति तरला जलधाराः पान्थसंगमधृतेः परिहाराः ।
प्रान्तरत्ननिभविद्युदुदाराः प्रावृषः पृथुपयोधरहाराः ॥'

न तु यथा ममैव—

'अम्बरेऽम्बुभरलम्बिपयोदे मत्तबर्हिरुचिरेऽद्रिनितम्बे ।
पुष्पधामनि कदम्बकदम्बे का गतिः पथिक कालविलम्बे ॥'

**द्रुततालल्यैरेव व्यक्तं रूक्षाक्षरैः पदैः ।**
**प्रनर्तयति यच्चित्तं तत्तोटकमभीप्सितम् ॥ १६ ॥**

यथा मम—

'मदघूर्णितलोचनषट्चरणं घनरागमनङ्गकराभरणम् ।
कमलद्युति मुग्धवधूवदनं सुकृती पिबतीह सुधासदनम् ॥'

**असमस्तपदैः पादसंधिविच्छेदसुन्दरम् ।**
**सर्वपादैर्विसर्गान्तैर्वंशस्थं यात्यनर्घताम् ॥ १७ ॥**

यथा भट्टबाणस्य—

'जयन्ति बाणासुरमौलिलालिता दशास्यचूडामणिचक्रचुम्बिनः ।
सुरासुराधीशशिखान्तशायिनस्तमश्छिदस्त्र्यम्बकपादपांसवः ॥'

विपरीतं यथास्यैव—

'नमामि भर्वोश्चरणाम्बुजद्वयं सशेखरैर्मौखरिभिः कृतार्चनम् ।
समस्तसामन्तकिरीटवेदिकाविटङ्कपीठोल्लुठितारुणाङ्गुलि ॥'

**प्रारम्भे द्रुतविन्यासं पर्यन्तेषु विलम्बितम् ।**
**विच्छित्त्या सर्वपादानां भाति द्रुतविलम्बितम् ॥ १८ ॥**

यथा मम—

'कमलपल्लववारिकणोपमं किमिव पासि सदा निधनं धनम् ।
कलभकर्णचलाञ्चलचञ्चलं स्थिरतराणि यशांसि न जीवितम् ॥'

द्रुतहीनं विलम्बितं यथा मम—

'निपततां भ्रमतां विनिमज्जतां प्रविशतां परिवारशतैरधः ।
तनुभृतां भव एव भवार्णवे भयमये भगवानवलम्बनम् ॥'

**आकारमन्थरैः प्रायः पादे पादेऽक्षरैस्त्रिभिः ।**
**शेषाक्षरैर्द्रुततरैः प्रहर्षाय प्रहर्षिणी ॥ १९ ॥**

यथा श्रीहर्षदेवस्य—

'दुर्वारां कुसुमशरव्यथां वहन्त्या कामिन्या यदभिहितं पुरः सखीनाम् ।
तद्भूयः शिशुशुकसारिकाभिरुक्तं धन्यानां श्रवणपथातिथित्वमेति ॥'

विपरीतं यथा मम—

'संकोचव्यतिकरबद्धभीतिलोलैर्निर्याद्भिर्भ्रमरभरैः सरोरुहेभ्यः ।
आरब्धः क्षणमिव संध्यया जगत्यामुत्पत्त्यै घनतिमिरस्य वीजवापः ॥'

**वसन्ततिलकस्याग्रे साकारे प्रथमाक्षरे ।**
**ओजसा जायते कान्तिः सविकासविलासिनी ॥ २० ॥**

यथा विद्याधिपत्यपरनाम्नो रत्नाकरस्य—

'कण्ठश्रियं कुवलयस्तबकाभिराम-
दामानुकारिविकटच्छविकालकूटाम् ।
बिभ्रत्सुखानि दिशतादुपहारपीत-
धूपोत्थधूममलिनामिव धूर्जटिर्वः ॥'

**आकारेऽपि कृते पूर्वं बन्धेऽल्पपदपेशले ।**
**वसन्ततिलकं धत्ते निर्गन्धि रमणीयताम् ॥ २१ ॥**

यथा परिमलस्य—

'अच्छासु हंस इव बालमृणालिकासु
भृङ्गो नवास्विव मधुद्रुममञ्जरीषु ।
कोऽवन्तिभर्तुरपरो रसनिर्भरासु
पृथ्वीपतिः सुकविसूक्तिषु बद्धभावः ॥'

**विसर्गहीनपर्यन्ता मालिनी न विराजते ।**
**चमरी छिन्नपुच्छेव वल्लीवाल्लूनपल्लवा ॥ २२ ॥**

यथा भट्टवल्लटस्य—

'वरमिह रवितापैः किं न शीर्णासि गुल्मे
किमु दवदहनैर्वा सर्वदाहं न दग्धा ।
यदहृदयजनौघैर्वृन्तपर्णानभिज्ञै-
रितरकुसुममध्ये मालति प्रोम्भितासि ॥'

संपूर्णा सा यथा कालिदासस्य—

'अथ स ललितयोषिद्भ्रूलताचारुशृङ्गं
रतिवलयपदाङ्के चापमासज्य कण्ठे ।
सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्रः
शतमखमुपतस्थे प्राञ्जलिः पुष्पकेतुः ॥'

**द्वितीयार्धे समस्ताभ्यां पादाभ्यां मालिनी वरा ।**
**प्रथमार्धे समस्ताभ्यां पादाभ्यामवरा मता ॥ २३ ॥**

द्वितीयार्धे समस्तपादा यथा गन्दिनकस्य—

'करतरलितवन्धं कञ्चुकं कुर्वतीनां
प्रतिफलितमिदानीं दैपमाताम्रमर्चिः ।
स्तनतटपरिणाहे भामिनीनां भविष्य-
न्नखपदलिपिलीलासूत्रपातं करोति ॥'

प्रथमार्धे समस्तपादा यथा राजशेखरस्य—

'इह हि नववसन्ते मञ्जरीपुञ्जरेणु-
च्छुरणधवलदेहा बद्धहेलं सरन्ति ।
तरलमलिसमूहा हारिहुंकारकण्ठा
बहुलपरिमलालीसुन्दरं सिन्दुवारम् ॥'

**अज्ञोऽप्यलक्ष्यं मालिन्यां वीणायामिव विस्वरम् ।**
**श्रुत्वैवोद्वेगमायाति वाचा वक्तुं न वेत्ति तम् ॥ २४ ॥**

यथा भट्टेन्दुराजस्य—

'रहसि हृतदुकूला शीलिता तैलदीपे
त्वदुपगतसमृद्धेः प्रेयसी श्रोत्रियस्य।
विकिरति पटवासैर्हन्ति कर्णावतंसैः
शमयति मणिदीपं पाणिफूत्कानिलेन॥'

**गुरुलघ्वादिनियमादविभ्रष्टेऽपि लक्षणात्।**
**दोषस्त्वदुपगेत्यत्र श्रोत्रग्राह्योऽस्ति विस्वरः॥ २५॥**
**प्रथमं द्व्यक्षरैश्छेदैस्ततस्त्रिचतुराक्षरैः।**
**पञ्चाक्षरैश्च पर्यन्ते नर्कुटं याति चारुताम्॥ २६॥**

यथा वीरदेवस्य[1]—

'तव शतपत्रपत्रमृदुताम्रतलश्चरण-
श्चलकलहंसनूपुरवरध्वनिना मुखरः।
महिषमहासुरस्य शिरसि प्रसभं निहितः
सकलमहीधरेन्द्रगुरुतां कथमम्ब गतः॥'

विपरीतं यथास्यैव—

'सशिखिशिखेव धूमनिचिताञ्जनशैलगुहा
सकपिशपन्नगेव यमुनोन्नतनीलशिला।
महिषमहासुरोपहितभासुरशूलकरा
बहुलनिशेव भासि सतडिद्गुणमेघयुता॥'

**असमासैः पदैर्भाति पृथ्वी पृथ्वी पृथक्स्थितैः।**
**समासग्रन्थिभिः सैव याति संकोचखर्वताम्॥ २७॥**

पृथक्पदा यथा साहिलस्य—

'कचग्रहमनुग्रहं दशनखण्डनं मण्डनं
दृगञ्जनमवञ्जनं मुखरसार्पणं तर्पणम्।

---

१. ख्रिस्तसंवत्सरीयैकादशशतकसमाप्तौ विद्यमानाद्रुद्रटालंकारटीकाकर्तुः श्वेताम्बरनमिसाधुतः प्राचीनोऽयं वीरदेवः. यतो नमिसाधुना 'नुत्वा तथाहि दुर्गाम्' (१।९) इत्यादि रुद्रटार्याव्याख्यायाम् 'केचिद्वीरदेवादयो नीरुजत्वं प्रापुः' इत्युक्तमस्ति. स एवायं वीरदेवः. यतोऽत्रापि दुर्गास्तुतिरूपमेवास्य श्लोकद्वयम्.

नखार्दनमतर्दनं दृढमपीडनं पीडनं
करोति रतिसंगरे मकरकेतनः कामिनाम् ॥'

समासवती यथा मम—

'कचग्रहसमुल्लसत्कमलकोषपीडाजड-
द्विरेफकलकूजितानुकृतसीत्कृतालंकृताः ।
जयन्ति सुरतोत्सवव्यतिकरे कुरङ्गीदृशां
प्रमोदमदनिर्भरप्रणयचुम्बिनो विभ्रमाः ॥'

**पृथ्वी साकारगम्भीरैरोजःसर्जिभिरक्षरैः ।**
**समासग्रन्थियुक्तापि याति प्रत्युत दीर्घताम् ॥ २८ ॥**

यथा भट्टनारायणस्य—

'महाप्रलयमारुतक्षुभितपुष्करावर्तक-
प्रचण्डघनगर्जितप्रतिरुतानुकारी मुहुः ।
रवः श्रवणभैरवः स्थगितरोदसीकंदरः
कुतोऽद्य समरोदधेरयमभूतपूर्वः श्रुतः ॥'

**त्वरातरलविच्छेदैर्विभाति हरिणी पदैः ।**
**मन्थरैर्ग्रन्थिबद्धेव याति निःस्पन्दसङ्गताम् ॥ २९ ॥**

तरलपदा यथा दीपकस्य—

'तनुधनहरक्रूरस्तेनोत्कटां विकटाटवीं
तरति तरसा शौर्योत्सेकात्स्वसार्थवशाज्जनः ।
पुरवरवधूलीलावल्गत्कटाक्षबलाकुले
नगरनिकटे पन्थाः पान्थ स्फुटं दुरतिक्रमः ॥'

मन्थरैर्यथा भट्टेन्दुराजस्य—

'गुणपरिचयस्तीर्थे वासस्थिरोभयपक्षता
वपुरतिदृढं वृत्तं सम्यक्सखे तव किं पुनः ।
सरति सुमते यस्त्वां पातुं दृशा विनिमेषया
बडिश विषमं रत्याक्षेपं करोषि सहासुभिः ॥'

त्रिषु पादेषु विश्रान्तविलासैर्ललिता पदैः ।
अन्ते तरङ्गितगतिर्हरिणी हारिणीतराम् ॥ ३० ॥

यथास्यैव—

'उपपरिसरं गोदावर्याः परित्यजताध्वगाः
सरणिमपरो मार्गस्तावद्भवद्भिरवेक्ष्यताम् ।
इह हि विहितो रक्ताशोकः कयापि हताशया
चरणनलिनन्यासोदञ्चन्नवाङ्कुरकञ्चुकः ॥'

शिखरिण्याः समारोहात्सहजैवौजसः स्थितिः ।
सैव लुप्तविसर्गान्तैः प्रयात्यत्यन्तमुन्नतिम् ॥ ३१ ॥

यथा मुक्ताकणस्य—

'यथा रन्ध्रं व्योम्नश्चलजलदधूमः स्थगयति
स्फुलिङ्गानां रूपं दधति च यथा कीटमणयः ।
यथा विद्युज्ज्वालोल्लसनपरिपिङ्गाश्च ककुभ-
स्तथा मन्ये लग्नः पथिक तरुखण्डे स्मरदवः ॥'

विपरीता यथा भट्टश्यामलस्य—

'धृतो गण्डाभोगे मधुप इव बद्धोऽब्जविवरे
विलासिन्या मुक्तो बकुलतरुमापुष्पयति यः ।
विलासो नेत्राणां तरुणसहकारप्रियसखः
स गण्डूषः सीधोः कथमिव शिरः प्राप्स्यति मधोः ॥'

शिखरिण्याः पदैश्छिन्नैः स्वरूपं परिहीयते ।
मुक्तालताया निःसूत्रमुक्तैर्मुक्ताफलैरिव ॥ ३२ ॥

यथा भट्टभवभूतेः—

'असारं संसारं परिमुषितरत्नं त्रिभुवनं
निरालोकं लोकं मरणशरणं बान्धवजनम् ।
अदर्पं कंदर्पं जननयननिर्माणमफलं
जगज्जीर्णारण्यं कथमसि विधातुं व्यवसितः ॥'

**श्लोकेऽस्मिन्सचमत्कारसरसास्वादशालिनि ।**
**केवलं शिखरिण्यैव स्वरूपमपहारितम् ॥ ३३ ॥**
**मन्थराक्रान्तविस्रब्धैश्चतुर्भिः प्रथमाक्षरैः ।**
**मध्यषट्केऽतिचतुरे मन्दाक्रान्ता विराजते ॥ ३४ ॥**

यथा कालिदासस्य—

'ब्रह्मावर्तं जनपदमधश्छायया गाहमानः
क्षेत्रं क्षत्रप्रधनपिशुनं कौरवं तद्भजेथाः ।
राजन्यानां शितशरशतैर्यत्र गाण्डीवधन्वा
धारासारैस्त्वमिव कमलान्यभ्यषिञ्चन्मुखानि ॥'

आदिमध्ये तुल्या यथास्यैव—

'कश्चित्कान्ताविरहगुरुणा स्वाधिकारप्रमत्तः
शापेनास्तंगमितमहिमा वर्षभोग्येण भर्तुः ।
यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु
स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेषु ॥'

**साकाराद्यक्षरैः पादपर्यन्तैः सविसर्गकैः ।**
**शार्दूलक्रीडितं धत्ते तेजोजीवितमूर्जितम् ॥ ३५ ॥**

यथा भट्टश्यामलस्य—

'आलानं जयकुञ्जरस्य दृषदां सेतुर्विपद्वारिधेः
पूर्वाद्रिः करवालचण्डमहसो लीलोपधानं श्रियः ।
सङ्ग्रामामृतसागरप्रमथनक्रीडाकृतौ मन्दरो
राजन्राजति वीरवैरिवनितावैधव्यदस्ते भुजः ॥'

विपरीतं यथा लाटडिण्डीरस्य—

'चित्रं तावदिदं सुरेन्द्रभवनान्मन्दाकिनीपाथसा
केनाप्युत्तमतेजसा नृपतिना क्ष्मामण्डलं मण्डितम् ।
नातश्चित्रतरं निशाकरकलालावण्यदुग्धोदधे
भूमेर्यद्भवता विरिञ्चिनगरी कीर्तिप्लवैः प्लाव्यते ॥'

**विसर्जनीयस्योत्वेन पदैर्निम्नोन्नतैरिव ।**
**शार्दूलक्रीडितं याति पाठे सायासतामिव ॥ ३६ ॥**

यथा मुक्ताकणस्य—

'लीलाचामरडम्बरो रतिपतेर्बालाम्बुदश्रेणयो
रागोद्दण्डशिखण्डिनो मुखविधूद्धूतास्तमोविभ्रमाः ।
सौगन्ध्योद्धतधावदाकुलवलन्मत्तालिमालाकुलो
धम्मिल्लो हरिणीदृशो विजयते स्रस्तो रतिव्यत्यये ॥'

**विच्छिन्नपादं पूर्वार्धे द्वितीयार्धे समासवत् ।**
**शार्दूलक्रीडितं भाति विपरीतमतोऽधमम् ॥ ३७ ॥**

पूर्वार्धे यथा भट्टभवभूतेः—

'अज्ञानाद्यदि वाधिपत्यरभसादस्मत्परोक्षं हृता
सीतेयं प्रविमुच्यतां शठ मरुत्पुत्रस्य हस्तेऽधुना ।
नो चेल्लक्ष्मणमुक्तमार्गणगणच्छेदोच्छलच्छोणित-
च्छत्रच्छन्नदिगन्तमन्तकपुरं पुत्रैर्वृतो यास्यसि ॥'

विपरीतं यथा रिस्सोः—

'स्नातुं वाञ्छसि किं मुधैव धवलक्षीरोदफेनच्छटा-
छायाहारिणि वारिणि द्युसरितो डिण्डीरविस्तारिणि ।
आस्ते ते कलिकालकल्मषमषीप्रक्षालनैकक्षमा
कीर्तिः संनिहितैव सप्तभुवनस्वच्छन्दमन्दाकिनी ॥'

**आद्यन्तयोर्गुणोत्कर्षकान्त्या सर्वातिशायिनोः ।**
**शार्दूलक्रीडितं धत्ते मध्ये तद्गौरवोन्नतिम् ॥ ३८ ॥**

यथा कालिदासस्य—

'गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु ।
विस्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले
विश्रान्तिं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः ॥'

आद्यन्ताकारविरहात्पर्यन्ते चाविसर्गतः ।
शार्दूलक्रीडितं स्वस्य रूपं नैवोपलभ्यते ॥ ३९ ॥

यथा श्रीयशोवर्मणः[1]—

'यत्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरं
मेघैरन्तरितः प्रिये तव मुखच्छायानुकारी शशी ।
येऽपि त्वद्गमनानुकारिगतयस्ते राजहंसा गता-
स्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते ॥'

सुकुमाररसस्यात्र रक्षायै वृत्तमुद्धृतम् ।
वाक्पाकेनैव गलितं कविना नीतमल्पताम् ॥ ४० ॥
आकारगुरुयुक्तादिपर्यन्तान्तविसर्गिणी ।
असंस्यूतविरामा च राजते स्रग्धरातराम् ॥ ४१ ॥

यथा राजशेखरस्य—

'ताम्बूलीनद्धमुग्धक्रमुकतरुलताप्रस्तरे सानुगाभिः
पायं पायं कलायीकृतकदलिदलं नारिकेलीफलाम्भः ।
सेव्यन्तां व्योमयात्राश्रमजलजयिनः सैन्यसीमन्तिनीभि-
र्दात्यूहव्यूहकेलीकलितकुहकुहारावकान्ता वनान्ताः ॥'

विपरीतं यथा चक्रस्य—

'सत्यं पातालकुक्षिंभरि चिरविलसद्दिक्करि प्रीणिताभ्रं
श्रीगर्भश्वभ्रमभ्रंलिहलहरि हरिस्थानमप्येव किंचित् ।
कल्पान्ते व्याप्तविश्वं परिरटति सरिन्नाथ पाथस्त्वदीयं
किं त्वेतत्कुम्भयोनेः करकुहरदरीपूरमाचामतोऽभूत् ॥'

आद्यन्ताकारविरहाद्बन्धदोषः स्फुटोऽपि यः ।
अपिलुप्तैर्विसर्गान्तैः स्रग्धरायां समीहते ॥ ४२ ॥

---

१. भवभूतिवाक्पतिराजादीनां प्रभुः स्वयं च रामाभ्युदयादिनाटकानां कर्ता कान्यकुब्जमहीपालोऽयं यशोवर्मा. 'कविर्वाक्पतिराजश्रीभवभूत्यादिसेवितः । जितो ययौ यशोवर्मा तद्गुणस्तुतिबन्दिताम् ॥' इति राजतरङ्गिणी (४।१४५). स च यशोवर्मा ख्रिस्तसंवत्सरीयसप्तमशतकस्योत्तरार्धे आसीत्.

यथा मम—

'शौर्यश्रीकेशपाशः करिदलनमिलन्मौक्तिकव्यक्तपुष्पः
क्षोणीरक्षाभुजंगः कुलशिखरिलुठत्कीर्तिनिर्मोकपट्टः ।
शत्रुव्रातप्रतापप्रलयजलधरस्फारधाराकरालः
प्रीत्यै लक्ष्मीकटाक्षः कुवलयविजयी यस्य पाणौ कृपाणः ॥'

एवमुद्देशलेशेन वृत्तानां दर्शितः क्रमः ।
अनयैव दिशा सर्वं ज्ञेयं तज्ज्ञैर्यथोचितम् ॥ ४३ ॥

मन्दाक्रान्ता भवेन्मध्ये शालिनी पूरिताक्षरा ।
उपेन्द्रवज्रं वंशस्थं पर्यन्तैकाक्षराधिकम् ॥ ४४ ॥

इत्यादि दर्शितं नेह स्वतःसिद्धो ह्ययं क्रमः ।
न वेत्ति तद्वृत्तज्ञस्तज्ज्ञस्य क्वोपयुज्यते ॥ ४५ ॥

इति परिचितनानारूपवाणीगुणानां
विदितविविधदोषोद्देशलेशान्तराणाम् ।
इदमतिशयसूक्ष्मैर्वृत्तचर्चाविचारै-
रभिहितमभिगम्यं योगितुल्याशयानाम् ॥ ४६ ॥

इति श्रीप्रकाशेन्द्रात्मजव्यासदासापरनामश्रीक्षेमेन्द्रविरचिते सुवृत्ततिलके गुणदोषदर्शनं नाम द्वितीयो विन्यासः ।

---

## तृतीयो विन्यासः ।

प्रबन्धः सुतरां भाति यथास्थानं विवेचकः (निवेशितैः) ।
निर्दोषैर्गुणसंयुक्तैः सुवृत्तैर्मौक्तिकैरिव ॥ १ ॥

शास्त्रं काव्यं शास्त्रकाव्यं काव्यशास्त्रं च भेदतः ।
चतुष्प्रकारः प्रसरः सतां सारस्वतो मतः ॥ २ ॥

शास्त्रं काव्यविदः प्राहुः सर्वकाव्याङ्गलक्षणम् ।
काव्यं विशिष्टशब्दार्थसाहित्यसदलंकृति ॥ ३ ॥

शास्त्रकाव्यं चतुर्वर्गप्रायं[1] सर्वोपदेशकृत् ।
भट्टिभौमकक‍ाव्यादि[2] काव्यशास्त्रं प्रचक्षते ॥ ४ ॥
तत्र केवलशास्त्रेऽपि केचित्काव्यं प्रयुञ्जते ।
तिक्तौषधरसोद्वेगे गुडलेशमिवोपरि ॥ ५ ॥

यथा वैद्यके वाग्भटस्य—

'मधु मुखमिव सोत्पलं प्रियायाः कलरसना परिवादिनी प्रियेव ।
कुसुमचयमनोहरा च शय्या किसलयिनी लतिकेव पुष्पिताग्रा ॥'

शास्त्रं कुर्यात्प्रयत्नेन प्रसन्नार्थमनुष्टुभा ।
येन सर्वोपकाराय याति सुस्पष्टसेतुताम् ॥ ६ ॥
काव्ये रसानुसारेण वर्णनानुगुणेन च ।
कुर्वीत सर्ववृत्तानां विनियोगं विभागवित् ॥ ७ ॥
शास्त्रकाव्येऽतिदीर्घाणां वृत्तानां न प्रयोजनम् ।
काव्यशास्त्रेऽपि वृत्तानि रसायत्तानि काव्यवित् ॥ ८ ॥
पुराणप्रतिबिम्बेषु प्रसन्नोपायवर्त्मसु ।
उपदेशप्रधानेषु कुर्यात्सर्वेष्वनुष्टुभम् ॥ ९ ॥
नानावृत्तविशेषास्तु कवेः शस्तस्य शासनात् ।
यान्ति प्रभोरिवात्यन्तमयोग्या अपि योग्यताम् ॥ १० ॥
उग्रगोग्रहसङ्ग्रामे तत्कालसदृशोपमाः ।
दृष्टास्त एव वैराटेस्त एवाश्वाः किरीटिनः ॥ ११ ॥
तथाप्यवस्थासदृशैः साधुशब्दपदस्थिताः ।
सुवृत्तैरेव शोभन्ते प्रबन्धाः सज्जना इव ॥ १२ ॥

---

१. क्षेमेन्द्रकृत एव चतुर्वर्गसंग्रहाख्यो ग्रन्थः. २. भट्टभौमकृतं रावणार्जुनीयकाव्यं भट्टिकाव्यतुल्यं कश्मीरदेशप्रसिद्धम्. 'उदगात्कठकालापं प्रत्यष्ठात्कठकौथुमम्' इति रावणार्जुनीयकाव्यश्लोकार्धं काशिकावृत्तौ 'अनुवादे चरणानाम्' (२।४।३) एतत्सूत्रव्याख्यान उदाहृतम्, तस्मात्काशिकावृत्तिकर्तुः प्राचीनो भट्टभौमकः. सिद्धान्तकौमुद्यामपि द्वन्द्वसमासप्रकरणे पूर्वोक्तसूत्रव्याख्यान एवोदाहृतं पूर्वोक्तं श्लोकार्धम्.

वृत्तरत्नावली कामादस्थाने विनिवेशिता।
कथयत्यज्ञतामेव मेखलेव गले कृता ॥ १३ ॥
नहि नाम नवोन्मेषिकुचायाश्चारुचक्षुषः।
चिरत्यक्तस्मराचारे जराजीर्णकचे रुचिः ॥ १४ ॥
तस्मादत्र यथास्थाने विनियोगाय संगतिः।
उदाहरणदिङ्मात्रैर्दर्शिताभिमता सताम् ॥ १५ ॥
आरम्भे सर्गबन्धस्य कथाविस्तरसंग्रहे।
शमोपदेशवृत्तान्ते सन्तः शंसन्त्यनुष्टुभम् ॥ १६ ॥

आरम्भे यथा भर्तृमेण्ठस्य—

'आसीद्दैत्यो हयग्रीवः सुहृद्वेश्मसु यस्य ताः।
प्रथयन्ति बलं बाह्वोः सितच्छत्रस्मिताः श्रियः ॥'

कथाप्रसङ्गे यथाभिनन्दस्य[1]—

'तस्यां निजभुजोद्योगविजितारातिमण्डलः।
आखण्डल इव श्रीमान्राजा शूद्रक इत्यभूत् ॥'

शमोपदेशे यथा मम—

'पृथुशास्त्रकथाकन्थारोमन्थेन वृथैव किम्।
अन्वेष्टव्यं प्रयत्नेन तत्त्वज्ञैर्ज्योतिरान्तरम् ॥'

शृङ्गारालम्बनोदारनायिकारूपवर्णनम्।
वसन्तादि तदङ्गं च सच्छायमुपजातिभिः ॥ १७ ॥

रूपवर्णनं यथा कालिदासस्य—

'मध्येन सा वेदिविलग्नमध्या वलित्रयं चारु बभार बाला।
आरोहणार्थं नवयौवनेन कामस्य सोपानमिव प्रयुक्तम् ॥'

वसन्तवर्णनं यथास्यैव—

'बालेन्दुवक्राण्यविकासभावाद्बभुः पलाशान्यतिलोहितानि।
सद्यो वसन्तेन समागतानां नखक्षतानीव वनस्थलीनाम् ॥'

---

१. कादम्बरीकथासारकर्ता वृत्तिकारापरनाम्नो जयन्तभट्टस्य सूनुरभिनन्दकविः कश्मीरदेशे ख्रिस्तसंवत्सरीयसप्तमशतकसमाप्तौ बभूव. रामचरिताख्यकाव्यस्य कर्ता तु शतानन्दसूनुः कश्चिदन्योऽभिनन्दः.

**रथोद्धता विभावेषु भव्या चन्द्रोदयादिषु ।**
**षाड्गुण्यप्रगुणा नीतिर्वंशस्थेन विराजते ॥ १८ ॥**

चन्द्रोदये यथास्यैव—

'अङ्गुलीभिरिव केशसंचयं संनियम्य तिमिरं मरीचिभिः ।
कुड्मलीकृतसरोजलोचनं चुम्बतीव रजनीमुखं शशी ॥'

नीतिर्यथा भारवेः[1]—

'श्रियः कुरूणामधिपस्य पालिनीं प्रजासु वृत्तिं यमयुङ्क्त वेदितुम् ।
स वर्णिलिङ्गी विदितः समाययौ युधिष्ठिरं द्वैतवने वनेचरः ॥'

**वसन्ततिलकं भाति संकरे वीररौद्रयोः ।**
**कुर्यात्सर्गस्य पर्यन्ते मालिनीं द्रुततालवत् ॥ १९ ॥**

वीररौद्रयोर्यथा रत्नाकरस्य—

'जृम्भाविकासितमुखं नखदर्पणान्त-
राविष्कृतप्रतिमुखं गुरुरोषगर्भम् ।
रूपं पुनातु जनितारिचमूविमर्श-
मुद्वृत्तदैत्यवधनिर्वहणं हरेर्वः ॥'

सर्गान्ते यथा कालिदासस्य—

'अवचितबलिपुष्पा वेदिसंमार्गदक्षा
नियमविधिजलानां बर्हिषां चोपनेत्री ।
गिरिशमुपचचार प्रत्यहं सा सुकेशी
नियमितपरिखेदा तच्छिरश्चन्द्रपादैः ॥'

---

१. अद्यापि भारविकवेः समयो न निश्चितः, परंतु ३७३५ मितकलिवर्षेषु गतेषु ५५६ मिते च शककाले, अर्थात् ६३४ मिते खिस्तसंवत्सरे, समुत्कीर्णे कस्मिंश्चित्पाषाणलेखे 'येनायोजि नवेऽश्मस्थिरमर्थविधौ विवेकिना जिनवेश्म । स विजयतां रविकीर्तिः कविताश्रितकालिदासभारविकीर्तिः ॥' इयमार्यागीतिर्वर्तते. तस्मात्सप्तमशतकप्रारम्भेऽपि कालिदासभारवी प्रसिद्धावास्ताम्. स च पाषाणलेखः 'धी इण्डियन् आण्टिकेरी'नामकपुस्तकस्य पञ्चमे भागे सप्ततिमिते पृष्ठे मुद्रितोऽस्ति. तत्रैव तद्विस्तरो द्रष्टव्यः.

**उपपन्नपरिच्छेदकाले शिखरिणी मता ।**
**औदार्यरुचिरौचित्यविचारे हरिणी वरा ॥ २० ॥**

उपपन्नपरिच्छेदे यथा भर्तृहरेः—

'भवन्तो वेदान्तप्रणिहितधियामत्र गुरवो
विचित्रालापानां वयमपि कवीनामनुचराः ।
तथाप्येवं ब्रूमो नहि परहितात्पुण्यमपरं
न चास्मिन्संसारे कुवलयदृशो रम्यमपरम् ॥'

औदार्येऽप्यस्यैव—

'विपुलहृदयैरन्यैः कैश्चिज्जगज्जनितं पुरा
विधृतमपरैर्दत्तं चान्यैर्विजित्य तृणं यथा ।
इह हि भुवनान्यन्ये धीराश्चतुर्दश भुञ्जते
कतिपयपुरस्वाम्ये पुंसां क एष मदज्वरः ॥'

**साक्षेपक्रोधधिक्कारे परं पृथ्वी भरक्षमा ।**
**प्रावृट्प्रवासव्यसने मन्दाक्रान्ता विराजते ॥ २१ ॥**

साक्षेपे यथा यशोवर्मणः—

'स यस्य दशकंधरं कृतवतोऽपि कक्षान्तरे
गतः स्फुटमवन्ध्यतामधिपयोधि सांध्यो विधिः ।
तदात्मज इहाङ्गदः प्रहित एष सौमित्रिणा
क स क स दशाननो ननु निवेद्यतां राक्षसः ॥'

प्रावृट्प्रवासे यथा कालिदासस्य—

'तस्मिन्नद्रौ कतिचिदबलाविप्रयुक्तः स कामी
नीत्वा मासान्कनकवलयभ्रंशरिक्तप्रकोष्ठः ।
आषाढस्य प्रथमदिवसे मेघमाश्लिष्टसानुं
वप्रक्रीडापरिणतगजप्रेक्षणीयं ददर्श ॥'

**शौर्यस्तवे नृपादीनां शार्दूलक्रीडितं मतम् ।**
**सावेगपवनादीनां वर्णने स्रग्धरा मता ॥ २२ ॥**

शौर्यस्तवे यथा श्रीचक्रस्य—

'नेतुं नौभिरिभा न यान्ति दृतिभिस्तार्याः कियन्तो हया-
स्तज्जानुद्वयसेन देव पयसा सैन्यं समुत्तार्यताम् ।
नो चेद्भङ्गभयद्रुतारिवनितानेत्रप्रणालीलुठ-
द्बाष्पाम्भःप्लवपूरितोभयतटी द्राग्वर्त्स्यतीरावती ॥'

सावेगपवने यथा मम पवनपञ्चाशिकायाम्—

'प्रेङ्खच्छङ्खाभिघातस्फुटदखिलचलच्छुक्तिनिर्मुक्तमुक्ता-
मुक्तव्यक्ताट्टहासाः सरनृपसकलद्वीपसंचारचाराः ।
सर्पत्कर्पूरपूरप्रवणकरचिता दिग्वधूकर्णपूरा
धावन्त्याध्मातविश्वा रतविधुतवधूबन्धवो गन्धवाहाः ॥'

दोधकतोटकनर्कुटयुक्तं मुक्तकमेव विराजति सूक्तम् ।
निर्विषयस्तु रसादिषु तेषां निर्नियमश्च सदा विनियोगः ॥ २३ ॥

शेषाणामप्यनुक्तानां वृत्तानां विषयं विना ।
वैचित्र्यमात्रपात्राणां विनियोगो न दर्शितः ॥ २४ ॥

इत्येष वश्यवचसां सर्ववृत्तप्रसङ्गिनाम् ।
उक्तो विभागः सद्वृत्तविनिवेशे विशेषवान् ॥ २५ ॥

एकस्मिन्नेव यैर्वृत्ते कृतो द्वित्रेषु वा श्रमः ।
न नाम विनियोगार्हास्ते दरिद्रा इवोत्सवे ॥ २६ ॥

वृत्ते यस्य भवेद्यस्मिन्नभ्यासेन प्रगल्भता ।
स तेनैव विशेषेण स्वसंदर्भे प्रदर्शयेत् ॥ २७ ॥

एकवृत्तादरः प्रायः पूर्वेषामपि दृश्यते ।
तत्रैवातिचमत्कारादन्यत्रारब्धपूरणात् ॥ २८ ॥

अनुष्टुप्सततासक्ता साभिनन्दस्य नन्दिनी ।
विद्याधरस्य वदने गुलिकेव प्रभावभूः ॥ २९ ॥

स्पृहणीयत्वचरितं पाणिनेरुपजातिभिः ।
चमत्कारैकसाराभिरुद्यानस्येव जातिभिः ॥ ३० ॥

---

१. पातालविजये काव्ये। 

वृत्तच्छत्रस्य सा कापि वंशस्थस्य विचित्रता ।
प्रतिभा भारवेर्येन सच्छायेनाधिकीकृता ॥ ३१ ॥
वसन्ततिलकारूढा वाग्वल्ली गाढसङ्गिनी ।
रत्नाकरस्योत्कलिका चकास्त्याननकानने ॥ ३२ ॥
भवभूतेः शिखरिणी निरर्गलतरङ्गिणी ।
रुचिरा घनसंदर्भे या मयूरीव नृत्यति ॥ ३३ ॥
सुवशा कालिदासस्य मन्दाक्रान्ता प्रवल्गति ।
सदश्वदमकस्येव काम्बोजतुरगाङ्गना ॥ ३४ ॥
शार्दूलक्रीडितैरेव प्रख्यातो राजशेखरः ।
शिखरीव परं वक्रैः सोल्लेखैरुच्चशेखरः ॥ ३५ ॥
इत्येवं पूर्वकवयः सर्ववृत्तकरा अपि ।
अस्मिन्हार इवैकस्मिन्प्रायेणाभ्यधिकादराः ॥ ३६ ॥
सुवर्णार्हप्रबन्धेषु यथास्थाननिवेशिनाम् ।
रत्नानामिव वृत्तानां भवत्यभ्यधिका रुचिः ॥ ३७ ॥
तस्माद्यथायं विनियोगमार्गः प्रदर्शितो वृत्तनिवेशनेषु ।
तथैव कार्यः कविभिः कृतज्ञैरवश्यवाचां नियमस्तु नायम् ॥ ३८ ॥
इत्यारुरुक्षोः प्रथमोपयुक्तं प्रवृत्तवाचश्च विवेककारि ।
महाकवेरप्यतिसूक्ष्मतत्त्वविचारहर्षप्रदमेतदुक्तम् ॥ ३९ ॥
इत्यौचित्यप्रचुररचनाविश्रुतश्रव्यवृत्त-
व्यक्तिः शक्तिप्रसृतवचसां दर्शिता संग्रहेण ।
क्षेमेन्द्रेण प्रणयिविपदां हर्तुराश्चर्यकर्तु-
र्भूभृद्भर्तुर्भुवनजयिनोऽनन्तराजस्य राज्ये ॥ ४० ॥

इति श्रीप्रकाशेन्द्रात्मजव्यासदासापरनामश्रीक्षेमेन्द्रविरचिते सुवृत्ततिलके वृत्तविनियोगो नाम तृतीयो विन्यासः ।

# [1]पण्डितराजश्रीजगन्नाथविरचिता
# [2]करुणालहरिः ।

विषीदता नाथ विषानलोपमे विषादभूमौ भवसागरे [3]विभो ।
परं प्रतीकारम[4]पश्यताधुना मयायमात्मा भवते निवेदितः ॥ १ ॥
भवानलज्वालविलुप्तचेतनः शरण्य तेऽङ्घ्रिं शरणं भयादयाम् ।
विभाव्य भूयोऽपि दयासुधाम्बुधे विधेहि [5]मे नाथ यथा यथेच्छसि ॥ २ ॥
विहाय संसारमहामरुस्थलीमलीकदेहादिमिलन्मरीचिकाम् ।
मनोमृगो मे करुणामृताम्बुधे विगाढुमीश त्वयि गाढमीहते ॥ ३ ॥
त्वदङ्घ्रिफुल्लाम्बुजमध्यनिर्गलन्मरन्दनिःस्यन्दनितान्तलम्पटः ।
मनोमिलिन्दो मम मुक्तचापलस्त्वदन्यमी[6]शान तृणाय मन्यते ॥ ४ ॥
जगत्रयत्राणविधौ [7]धृतव्रतं तवाङ्घ्रिराजीवमपास्य ये जनाः ।
शरण्यमन्यन्मृगयन्ति यान्ति ते नितान्तमीशान कृतान्तदेहलीम् ॥ ५ ॥
रमासुखाम्भोजविकासनक्षमो जगत्रयोद्बोधविधानदीक्षितः ।
कदा मदज्ञानविभावरीं हरे हरिष्यति त्वन्नयनारुणोदयः ॥ ६ ॥
[8]सुरासुरस्वान्तचकोरचुम्बिता समस्तसंतापचयापनोदिनी ।
महानिशीथे मम मानसे कदा स्फुरिष्यति [9]त्वन्मुखचन्द्रचन्द्रिका ॥ ७ ॥

---

१. श्रीजगन्नाथपण्डितेन पण्डितराजपदवी दिल्लीप्रभोः शाहजहांतः प्राप्तेति तत्कृत-'आसफविलास'नामकग्रन्थोपोद्घाततोऽवगम्यते । यथा—'अथ सकललोकविस्तारविस्तारितमहोपकारपरम्पराधीनमानसेन, प्रतिदिनमुद्यदनवद्यगद्यपद्याद्यनेकविद्याविद्योतितान्तःकरणैः कविभिरुपास्यमानेन, कृतयुगीकृतकलिकालेन, कुमतितृणजालसमाच्छादितवेदवनमार्गविलोकनाय समुद्दीपितसुतर्कदहनज्वालाजालेन, मूर्तिमतेव नव्वावासफखानमनःप्रसादेन, द्विजकुलसेवाहेवाकिवाङ्मनःकायेन, माथुरकुलसमुद्रेन्दुना, रायमुकुन्देनादिष्टेन, सार्वभौमश्रीशाहजहांप्रसादाधिगतपण्डितराजपदवीविराजितेन, तैलङ्गकुलावतंसेन, पण्डितजगन्नाथेनासफविलासाख्येयमाख्यायिका निरमीयत । सेयमनुग्रहेण सहृदयानामनुदिनमुल्लासिता भवतात्'. जगदाभरणकाव्ये पण्डितराजेन वर्णितो दाराशाहोऽस्यैव शाहजहांमहीपतेर्ज्येष्ठः सूनुरासीत्'. २. केषुचित्पुस्तकेषु 'विष्णुलहरिः' इत्यस्य ग्रन्थस्य नाम वर्तते. ३. 'हरे' इति पाठः. ४. 'अपास्यता' इति पाठः. ५. 'तन्नाथ इति पाठः. ६. 'ईशं न' इति पाठः. ७. 'धुरंधरम्' इति पाठः. ८. मुनीन्द्रचित्तैकचकोरजीविका' इति पाठः. ९. '[illegible]' इति पाठः.

सुयौवनापाण्डुरगण्डमण्डलप्रतिस्फुरत्कुण्डलताण्डवाङ्कुतम् ।
गदाग्रज त्वन्मुखफुल्लपङ्कजं कदा मदक्ष्णोरतिथीभविष्यति ॥ ८ ॥
सुरापगातुङ्गतरङ्गचालितां सुरासुरानीकललाटलालिताम् ।
कदा दधे देव दयामृतोदधे भवत्पदाम्भोरुहधूलिधोरणीम् ॥ ९ ॥
[1]महाजवाश्छिन्नविवेकरश्मयो मदोद्धता देव मदक्षवाजिनः ।
[2]हरे समासाद्य तवाङ्घ्रिमन्दुरामपास्तवेगा दधतां सुशीलताम् ॥ १० ॥
पुरातनानां वचसामगोचरं महेशितारं पुरुषोत्तमं पतिम् ।
अपास्य तं त्वां निरपत्रपा सती [3]सती मतिर्मे कथमन्यमेष्यति ॥ ११ ॥
[4]न जाग्रता स्वप्नगतेन वा मया समीहितं ते करुणालवादृते ।
गिरं मदीयां यदि वेत्सि तात्त्विकीं तदा जगन्नायक मामुरीकुरु ॥ १२ ॥

[5]अयि दीनतरं दयानिधे दुरवस्थं सकलैः समुज्झितम् ।
अधुनापि [6]न मां निभालयन्भजसे हा कथमश्मचित्तताम् ॥ १३ ॥
सुमहन्ति जगन्ति बिभ्रतस्तव यो नाविरभून्मनागपि ।
स कथं [7]परमाप्त देहिनां परमाणोर्मम धारणे श्रमः ॥ १४ ॥
नितरां विनयेन पृच्छते सुविचार्योत्तरमत्र यच्छ मे ।
करितो गिरितोऽप्यहं गुरुस्त्वरितो नोद्धरसे यदद्य माम् ॥ १५ ॥
न धनं न च राज्यसंपदं नहि विद्यामिदमेकमर्थये ।
मयि धेहि मनागपि प्रभो करुणाभङ्गितरङ्गितां दृशम् ॥ १६ ॥
अयमत्यधमोऽपि [8]निर्गुणो दयनीयो भवता दयानिधे ।
वमतां फणिनां विषानलं किमु [9]नानन्दयिता हि चन्दनः ॥ १७ ॥
क्षुधितस्य नहि त्रपास्ति मे प्रतिरथ्यं प्रतिगृह्णतः कणान् ।
अकलङ्क यशस्करं न ते भवदीयोऽपि यदन्यमृच्छति ॥ १८ ॥

---

१. 'मनोजवाः' इति पाठः. २. 'अलम्' इति पाठः. ३. 'सरस्वती मे' इति पाठः. ४. 'न जाग्रति स्वप्नदशान्तरेऽपि वा परं विजाने तव पादपङ्कजात् । इति स्म सत्यं यदि भाषितं मया क(त)दा जगन्नायक मामुरीकुरु ॥' इति पाठः. ५. 'इति' इति पाठः. ६. 'अनिभालयन्निमम्' इति पाठः. ७. 'परमात्मदेहिनः' इति पाठः. ८. 'दुर्गुणो मदनीयः' इति पाठः. ९. 'नानन्दयतीह' इति पाठः.

नितरां नरकेऽपि सीदतः किमु हीनं गलितत्रपस्य मे ।
भगवन्कुरु सूक्ष्ममीक्षणं परतस्त्वां जनता किमालपेत् ॥ १९ ॥
नरके निजकर्मकल्पिता भजतो मे महतीरपि व्यथाः ।
इदमेकमसह्यमीक्षका यदनाथं निगदन्ति मां विभो ॥ २० ॥
मृगदन्तिमुखान्मया सह प्रतिरुद्धान्भवजालबन्धने ।
तव मामपहाय मुञ्चतः करुणा किं न भिनत्ति मानसम् ॥ २१ ॥
निरुपाधिजनार्तिहारिणं भगवंस्त्वामवगत्य तत्त्वतः ।
कृतपुण्यचयावहेलनं कथमब्जेक्षण मामुपेक्षसे ॥ २२ ॥
सततं निगमेषु शृण्वता वरद त्वां पतितानुपावनम् ।
पुरु पापमुपास्यतेऽनिशं त्वयि विश्वासधिया मया विभो ॥ २३ ॥
सुकृतं न कृतं पुरा कदाप्यथ सर्वं कृतमेव दुष्कृतम् ।
अधुना गलितह्रिया मया भगवंस्त्वां प्रति किं निगद्यताम् ॥ २४ ॥
मदकामविमोहमत्सरा रिपवस्त्वत्पुर एव विह्वलम् ।
धृतशार्ङ्गगदारिनन्दक प्रतिकर्षन्ति कथं न लज्जसे ॥ २५ ॥
अयि गर्तमुखे गतः शिशुः पथिकेनापि निवार्यते जवात् ।
जनकेन पतन्भवार्णवे न निवार्यो भवता कथं विभो ॥ २६ ॥
सुकृतप्रिय मान्यथास्तु ते सुकृतिभ्यः सुखदस्य सुप्रथा ।
अपि पापमबिभ्रतस्तु मां तव विश्वंभरनाम दुर्लभम् ॥ २७ ॥
वचनैः पुरुषैरिह प्रभो यदि रोषं समुपागतोऽसि मे ।
मुखरं कृतकोटिकल्मषं करुणाब्धे जगतोऽपसारय ॥ २८ ॥
यदि वीक्ष्य ददासि मत्कृतिं न मयैव प्रतिगृह्यते तदा ।
अथ चेन्निजमाशयं प्रभो परितुष्टः शिरसा वहामि तत् ॥ २९ ॥
पतितोऽप्यतिदुर्गतोऽपि सन्नकृतज्ञो निखिलागसां पदम् ।
भवदीय इतीरयंस्त्वया दयनीयस्त्वपयैव केवलम् ॥ ३० ॥

---

१. 'नग' इति पाठः. २. 'अवबुध्य' इति पाठः. ३. 'पुण्यरस' इति पाठः. ४. 'बुध्यसे' इति पाठः. ५. 'अपि' इति पाठः. ६. 'इत्यथास्तु' इति पाठः. ७. 'सुखदस्य' इति पाठः. ८. 'तदा परितुष्यन्' इति पाठः. ९. 'त्वपनीय' इति पाठः.

सुकृतप्रकृतौ जने त्वया कृतया किं कृपया कृपानिधे।
यदि मादृशि सा विधीयते तव कीर्तिर्वद कीदृशी तदा ॥ ३१ ॥
अयि शैशवलालितः शिशुः प्रतिबुद्धो जनकेन ताड्यते।
न [1]कदापि च लालितस्त्वया किमु ताड्यो भगवन्कुकर्मभिः ॥ ३२ ॥
अहमेव हि दोषदूषितो भगवंस्त्वां समुपालभे मुधा।
रमणीविरहज्वरज्वलन्नमृतांशुं कुमतिर्विनिन्दति ॥ ३३ ॥
करुणाकर दुर्दशाकुलं पतितालम्बन पापपञ्जरम्।
अमृताम्बुनिधे महाज्वरं नहि जह्या जगदीश जातु माम् ॥ ३४ ॥
कटुजल्पनमल्पकस्य मे नहि ते कल्पयतु क्रुधं विभो।
कुपितातुरबालभाषितं किमु[2] गृह्णन्ति मनाङ्महाशयाः ॥ ३५ ॥
भुजगाहितकल्पितध्वजं स्फुरदाशाभुजगालिवेल्लितम्।
जटिलज्वरकुञ्जराङ्कुश ज्वरजुष्टं न जहीहि जातु माम् ॥ ३६ ॥
[3]न वदामि न दुष्कृतं मया कृतमित्युक्तिमिमां तु मे शृणु।
मम भीतिमनीनशद्विभो पतितोद्धारक नाम तावकम् ॥ ३७ ॥
अपि शर्वपितामहादिभिर्भजनीयः पुरुषोत्तमो हि[4] यः।
तमुपालभमानमुद्धतं धिगिमं मां धिगिमां धियं मम ॥ ३८ ॥
अथ सर्वमिदं मयोज्झितं भवतोऽन्यन्नहि किंचिदर्थये।
[5]मम मानसगोचरीभवत्वरविन्दाक्ष तवाद्भुतं वपुः ॥ ३९ ॥
[6]हरिनीलमयावनीतले वरवृन्दाविपिने विलासिनि।
मणिमण्डपमध्यविस्फुरद्विबुधक्ष्मारुहमूलमाश्रितम् ॥ ४० ॥
शिखिपिच्छमहामणिस्फुरन्मुकुटाकुञ्चितकान्तकुन्तलम्।
[7]कमनीयतरालकावलिभ्रमणभ्राजिललाटसुन्दरम् ॥ ४१ ॥

---

१. 'कदाप्यनु' इति पाठः. २. 'नहि' इति पाठः. ३. अयं श्लोक आर्यमित्रमासिकपुस्तकमुद्रितकरुणालहर्यां नास्ति. ४. 'अपि' इति पाठः. ५. 'अपि दर्शय मे दयानिधे हरचेतोहरणं वपुस्तव' इत्युत्तरार्धे पाठभेदः. ६. 'स्फुटरत्नमय' इति पाठः. ७. 'अतिनीलघनालकावलिभ्रमणभ्राजि ललाटपट्टले' इत्युत्तरार्धे पाठभेदः.

शरदिन्दुसहोदराननं [1]दलदम्भोजपलाशलोचनम् ।
अरुणाधरकान्ति[2]दन्तुरस्फुटदन्तांशुविकासिताम्बरम् ॥ ४२ ॥
दरपाण्डुरगण्डमण्डल[3]प्रतिसर्पत्कमनीयकुण्डलम् ।
मणिमौक्तिकमञ्जुमञ्जरीमहनीयद्युतिरञ्जितश्रुति ॥ ४३ ॥
पृथु[4]वर्तुलमौक्तिकावलीसुषमावेल्लितकान्तकंधरम् ।
[5]हरिनीलगिरिद्युतिद्रुहा कमलामन्दिरवक्षसाञ्चितम् ॥ ४४ ॥
चरणाब्जनखावलम्बिनीं भुजगाकारभुजान्तरागताम् ।
[6]निबिडाभ्रमिव क्षणप्रभां बृहदुत्फुल्लवनामलस्रजम् ॥ ४५ ॥
मणिकङ्कणकान्ति[7]मांसलं दरफुल्लाम्बुजसुन्दरद्युति ।
पतितोद्धरणे [8]दृढव्रतं कमनीयं करयोर्युगं दधत् ॥ ४६ ॥
[9]वररत्नमयाङ्गुलीयकावलिशोभामिलिताङ्गुलीगणैः ।
मुहुराकुलितेन वेणुना वशयत्[10]प्राणभृतां मनःश्रुतीः ॥ ४७ ॥
उदरद्युतिनिम्नगोच्छलल्लहरीरूपकरोमराजिकम् ।
पशुपालविलासिनी[11]लसन्नयनाकर्षणनाभिनिम्नितम् ॥ ४८ ॥
कनकद्रवगौरमम्बरं [12]दधतोरुद्वितयेन सुन्दरम् ।
उदयन्मणिनूपुरप्रभासरणिश्रेणिजटालजानुकम् ॥ ४९ ॥
[13]अरिगीर्णगजेन्द्रगोपने दधता जाङ्घिकतामलौकिकीम् ।
त्रिजगन्महनीयमूर्तिना वरजङ्घायुगलेन शोभितम् ॥ ५० ॥
कुलिशाङ्कुशक[14]म्बुसाम्बुजध्वजचक्राद्यभिरामलक्ष्मणा ।
अरुणारुणकोमलत्विषा कमनीयेन तलेन राजितम् ॥ ५१ ॥

---

१. 'स्फुरत्' इति पाठः. २. 'दन्तुरम्' इति पाठः. ३. 'प्रतिशंसत्' इति पाठः. ४. 'वर्तित' इति पाठः. ५. 'तुलसीनवमञ्जरीरजःपटलोल्लासितवक्षसा' इति पाठः. ६. 'चपलामनुशायिनीमिवोद्वहदुत्फुल्ल' इति पाठः. ७. 'भागलम्' इति पाठः. ८. 'धुरंधरम्' इति पाठः. ९. 'नवरत्नमयाङ्गुलीयकप्रतिभापिञ्जरिताङ्गुलीगणैः' इति पाठः. १०. 'चारु चराचरान्तरम्' इति पाठः. ११. 'मिलन्नयनाकर्षणरश्मिभिर्नतम्' इति पाठः. १२. 'दधदूरु' इति पाठः. १३. 'अतिजीर्ण' इति पाठः. १४. 'वारिजध्वजाम्बुजचक्रा' इति पाठः.

विधिशर्वमुखा[1]मरस्फुरन्मुकुटोन्निन्द्रमणिप्रभा[2]कुलम् ।
नखचन्द्रमयूखमूर्च्छिताखिलतापं पदयोर्युगं दधत् ॥ ५२ ॥
सरतः सरणौ सतो बहिः स्वपतो वालपतो गृहान्तरे ।
वपुरीदृशमीश तावकं हृदयालम्बनमस्तु मे सदा ॥ ५३ ॥ (कुलकम्)
[3]नवनीरदनीलिमद्युतिर्नमनीयो[4] निगमैर्निरन्तरम् ।
निरये[5] निपतन्तमाशु मां नयनेनापि सनाथयेद्विभुः ॥ ५४ ॥
प्रणिपत्य हरे भवन्तमद्धा विनिबद्धाञ्जलिरेकमेव याचे ।
जनुरस्तु कुले कृषीवलानामपि गोविन्दपदारविन्दभावः ॥ ५५ ॥
[6]वाचा निर्मलया सुधामधुरया यां[7] नाथ शिक्षामदा-
स्तां स्वप्नेऽपि न संस्मरा[8]म्यहमहंभावावृतो निस्त्रपः ।
इत्यागःशतशालिनं पुनरपि स्वीयेषु मां बिभ्रत-
स्त्वत्तो नास्ति दयानिधिर्यदुपते मत्तो न मत्तः परः ॥ ५६ ॥
पातालं व्रज याहि वा सुरपुरीमारोह मेरोः शिरः
पारावारपरम्परां तर तथाप्याशा न शान्ता[9] तव ।
आधिव्याधिजरापराहत यदि क्षेमं निजं वाञ्छसि
श्रीकृष्णेति रसायनं रसय रे शून्यैः किमन्यैः श्रमैः ॥ ५७ ॥
वज्रं पापमहीभृतां भवगदोद्रेकस्य सिद्धौषधं
मिथ्याज्ञाननिशाविशालतमसस्तिग्मांशुबिम्बोदयः ।
क्रूरक्लेशमहीरुहामुरुतरज्वालाजटालः शिखी
द्वारं निर्वृतिसद्मनो विजयते कृष्णेति वर्णद्वयम् ॥ ५८ ॥
विशालविषयाटवीवलयलग्नदावानल-
प्रसृत्वरशिखावलीविकलितं मदीयं मनः ।

---

१. 'अमरावलीमुकुटोन्निद्र' इति पाठः. २. 'आविलम्' इति पाठः. ३. अयं श्लोक आर्यमित्रपुस्तके नास्ति. ४. 'नवनीयः' इति पाठः. ५. 'निरयं निरयन्तम्' इति पाठः. ६. वाचेत्यादि श्लोकचतुष्टयमार्यमित्रपुस्तके नास्ति. वाचेत्यादि श्लोकपञ्चकं भामिनीविलासेऽप्यस्ति. ७. 'माम्' इति पाठः. ८. 'संस्पृशामि' इति पाठः. ९. 'शाम्येत्' इति पाठः.

अमन्दमिलदिन्दिरे निखिलमाधुरीमन्दिरे
मुकुन्दमुखचन्दिरे चिरमिदं चकोरायताम् ॥ ५९ ॥
सुरस्रोतस्विन्याः पुलिनमधितिष्ठन्नयनयो-
र्विधायान्तर्मुद्रामथ सपदि विद्राव्य विषयान् ।
विधूतान्तर्ध्वान्तो मधुरमधुरायां चिति कदा
निमग्नः स्यां कस्यांचन नवनभस्याम्बुदरुचि[1] ॥ ६० ॥

इति पण्डितराजश्रीजगन्नाथविरचिता करुणालहरिः समाप्ता ।

---

## महाकविश्रीशंभुविरचिता
## अन्योक्तिमुक्तालता ।

मानं मुञ्च विपञ्चि पञ्चमरवन्यक्कारपारंगमा
मा भूवन्कलकण्ठकण्ठकुहरे कुण्ठक्रमास्ते गिरः ।
प्राप्तः पञ्चशरप्रपञ्चशरणं यद्भृङ्गभङ्गीगुरु-
र्बन्धूकप्रियबान्धवो[2] धवलितश्यामाधवो माधवः ॥ १ ॥
हेला[3]क्रान्तहरिन्ति कुन्तलवधूवेणीर्हरि[4]न्ति स्फुटं
भिन्दन्नेष तमांसि लोचनसुधावल्लस्तमीवल्लभः ।
पश्योद्गच्छति हारिकीरतरुणीहारानुकारैः करै-
रोंकारं[5] कुरु कैरवाकर निजोन्मेषेषु योग्यः क्षणः ॥ २ ॥
सत्यं सन्ति कियन्ति सन्ति[6] न सखे रत्नानि रत्नाकरे
संजातस्तु स वस्तुतः स्तुतिकथापात्रं परं कौस्तुभः ।
यो जातः सरकेलिलोलकमलासोल्लासदोःकन्दली-
लीलालिङ्गनभाजनं भगवतो वक्षःस्थले शार्ङ्गिणः ॥ ३ ॥

---

१. अस्माच्छ्लोकादग्रे आर्यमित्रपुस्तके 'इमां वै विष्णुलहरीं जगन्नाथेन निर्मिताम् । यः पठेत्तस्य सर्वत्र जायन्ते जयसंपदः ॥' अयं फलश्रुतिश्लोकोऽपि वर्तते. अन्यपुस्तकेषु तु न प्रोक्तः. २. मेघराहित्यादुज्ज्वलीकृतचन्द्रः. ३. हेलयाक्रान्तदिङ्मण्डलानि. ४. श्यामवर्णानि. ५. आरम्भम्. 'प्रतीचीसिन्धुवीचीव दिनोंकारे सुधाकरम्' इति नैषधीयकाव्यम् (२०।२). 'दिनोंकरे दिनप्रारम्भे' इति तट्टीकायां मल्लिनाथनारायणौ. ६. समीचीनानि.

पातालं च नभस्तलं च गरिमद्वारेण यद्वारिणा
पूरंपूरमपूरि यस्य बहुलं कल्लोलकोलाहलः।
देवो येन स कच्छपोऽपि कलितः कच्छेऽपि तस्याम्भसां
भर्तुर्गोष्पदमात्रपूरणविधौ नो विस्मयो न स्मयः॥ ४॥
उत्फुल्लैर्बकुलैर्लवङ्गमुकुलैः शेफालिकाकुड्मलै-
र्नीलाम्भोजकुलैस्तथा विचकिलैः क्रान्तं च कान्तं च यत्।
तस्मिन्सौरभधाम्नि दाम्नि किमिदं सौगन्धवन्ध्यं मुधा
मध्ये मुग्ध कुसुम्भमुम्भसि भवेन्नैवैष युक्तः क्रमः॥ ५॥
यस्मिन्नङ्कुरितं कुरङ्गकदृशां प्रेम्णा किमन्यद्ध्रुवं
यत्रास्ते मदनस्य लुप्तरमणीमग्नक्रमो विक्रमः।
पक्कं नागरखण्डपल्लवमिदं जाल्मैः फलश्रीदल-
भ्रान्त्या हन्त न वीक्षितं न कलितं नास्वादितं नादृतम्॥ ६॥
केनात्र कर्कशकरीरवनान्तराले
बाले बलाद्बकुलकन्दलि रोपितासि।
यत्राप्नुयुर्मधुलिहस्तव कोमलानि
नो कुड्मलानि न दलानि न कन्दलानि॥ ७॥
धत्ते कीरवधूरदच्छदसुधामाधुर्यमुद्रां रसो
येषां सा परिपाकसंपदपि च क्षौद्रद्रवद्रोहिणी।
तेषां पुण्ड्रककाण्ड पाण्डिमजुषां त्वत्पर्वणां चर्वणां
किं मुग्धाः करभा मुधैव विरसा विन्दन्ति निन्दन्ति च॥ ८॥
मद्गुमाद्यति यत्र यत्र भजते भङ्गिं बको यत्र स
क्रौञ्चः किं च मदादुदञ्चति सरस्तन्मुञ्च कोऽयं ग्रहः।
आस्ते बालमरालसालसलसद्दिक्कुञ्जरं पार्वती-
कर्णोत्तंसितकाञ्चनाब्जमुकुलं यन्मानसं ते सरः॥ ९॥
श्रीसंकेतनिकेत केतक कुरु त्वं कुड्मलाडम्बरं
हे नीप स्मरदीप दीपय तनौ टङ्कं नवैरङ्कुरैः।

१. 'उम्भपूरणे'. २. पुण्ड्रक इक्षुभेदः.

स्नेहस्नातपुरंध्रिकुन्तललताकान्तिः करोत्यम्बरे
नीरोद्गारगभीरधीररसितप्रारम्भमम्भोधरः ॥ १० ॥
गुर्वीमुर्वीतिलक तिलक स्वीकुरु स्वामभिख्यां
रूपं लक्ष्मीनगर तगर श्लाघ्यमुन्मीलयेथाः।
भङ्गीमङ्गीकुरु रतिपतेर्मल्लि हे चूतवल्लि
प्रक्रान्तोऽयं विषमरमणीमानजैत्रः स चैत्रः ॥ ११ ॥
अद्रिद्रोण्यां निवस दिवसं जातलीलानुषङ्गै-
रङ्गैर्मा[1] स स्मयतरलितैरङ्ग सारङ्ग रङ्गः।
दर्पद्वारं द्विरदकदनोदग्रपाणिर्यदग्रे
प्रत्यासन्नो वनविहरणक्रीडया कुञ्जरारिः ॥ १२ ॥
कान्तिं केतककोरकद्युतिसखीं राकामृगाङ्कस्य य-
च्चञ्चच्चञ्चु चुलुम्पति प्रतिदिनं प्रेम्णा चकोरार्भकः।
तन्मन्ये नयनामृतं रतिपतेर्मृत्युंजयेनार्थिना
तेनेदं रमणीकपोलफलके लावण्यमालोकितम् ॥ १३ ॥
आस्ते रोहत्कनककमले केलिपात्रे मृडान्याः
खेलन्हेलोन्मदमधुकरीमानसे मानसे यः।
भेकोद्रेकप्रणयिनि वलद्वालजम्बालजाले
स स्यादुत्कः परिमितजले पल्वले किं मरालः ॥ १४ ॥
द्यां च क्ष्मां च गतं यदम्बुशिखरैराक्रान्तनाकोऽप्यसौ
मेनाकोऽपि न कोऽपि यत्र दयितं यः सद्म पद्मापतेः।
लोलद्वालकुलीरकम्पकलया देवस्य तस्याम्भसां
भर्तुः कस्य कदा कियान्क नु ननु क्षोभो दृशोर्गोचरः ॥ १५ ॥
गर्वं खर्वं कुरु कररुहोदञ्चनं मुञ्च कण्ठे
कुण्ठः कण्ठीरव तव रवः किं च संकोचमेतु।
शक्तः सप्ताम्बुनिधिपरिखामेखलामेष गुर्वी-
मुर्वीं वोढुं मदजलसरित्संगतो दिग्मतङ्गः ॥ १६ ॥

---

१. 'रंगि गतौ'.

चूतं चर्वय चम्पकं चर नवां वासन्तिकामन्तिका-
न्मा मा मुञ्च सविभ्रमं भ्रमर हे सङ्गं लवङ्गे कुरु ।
एकः कार्मुककर्मनर्मणि सखा देवस्य कान्तागुरोः
प्रक्रान्तः प्रमदामदावहवहन्मन्दानिलो माधवः ॥ १७ ॥
उत्कण्ठाकुलमस्तु कण्टककुले संजायतां ते मनः
सानन्दं पिचुमन्दकन्दलदलास्वादेषु का वा क्षतिः ।
एतत्किं तु तव क्रमेलक कथंकारं सहे दुःसहं
तस्मिन्पुण्ड्रककन्दलीकिसलये येनासि निन्दापरः ॥ १८ ॥
शान्तं कान्तपुरंध्रिकुन्तललतालावण्यचौरं तमः
पश्यारोहति पूर्वपर्वतशिखामम्भोजिनीवल्लभः ।
एवं का गणना तवाद्य हि रतावद्योतखद्योत हे
दूर्वाकाण्डतले दिनं नय सखे खर्वोऽस्तु गर्वग्रहः ॥ १९ ॥
अत्रोन्मीलति मालती सितमितो मल्ली समालम्बते
तद्रोलम्ब विडम्बनाय नलिनीं किं यासि कोऽयं क्रमः ।
एतस्यामपि दर्दुरैरपि बकैरेकैकमुट्टङ्किते
गीते कुण्ठित एव कण्ठकुहरे जायेत ते पञ्चमः ॥ २० ॥
आश्चर्यैकनिधिः स दुग्धजलधिर्मन्ये किमन्यद्यतो
लेभे जन्म स लोकलोचनसुधासारस्तुषारद्युतिः ।
देवीकेलिकचग्रहेण ललिते गङ्गातरङ्गाङ्किते
निःशङ्कं निरटङ्कि शंकरजटाजूटेऽपि येन स्थितिः ॥ २१ ॥
कुन्दे कन्दलितादरः सरसिजे संजातकौतूहलः
कह्लारे कलितस्पृहः किमपरं यः केतके कौतुकी ।
निर्माता किममर्त्यराजतरुणीलीलावतंसश्रियो
योग्यस्तस्य मधुव्रतस्य ललिताकल्पः स कल्पद्रुमः ॥ २२ ॥
शुभ्रो वा मलिनोऽस्तु वा मृगमदः किं तावता तादृशः
कोऽप्यस्यानवधिश्चमत्कृतिनिधिः सौगन्ध्यमेको गुणः ।

येनैव स्मरविभ्रमैकवसतिर्भाले कपोलस्थले
दोर्मूले कुचमण्डले च कुरुते रङ्गं कुरङ्गीदृशाम् ॥ २३ ॥

शान्तध्वान्तकलङ्क शंकरशिरोरत्न त्वमेणाङ्क चे-
त्कंदर्पाङ्कुरकन्द कुन्दकलिकाकारैः करैरुद्गतः ।
तत्किं मीलितमम्बुजैर्विदलितं किं दन्तिदन्ताङ्कुरै-
र्भङ्गः किं नु तथा रथाङ्गमिथुनैः प्रत्यङ्गमङ्गीकृतः ॥ २४ ॥

झम्पामस्तगिरेः करोतु भजतां विष्णोः पदं गाहतां
क्षामाङ्गो गिरिजाभुजंगमुकुटोत्सङ्गेऽपि गाङ्गं पयः ।
एष क्लाम्यति केवलं कुमुदिनीकान्तो नहि त्वन्मुखे
शङ्के किंकरतां नताङ्गि लभते दूरोऽस्तु साम्यक्रमः ॥ २५ ॥

येनाप्तः कमलाविलासकमले किंजल्कपानोत्सवो
यो लीलां वितनोति नाभिनलिनोत्सङ्गे तथा शार्ङ्गिणः ।
तस्य स्यात्कुसुमान्तरे मधुलिहः कुत्राप्यहो न स्थिति-
र्न प्रीतिर्न रतिर्न केलिसमयो नो विस्मयो न स्मयः ॥ २६ ॥

अप्येतानि चुलुम्पितानि चुलकन्यायेन येन क्षणा-
त्पारावारपयांसि येन विदधे विन्ध्योऽपि वन्ध्याकृतिः ।
सोऽपि क्वाऽपि भवत्तटे निवसति त्रैलोक्यमान्यो मुनि-
स्तन्मन्ये तव नास्ति रोहण परः स्पर्धापरः क्ष्माधरः ॥ २७ ॥

रोहत्सौरभविभ्रमाणि कमलासद्मानि पद्माकरे
पद्मान्यत्र कियन्ति सन्ति नु नतिः का तेषु का वा नुतिः ।
तत्साक्षादरविन्दमद्भुतलताकन्दं तु वन्देमहि
त्रैलोक्यप्रभवः पुरा समभवद्यस्मात्पुराणः कविः ॥ २८ ॥

---

१. चन्द्रिकायां हस्तिदन्ता विदलन्तीति कविसंप्रदायः 'कवाटिदन्तैर्विस्फोटश्चन्द्रकान्तैः सिरोद्गमः । श्वयथुः पयसां पत्या दधे राज्युदयोन्मुखे' (८।३२४४)इति, 'महेभांस्तापयत्यर्कः कुर्याद्भ्रमरदान्विधुः' (८।३३९२) इति च राजतरङ्गिणी. कवाटिनो गजाः राशि चन्द्रे. २. अगस्त्यः. ३. लक्ष्मीगृहाणि. ४. ब्रह्मा.

किं ताभिर्विततामिरद्भुतकथाकन्थाभिरेतावता
वन्द्योऽयं विभुरम्भसां समभवद्रत्नं यतः कौस्तुभः।
चक्रे लग्नरमाघनस्तनतटीकर्पूरपत्राङ्कुरे
यः श्रीवत्समनोहरे हृदि धृतिं देवस्य दैत्यद्रुहः॥ २९॥
नानन्दं मुचुकुन्दकुड्मलकुले नो केतके कौतुकं
नोत्फुल्ले कुमुदे मदं न कुटजे कौटुम्ब्यमालम्बते।
चोलीदन्तचतुष्किकाशुचिरुचिस्मेरां स्मरन्मालतीं
किं त्वास्ते तरुकोटिकोटरकुटीबद्धास्पदः षट्पदः॥ ३०॥
अस्तं यातस्तिमिरपटलीदत्तभङ्गः पतंगः
प्राप्तो नैवोदयगिरिशिरोमूलमेणावचूलः।
तत्ते कालं कतिपयमयं भाति खद्योतपोतं
द्योतं द्योतं पुनरपि पुनर्द्योततां को विलम्बः॥ ३१॥
पुष्पोत्करेषु च फलेषु च सावलेप-
स्त्वं कन्दलेषु च दलेषु च सावहेलः।
किं मुग्ध दग्धमकरोः सुरभेरगार-
मङ्गारकार सहकारमकारणेन॥ ३२॥
याच्यस्ते खदिरः करीरविटपः सेव्योऽपि किं कुर्महे
मार्गः संगत एष ते खरतरुर्यद्भैरवो मारवः।
तन्मल्लीमुकुलं तदुत्पलकुलं सा यूथिकावीथिका
चङ्ग[1] तच्च लवङ्गमङ्ग भवतो हा भृङ्ग दूरं गतम्॥ ३३॥
लीनः क्ष्माधरकंदरासु रचयन्कापि स्थितिं भङ्गुरै-
रङ्गैरङ्ग कुरङ्ग रङ्गसि कथंकारं विकाराकुलः।
प्राप्तः पश्य विचेतुमुद्भटसटाटोपः सकोपः स्वयं
गर्जत्कुञ्जरपुञ्जभञ्जनपटुः पञ्चाननः काननम्॥ ३४॥

---

१. सुन्दरम्.

एताः केरलसुन्दरीरदरुचः सन्त्येव मुक्तालता
मल्लीमाल्यमयानि सौरभभरोद्दामानि दामानि च ।
किं नीतः शितिकण्ठ कण्ठनिकटं गौरीभुजाकन्दली-
लीलालिङ्गनयोग्यमुग्रगरलग्रामः फणिग्रामणीः ॥ ३५ ॥

सोढं येन पयोभृतां दिवि दलन्नीलारविन्दद्युतां
नैवोत्तुङ्गमृदङ्गनादविजयि क्वाप्यूर्जितं गर्जितम् ।
वारंवारमुदारवारणरणव्यापारपारंगमो
दृष्टः केन कुरङ्गसंगरविधौ कुण्ठः स कण्ठीरवः ॥ ३६ ॥

यत्केलिमन्थरमरालमरालबाल-
शेवालकोमलमलं विमलं मृणालैः ।
तत्पश्य शुष्यति सरः प्रसरत्तुषार-
रुद्धं विरुद्धविधिरेव विधिः किमन्यत् ॥ ३७ ॥

त्वय्युद्गच्छति को न बालकलिकाकान्तः कदम्बद्रुमो
रोलम्बाकुलकम्प्रकुड्मलकुलक्कान्तो न कः केतकः ।
दोषः किं तु तवाम्बुवाह कलुषैरुद्वेजितोऽयं जलै-
र्दूरं येन गतो गलत्कमलिनीलीलारसः सारसः ॥ ३८ ॥

रेमे यस्मिन्मधुपपटली यस्य लीलावतीभिः
क्लृप्तो बालैर्बहुलमुकुलैः केलिकर्णावतंसः ।
तस्य क्रीडाकुरबकतरोरङ्गके दुर्निवारः
स्फारं मुञ्चत्यहह दहनोद्गारमङ्गारकारः ॥ ३९ ॥

वीचीडम्बरमम्बरं नय बलाद्वेलावनालीमिमा-
मुद्यन्नल्पय किं च कल्पय रयात्कल्लोलकोलाहलम् ।
देवः कीरपुरंध्रिहारलतिकाकारैरुदारैः करैः
पश्योदेति समुद्र मुद्रिततमस्तोमस्तेमीवल्लभः ॥ ४० ॥

---

१. कुटिल. २. चन्द्र.

यस्य भ्राम्यन्मकरनिकरक्रान्तमूर्तेरसार-
स्तारक्षारव्यतिकरखरः सीकरोऽपि क्व पेयः।
तत्ते पाथः पवनजनितोत्तालकल्लोलजालं
ज्वालं ज्वालं ज्वलतु जलधे सर्वमौर्वानलेन ॥ ४१ ॥

निर्यातं तगरैः स्थितं कुरबकैरुज्जृम्भितं चम्पकैः
संजातं बकुलैः स्मितं विचकिलैरुन्मीलितं पाटलैः।
किं रोलम्ब विलम्बसे विहरणक्रीडां कुरु क्वापि ते
किं चोदञ्चतु वञ्चितामृतरसः पाकाञ्चितः पञ्चमः ॥ ४२ ॥

नासीर[1]द्रवनिर्झरैर्मृगमदस्यन्दैस्तथा चान्दनै-
र्निःस्यन्दैः सह वालवालवलये युक्तो निषेकक्रमः।
आस्तामेतदमुत्र मालति जलैः सेकोऽपि ते दूरतः
संनद्धो यदयं निबद्धजगतीदाहग्रहोऽवग्रहः ॥ ४३ ॥

केलिं कल्पय कोले[2]वाल लवलीवल्लीदलान्याहर-
न्नुल्लासैरभिगर्ज सैरिभ भज त्वं पङ्कतल्पोत्सवम्।
म्लानिं मुञ्च मयूर दूरय भयं दर्पाञ्चितः पञ्चतां
युष्मन्निर्मथनप्रपञ्चचतुरः प्राप्तः स पञ्चाननः ॥ ४४ ॥

कुञ्जे कोरकितं करीरतरुभिर्द्रेक्काभिरुन्मुद्रितं
यस्मिन्नङ्कुरितं करञ्जविटपैरुन्मीलितं पीलुभिः।
तस्मिन्पल्लवितोऽसि किं वहसि किं कान्तामनोवागुरा-
भङ्गीमङ्ग लवङ्ग भङ्गमगमः किं ना[3]सि कोऽयं क्रमः ॥ ४५ ॥

खेलद्बालमृगाङ्कमौलिरमणीदोःकन्दलान्दोलिते
पद्मासद्मनि मानसाम्बुनि पदं भेजे च रेजे च यः।
हा जम्बालकदम्बचुम्बिनि मदभ्राम्यद्बकालम्बिनि
भ्रष्टोऽल्पीयसि वापिकापयसि स त्रासालसः सारसः ॥ ४६ ॥

---

१. नासीरं कर्पूरम्. 'श्यामाकामुकमाधवादिविरसं नासीरकस्तूरिकाकाश्मीरादिनिरादरं मलयजालेपावलेपावहम्' इति स्तुतिकुसुमाञ्जलौ ( ३३।६ ) जगद्धरः. 'नासीरं घनसारः' इति तट्टीकायां रत्नकण्ठः. २. सूकरशिशो. ३. त्वम्.

अक्षामं मणिदाम संवृणु ननु त्वं दर्शयेथा मुहु-
र्मा मा मुग्धमनोहराः शशिकराकाराश्च हारस्रजः।
एषा वैकटिक[1] स्फुटैव पुरतः सा पामराणां पुरी
यस्यां काचललन्तिकाङ्क्षितकुचोत्सङ्गाः कुरङ्गीदृशः॥ ४७॥

यत्कर्णे च कुचान्तरे रचयितुं युक्तं कुरङ्गीदृशां
धत्ते धैर्यधुरां जगत्त्रयजयस्मेरः स येन स्मरः।
तन्मल्लीमुकुलं वनेऽत्र विजने केनापि नोत्तंसितं
नाघ्रातं न निरूपितं न कलितं नोदञ्चितं नोम्भितम्॥ ४८॥

यल्लीलातरला मरालशिशवः प्रेम्णा भजन्ते सरः
को वैरिञ्चिविमानहंस[2] भवतस्तस्मिन्निवासग्रहः।
यत्संक्रन्दनसुन्दरीकुचतटास्फालोच्छलद्बिन्दुनि
स्वच्छन्दं तव सिद्धसिन्धुसलिले[3] तत्रोचिताः केलयः॥ ४९॥

वापीं दूरे किरति कुरुते नो मृणालीषु लीलां
नीलाम्भोजं त्यजति भजते नाब्जकिंजल्ककेलिम्।
किं तु क्लान्तिं वहति नलिनीनाललग्नाग्रकण्ठः
क्षामः श्यामारमणकिरणव्याकुलाङ्गो रथाङ्गः॥ ५०॥

शोकात्कोककुलैरमीलि कमलैर्म्लायि दन्ताङ्कुरै-
रस्फोटि स्फटिकामलैः करटिनां[4] यस्मिन्नवासोदये।
तं दृष्ट्वैव कुरङ्गकेतनमहो[5] मुग्धः स दुग्धाम्बुधिः
किं मिथ्या नरिनर्ति चञ्चलवलत्कल्लोलदोःकन्दलः॥ ५१॥

तालीपल्लवपाकपाण्डिमसखी यत्कान्तिरन्तर्गतो
यत्कोऽपि प्रगुणो गुणः किमपरं यज्जन्म रत्नाकरात्।
युक्तो मौक्तिकहार हारिणि कचत्कर्पूरपत्राङ्कुरे
त्वत्सङ्गोऽयमनङ्गधामनि कुचोत्सङ्गे कुरङ्गीदृशाम्॥ ५२॥

---

१. हे रत्नवणिक्. २. हे ब्रह्मदेववाहन हंस. ३. गङ्गाजले. ४. हस्तिनाम्. ५. चन्द्रम्.

कुन्दे नन्दति कैरवे विहरते पङ्केरुहे रोहति
प्रेमाणं तगरे तनोति भजते सङ्गं लवङ्गेऽपि यत् ।
तन्मन्ये न ददर्श सौरभभरेणाक्रान्तदिक्कंदरं
कंदर्पैकविलासमन्दिरमिमं मन्दारमिन्दिन्दिरः ॥ ५३ ॥
कंदर्पैककृपाणवल्लरि वने कस्मादकस्मादियं
हे कालागुरुबालमञ्जरि हहा मोहादिह प्रारुहः ।
सह्यन्तामुपजातसौरभपरिष्वङ्गैस्तदङ्गैरिमाः
कान्तैः कान्तपुरंध्रिकुन्तलभरच्छायैः कुठारच्छिदः ॥ ५४ ॥
लीलावासः कुसुमधनुषः कोऽपि यस्याधिवासः
कुर्युर्यस्यास्तरुमुकुलकोसङ्गभङ्गं नताङ्ग्यः ।
सान्द्रे तस्मिन्नपि जडतया पङ्कशङ्कां वहन्तो
हन्त स्वान्तं मृगमदरसे पामरा नार्पयन्ति ॥ ५५ ॥
ऊढापि द्युतरङ्गिणि त्रिजगतीवन्द्येन तेनाप्यहो
मौलौ बालकुरङ्गकेतनकलालीलावतंसाङ्किते ।
तारक्षारकरं करालमकरं सभ्रमभ्रंकषं
मुग्धे जाड्यनिधिं मुधा जलनिधिं यातासि चित्राः स्त्रियः ॥५६॥
नीरं नीरसमस्तु कौपमिति तत्पाथो वरं मारवं
कासाराम्बु तदस्तु वा परिमितं तद्वास्तु वापीपयः ।
पाने मज्जनकर्मनर्मणि तथा बाह्यैरलं वारिधे
कल्लोलावलिहारिभिस्तव नभःसंचारिभिर्वारिभिः ॥ ५७ ॥
कान्तिर्यस्य विनिद्रनीलनलिनच्छायासखी सुभ्रुवां
यत्पङ्केऽपि मुदोऽस्ति यस्य सुरभिः कासां रसोऽगोचरः ।
अङ्गारार्थितया जनैरतिजडैरुड्डामरैः पामरैः
पश्यैष प्रगुणैर्गुणैरपि गुरुर्दग्धः स कालागुरुः ॥ ५८ ॥
एतैर्जातैः किमिह बहुभिर्भोगिभिः किं तु मन्ये
मान्यः कोऽपि प्रभवति जगत्येकशेषः स शेषः ।

१. हे गङ्गे. २. शिवेन.

यस्मिन्गौरीपृथुकुचतटीकुङ्कुमस्थासकाङ्के
येन स्थाणोरुरसि रहितो हारवल्लीविलासः ॥ ५९ ॥

यस्मिन्रोहति निम्बडम्बरभियान्यस्मिन्करीरद्रुमै-
रुद्रेकः कलितः पटोलपटली यत्रयमुन्मीलति ।
तस्मिन्नत्र निवेशितासि विपिने केनासि हा दुःसहः
सह्योऽयं सहकारमञ्जरि कथंकारं निकारज्वरः ॥ ६० ॥

द्वित्रान्वारिलवानवाप्य जलदादारम्भि संरम्भिभिः
क्रीडाताण्डवडम्बरः शिखिकुलैः केकारवव्याकुलैः ।
उन्मीलत्कनकाब्जचुम्बिनि सुधानिःष्यन्दिदुग्धाम्बुनि
प्राप्ते सारस मानसेऽपि भवता नैको विकारः कृतः ॥ ६१ ॥

चूतं मुञ्च त्यज सरसिजं भृङ्ग मा गा लवङ्गं
सङ्गं दूरीकुरु कुरवके केतके मा निषीद ।
लीलोत्तंसीकृतमुकुलकः स्वर्गसीमन्तिनीभि-
र्यत्ते दैवात्परिसरगतः पारिजातः स जातः ॥ ६२ ॥

पश्यैताः कति न स्फुरन्ति सरितः सान्द्रारविन्दच्छद-
च्छायाभिः शिशिराः खरातपविपन्निर्वापिका वापिकाः ।
माद्यन्मेदुरदर्दुरं बककुलैरप्याकुलं सेव्यते
तत्कस्मादविचार्य सारस रसान्निःसारनीरं सरः ॥ ६३ ॥

ब्रूमः किंचन जह्नुपुत्रि जडिमा कस्मादियान्स्वीकृतः
पाथोधाम्नि[1] कृतः करालमकरासङ्गेऽपि यत्संगमः ।
यन्मौलौ कलितं शशाङ्ककलिकाकान्ते वृषाङ्कस्य त-
त्पश्य स्वादु च हारदामशुचि च क्षारायते ते पयः ॥ ६४ ॥

ये तावन्ति पयः[2]पृषन्ति जलदादत्यन्तमुत्कण्ठिता
याचन्ते च नदन्ति च प्रतिपदं सन्त्येव ते बर्हिणः ।

१. समुद्रे. २. जलकणान्.

यः शूलाङ्कशिरःशशाङ्ककलिकापीयूषवर्षेऽप्यहो
नो जातः प्रणयी स तारकरिपोरन्ये पुनर्बर्हिणः[1] ॥ ६५ ॥

मुञ्चत्यन्तर्विचकिलरुचिं चूतवल्लीविलासं
मल्लीलीलां सरसिजरसं केतकीकौतुकं च।
जातप्रीतिर्बकुललतिकामुन्मिषत्कोरकान्तां
कान्तां किं तु श्रयति रचयन्पञ्चमं चञ्चरीकः ॥ ६६ ॥

उद्यद्विद्युति मेचकद्युतिभृति स्त्रीणां मनोमोहिनि
व्योमारोहिणि नीलकण्ठरमणीकेलिप्रदे वारिदे।
यासि क्वापि मरालबालक बककौञ्चाविले पल्वले
सह्यन्तां कतिचिद्वियुक्तवनितादत्तज्वरा वासराः ॥ ६७ ॥

अङ्गाट्टङ्किकया[2] कलङ्कमतसीनीलं लुनीहि स्वयं
सर्वां किं च निषिञ्च चन्दनरसस्यन्दैरमन्दैस्तनुम्।
उद्यन्नङ्ग कुरङ्गकेतन भवानेवं भवेद्भाजनं
जाने तामनुकर्तुमाननगतां भङ्गीं कुरङ्गीदृशः ॥ ६८ ॥

आनीतैरिषुकार कारणमिह श्लाघ्यैः किमेभिः शरैः
प्रख्यातामपि किं न पामरपुरीमेतां पुरः पश्यसि।
दात्रं पात्रमिति ब्रवीति कुरुते स्तोत्राणि तोत्रे रसं
धत्ते यत्र हले कुतूहलमपि ग्रामीणकग्रामणीः ॥ ६९ ॥

यल्लीलातरलैरलङ्घि कपिभिर्ज्वालाभिरौर्वानलो
यच्चक्राम यदाचचाम चुलकेनैकेन कुम्भोद्भवः।
तस्मिन्नेव नगेन्द्रनन्दन सखे हे पार्वतीसोदर
त्वं मेनाक जवाज्जले जलनिधेर्मज्जन्न किं लज्जितः ॥ ७० ॥

त्वं कालं नय कैरवेऽत्र विहरँल्लीलारविन्दे रस-
न्कह्लारे निवसन्मधुव्रत पतन्नङ्केऽपि पङ्केरुहाम्।

---

१. 'मयूरो बर्हिणो बर्ही' इत्यमरः. २. क्षुद्रशस्त्रविशेषेण.

शेफालीमुकुलैरलायि बकुलैरम्लायि किं चामलै-
स्तैर्मल्लीमुकुलैरमीलि दहनक्लान्ते वनान्ते यतः ॥ ७१ ॥
कान्तिर्लोचनवर्तिरद्भुतमयी मूर्तिर्महत्सौरभं
निःष्यन्दोऽथ सुधाकरादपि सुधास्यन्दादपि ह्लादकः ।
सर्वोऽयं विरलो जगत्यपि गुणग्रामोऽभिरामो हहा
पश्योत्तंसभुजंगसंगमजुषः श्रीखण्ड ते खण्डितः ॥ ७२ ॥
येन प्राप्तः सुरभितककुप्कंदरः कोऽप्युदारो
मन्दारोऽपि भ्रमररमणीदत्तरागः परागः ।
स त्वं तत्त्वं वद पदमहो मुग्ध कस्मादकस्मा-
दस्मिन्मिथ्या मधुप कुरुषे कर्णिकारे किमेतत् ॥ ७३ ॥
यद्गौरीरमणेन नाकतटिनीनीराङ्किते मूर्धनि
न्यस्तः स्फारफणः फणी भवतु तच्चित्रः प्रभूणां विधिः ।
एतत्किं तु कथं सहेमहि महद्दुःखं यदत्रामुना
निःशङ्कं कलितः शशाङ्ककलिकापीयूषपानोत्सवः ॥ ७४ ॥
दृष्टाश्चम्पकसंपदो विचकिलश्रेणी गता गोचरं
प्राप्तं केतकधाम कैरववनं दृष्टं विमृष्टं च तत् ।
सा श्रीस्तन्मधु तन्मधुव्रतकुलं तत्सौरभं वेधसा
साश्चर्यं निरमायि हेम कमल त्वय्येव तुभ्यं नमः ॥ ७५ ॥
बद्धः कोऽपि शिखामणिस्तव नवो मुक्तागुणो गुम्फितः
कान्तः कृत्रिमपुत्रिके यदि कृतः कर्पूरपत्राङ्कुरः ।
तत्किंचिन्नयनाञ्जनं रतिपतिह्लादप्रदा सा गति-
स्तन्मुग्धं हसितं सदामृतरसं मुञ्चन्कुतः पञ्चमः ॥ ७६ ॥
मुञ्चैतां नवमालिकां कुरु पुरो मा मालतीमाल्यकं
मा मा मालिक मल्लिकास्रजमपि क्वापि त्वमुन्मुद्रयेः ।
स्रग्दामैकरतः कुतः कथमथ स्यात्कर्णपूरोन्मुखः
कुग्रामेऽत्र कदम्बसंगरसिको जायेत जाल्मो जनः ॥ ७७ ॥

हासश्चेदमृतं मृतं यदि रुचिर्नोद्दीपकं चम्पकं
वाचश्चेत्कलकण्ठकण्ठकुहरे कुण्ठक्रमः पञ्चमः ।
किं चान्यद्यदि मारमण्डनमणिस्पर्धाधरस्तेऽधरः
सत्यं सुन्दरि वैद्रुमोऽपि विरमत्संपल्लवः पल्लवः ॥ ७८ ॥
लीलोद्यानतलेऽपि केऽपि तरवो निष्कान्तयः किं तु ते
निःसारेऽपि खरेऽपि चम्पक मरौ रूढस्य दैवादिह ।
कान्तिः सैव स एव पल्लवगुणः सैव द्विरेफावली
छाया सैव स एव सौरभभरस्ता एव पुष्पश्रियः ॥ ७९ ॥
कूपोल्लङ्घनकर्मनर्म विषमं जानन्ति शाखामृगा
झम्पामप्युपकल्प्य कंचन पदं यान्ति प्लवंगाः परे ।
दुर्वारेऽपि दुरुत्तरेऽपि विपुलस्फारेऽपि वारां निधौ
हेलैव प्लवगप्रभोः[1] कृतजगत्पारिप्लवो विप्लवः ॥ ८० ॥
मुक्त्वाम्भोधिं मदनजयिनः किं कपालावचूडे
चूडामूले सितकरकले कल्पितोऽयं निवासः ।
यच्चै निर्यन्नयनदहनाङ्गारसङ्गेन गात्रं
तत्रोन्मीलद्बकुलकलिकाकोमलं तान्तिमेति ॥ ८१ ॥
वल्लीभिर्ज्वलितं जलैरपगतं दावानलैरुद्धतं
दर्भैरङ्कुरितं रवेरपि खरैर्यस्मिन्करैर्दीपितम् ।
तत्रैवासि मरौ शिरीष जगतीसारोऽपि सत्पल्लव-
प्रस्तारोऽपि परिस्फुरत्परिमलोद्गारोऽपि हा रोपितः ॥ ८२ ॥
कैलासः क्वचिदुद्वहन्नपि पुरारातिं यदप्यायता-
मूर्वीमेष बिभर्ति सागरसरिद्गुर्वीं[2] गिरिग्रामणीः ।
लीलाकन्दुकविभ्रमेण तमपि प्रागेतमेकः करे
चक्रे विक्रमभासुरः सुरचमूविद्रावणो रावणः ॥ ८३ ॥
लास्याभ्यासं जहिहि विहितश्रोत्रपीयूषमेकां
केकां दूरीकुरु गुरुरयं मुग्ध बर्हिन्विमोहः ।

---

१. हनुमतः. २. महीधरत्वात्.

मिथ्या बिभ्रत्कनकनिकषस्निग्धसौन्दर्यलेखां
विद्युल्लेखामुदयति यतः शारदोऽयं पयोदः ॥ ८४ ॥
हंस भ्राम्यदनेकभेकशबले पङ्काविले पल्वले
युक्तास्ते किमसारवारिणि रणत्क्रौञ्चाकुले केलयः ।
तल्लीलालससारसं हि सरसं दृष्टं त्वया मानसं
वीचिन्यञ्चितकाञ्चनाम्बुजरजःप्रस्तारमग्नं सरः ॥ ८५ ॥
कान्तिर्यस्य शरन्निशाकरकलालावण्यसंवादिनी
तं विक्रेतुमिहासि यासि किमहो हारं विहारं श्रियः ।
एतां पश्य पुरः पुलिन्दनगरीं भूषाः कुरङ्गीदृशां
यत्रैता गलकन्दले च कुचयोरङ्के च गुञ्जास्रजः ॥ ८६ ॥
लक्ष्मीवल्लभकेलितल्पमुदधिर्यज्जन्मभूर्भूषणं
यन्मौलौ च कुचस्थले च सुदृशां पात्रं यदेव श्रियः ।
तन्मुक्ताफलमेतदस्थिकणिकाशङ्कापरैः पामरै-
र्दूरे मुक्तमयुक्तमुक्तमपि च न्यक्कारयुक्तं वचः ॥ ८७ ॥
यस्मिन्विस्मयजन्म मन्मथमहोत्साहप्रदं सौरभं
यस्य स्यात्कुचकुड्मलोपरि परिष्वङ्गः कुरङ्गीदृशाम् ।
नेदं तस्य जनैकनन्दन सहे हे चन्दन क्वापि ते
मूले हालहलाकुलैरहिकुलैर्यत्संगमोऽङ्गीकृतः ॥ ८८ ॥
बालैः पञ्चशरीं शिरीषमृदुलैर्निर्माय यत्पल्लवैः
शङ्के शंकरसंगरेऽपि चतुरो जातोऽङ्ककारः स्मरः ।
सा श्रीस्तानि दलानि ते मधुलिहस्तत्सौरभं मल्लिके
तस्यास्ते विरतं दवानलशिखामात्रेण धात्रे नमः ॥ ८९ ॥
मुग्धा वृथा कुमुदिनीरमणे चकोराः
को राग एष जडिमाग्लपिता मतिर्वः ।

१. लम्. २. 'व्युत्पन्नयोद्धा' इति श्रीकण्ठचरितटीकायां ( १।४३ ) जोनराजः.

एतन्न पश्यथ मुखं मदिरेक्षणानां[1]
यस्मिन्स किंकरति कैरविणीकुटुम्बः[2] ॥ ९० ॥

न कुन्दं सामोदं जनयति मुदं नैव कुमुदं
न सारं कह्लारं कुसुमतिलकं नैव तिलकम्।
उदात्तं निर्धूतं न च कमलमावर्जकमलं
तदश्रान्तभ्रान्तभ्रमरवलयं चेत्कुवलयम् ॥ ९१ ॥

निर्मायाम्बुनि नर्मकर्म कवलक्रीडां कुरु श्यामलैः
शेवालैर्बिसकन्दलैरविरलैर्बालैर्मृणालीदलैः।
हे मातङ्ग तरङ्गरङ्गपटलीखेलत्पुलिन्दाङ्गनं
लक्ष्मीप्राङ्गणमङ्गसंगतमिदं पुण्यैर्हि पम्पासरः ॥ ९२ ॥

वापीवारिणि हंस शंस कतरः प्रेमग्रहो गम्यतां
खेलत्पल्लवपार्वतीभुजलतालोलोर्मि दिव्यं सरः।
व्याप्य व्योम च दिङ्मुखानि च नदत्युद्दामसौदामनी-
दामव्याप्तवपुर्वियुक्तवनितादम्भोलिरम्भोधरः ॥ ९३ ॥

कंचित्कालं नय गिरिगुहागह्वरे रे मुधैव
क्रीडन्हालाहलरसलसद्दर्प मा सर्प[3] सर्प।
माद्यन्नुद्यत्सजलजलदव्याकुले मेघकाले
येन प्राप्तो वनविहरणोत्कण्ठया नीलकण्ठः ॥ ९४ ॥

चित्रे चन्दनचित्रके समुचिते कर्पूरपत्राङ्कुरे
कस्तूरीमकरेषु कुङ्कुमरसस्थानेषु[4] यत्कौतुकम्।

---

१. मदिरा दृष्टिविशेषस्तद्युक्ते ईक्षणे यासाम्. 'आघूर्णमानमध्या या क्षामा चाञ्चितलोचना। दृष्टिर्विकसितापाङ्गा मदिरा तरुणे मदे ॥' इति हरविजयटीकायामलकराजानकः. 'तथा संगीतकलिकायाम्—'सौष्ठवेन परित्यक्ता स्मेरापाङ्गमनोहरा। वेपमानान्तरा दृष्टिर्मदिरा परिकीर्तिता ॥' इति (१८७९ मितख्रिस्तसंवत्सरमुद्रित-विक्रमोर्वशीयटिप्पणे ५२ पृष्ठे) शंकर-पाण्डुरङ्ग-पण्डितः. मल्लिनाथस्तु (रघुवंशटीकायाम् ८।६८) 'माद्यत्यनयेति मदिरा लोकप्रसिद्धा। तथापि 'नार्यो मदिरलोचनाः' इत्यादिप्रयोगदर्शनान्माद्यत्याभ्यामिति मदिरे अक्षिणी यस्याः' इति वदन्भ्रान्त एव भाति. २. चन्द्रः. ३. हे सर्प, मा गच्छ. ४. स्थासक एव स्थासः.

किं कुर्मस्तदमुत्र पामरपुरे सैरंध्रि दूरेऽस्तु ते
वृत्ता यत्र कुतः प्रसाधनविधौ वार्तापि वामभ्रुवाम् ॥ ९५ ॥
यल्लीलाम्बुजनर्म केतकलताकौतूहलं मालती-
माल्यप्रेम लवङ्गसंगमरसः कङ्केलिकेलिक्रमः ।
तत्सर्वं विजहाति किं तु रसयत्यालम्बते सादरं
नन्दन्नन्दनकन्दलीसुमनसामामोदमिन्दिन्दिरः ॥ ९६ ॥
माद्यन्मद्गु वलद्बकावलि बलिक्रौञ्चाविलं पल्वलं
मन्ये मान्य मराल पङ्कपटलीयुक्तं न युक्तं तव ।
तत्त्वन्नेत्रपुटीरसायनरसासारं ससारं सर[1]
स्वच्छं गात्रनिमज्जनोत्सुकसुरस्त्रीमानसं मानसम् ॥ ९७ ॥
अम्भोजैर्गलितं तटैर्विघटितं हंसैर्द्रुतं विद्रुतं
वापीभिर्विरतं पुरैव पतितैरद्याविलैस्त्वज्जलैः ।
हा धिक्कि पुनरप्युपार्जितमहादौर्जन्य पर्जन्य हे
प्रारब्धोऽयमतानवैरभिनवैर्वारिप्लवैर्विप्लवः ॥ ९८ ॥
तापातङ्कं कलय विलयं याहि हे दुर्निवारं
वारं वारं विगलितगतिर्नेह दाहं सहेथाः ।
दैवादग्रे खरतरजरद्दर्भसंदर्भगर्भो
नेदीयांस्ते नववनदवोद्दीपितः पान्थ पन्थाः ॥ ९९ ॥
यद्भूतं च भवच्च भावि च कुलं भूमण्डले भूरुहां
तन्मध्ये न बभूव नास्ति भविता न क्वापि तादृक्तरुः ।
साम्ये यश्चलकेलिकङ्कणरणत्काराङ्गदोर्लेखया
पौलोम्या[2] निहितालवालपयसः कल्पद्रुमस्य क्षमः ॥ १०० ॥
लब्धं वल्गदवल्गुमद्गुरसितं सोद्रेकभेकस्वरं
किं च क्रौञ्चवचःप्रपञ्चविरसं दैवादिदं ते सरः ।
तच्चे हंस न गीतिरत्र सरसा सा कान्तसीमन्तिनी-
लीलाचङ्क्रमणक्रमानुकरणोद्युक्ता च युक्ता गतिः ॥ १०१ ॥

---

१. गच्छ. २. इन्द्राण्या.

उन्मीलन्मुकुलो न चात्र बकुलो नावर्जकाः केतका
नास्मिन्कोमलकुड्मला विचकिला नोद्दीपकाश्चम्पकाः।
तत्किं मुग्ध मुधैव दग्धसिकतागर्भः सदर्भो मरो
र्मार्गः पान्थ पतत्पतंगकिरणाङ्गारोऽयमङ्गीकृतः॥ १०२॥
वार्ता यत्र न शेखरेषु न तथा धम्मिल्लमाल्यप्रथा
कर्णोत्तंसकथा न काचन न च स्रग्दामनामग्रहः।
तस्मिन्मालतिवल्लि हालिकपुरे रूढासि पश्यैष ते
स्वात्मन्येव शमं गतस्त्रिजगतीगण्यो गुणानां गणः॥ १०३॥
एतस्मिन्विपुले प्लवंगमकुले जातो गुणैरग्रणी-
रेकः क्वापि कपिः स कोऽपि मरुतां वन्द्यो मरुन्नन्दनः।
केलिप्राङ्गणवापिकावदभवद्यस्याम्भसां भर्तरि
द्राक्कल्लोलविकारकल्पितजगत्कम्पेऽपि झम्पारसः॥ १०४॥
साश्चर्याः सरसाश्च सन्ति सरितः पाथःपति[1]प्रेयसि
क्षोणीविभ्रमवैजयन्ति तदपि त्वां ताम्रपर्णि स्तुमः।
स्वच्छे निर्जितनारिकेलसलिलस्वादिम्नि यद्वारिणि
प्राप्तः केतकपत्रगर्भरुचिभिर्मुक्ताफलैरुद्भवः॥ १०५॥
इयं यदि रदच्छदच्छविरपाटला पा[2]टला
नताङ्गि तव चेदियं रुचिरकिंचनं काञ्चनम्।
किमन्यदमृतद्रवः श्रवणयोरिदं चेद्वचः
क्व न भ्रमरयोषितां गलदहंकृतिर्हुंकृतिः॥ १०६॥
उद्भिन्ना कलकण्ठकण्ठकुहरात्कर्णामृतस्यन्दिनी
हृद्या यद्यपि मार्दवैकवसतिः सा काकलीहुंकृतिः।
अन्यस्तन्वि तथापि ते पशुपतिप्लुष्टस्य जीवार्पणे
पञ्चेषोरुचितः प्रपञ्चितरसः पाकाञ्चितः पञ्चमः॥ १०७॥
या लक्ष्मीः स्मरकार्मुके स्फुरति या बाले प्रवाले रुचिं-
र्यो नीलाम्बुरुहच्छदे मृदुमरुत्प्रेङ्खोलिते विभ्रमः।

१. हे समुद्रपत्नि. २. पुष्पविशेषः.

या कान्तिः कनकाम्बुजेऽपि सकलं द्रष्टुं तदेकत्र चे-
च्चेतः कन्दलिताद्भुतं तव सखे पश्याननं सुभ्रुवः ॥ १०८ ॥

इति महाकविश्रीशंभुमिश्रकृतान्योक्तिमुक्तालता समाप्ता ।

---

## महाकविश्रीक्षेमेन्द्रकृतः
## सेव्यसेवकोपदेशः ।

विभूषणाय महते तृष्णातिमिरहारिणे ।
नमः संतोषरत्नाय सेवाविषविनाशिने ॥ १ ॥
उत्सृज्य निजकार्याणि सद्भिर्बाष्पाकुलेक्षणम् ।
सेव्यसेवकसेवानां क्रियतामनुशासनम् ॥ २ ॥
दर्पादेकः परो लोभाद्द्वावन्धौ सेव्यसेवकौ ।
धनोष्मदैन्यविकृती मुखे कः कस्य पश्यति ॥ ३ ॥
दुर्वारमोहलोभान्धो यदि न स्यादयं जनः ।
कः क्रूरक्रोधविधुरं सहेत धनिनां मुखम् ॥ ४ ॥
यः पृथ्वीमपि दर्पान्धो न पश्यति पुरःस्थिताम् ।
स दैन्यलघुतां यातं कथं सेवकमीक्षते ॥ ५ ॥
अगतिं वाहयत्येको बधिरं स्तौति चापरः ।
अहो जगति हास्याय निर्लज्जौ सेव्यसेवकौ ॥ ६ ॥
दूरं हुंकारमात्रेण विसृष्टो मार्गणः[1] सदा ।
गुणभ्रष्टः क्रियाहीनो नोद्वेगं याति सेवकः ॥ ७ ॥
मन्ये सुकृतिना तेन भागीरथ्यां कृतं तपः ।
वैराग्यभागी रथ्यां यः सेवासु न विगाहते ॥ ८ ॥
कथितक्लेशवापेन शापेनेव विपाकिना ।
सेवातापेन पच्यन्ते नद्धदुष्कृतिनो नराः ॥ ९ ॥
अदैन्यपुण्यमनसां यशस्तेषां विराजते ।
सेवापङ्ककलङ्कानां यैर्न पात्रीकृतं शिरः ॥ १० ॥

---

१. मार्गणो याचकः, शरश्च.

प्रभुप्रणामे जठरं दैन्यमूलं विलोकयन् ।
प्रवेष्टुं सेवकः शङ्के विलक्षः क्षितिमीक्षते ॥ ११ ॥

सेवाध्वजोऽञ्जलिर्मूर्ध्नि हृदि दैन्यं मुखे स्तुतिः ।
आशाग्रहगृहीतानां कियतीयं विडम्बना ॥ १२ ॥

अकालागमनक्रोधविधुरेश्वर[1]चक्षुषा ।
क्षिप्रं स्मर इवायाति सेवको दग्धभूति[2]ताम् ॥ १३ ॥

पुनः सेवावमानानां तेन दत्तं तिलोदकम् ।
[3]प्रविश्य वाहिनीं येन खड्गपात्रीकृतं वपुः ॥ १४ ॥

कणवृत्तिपरिक्लिष्टः कष्टं सेवकचातकः ।
[4]घनाशानिरतो नित्यमुद्ग्रीवः परिशुष्यति ॥ १५ ॥

निःसंतोषः परित्यज्य भ्रमरः पुष्पितं वनम् ।
सेवते दानलोभेन मा[5]तङ्गमपि सेवकः ॥ १६ ॥

जडसेवापरिक्लिष्टस्तीव्रदम्भबकव्रतः ।
कृच्छ्रेण क्षणिकां प्रीतिमासादयति सेवकः ॥ १७ ॥

नित्यमुन्नतिकामोऽपि मानभङ्गादधोमुखः ।
यत्सत्यमुभयभ्रष्टस्त्रि[6]शङ्कुरिव सेवकः ॥ १८ ॥

स्वमांसविक्रयासक्तः प्रभुवेतालघट्टितः ।
निःसत्त्वः प्रलयं याति रात्रिसेवासु सेवकः ॥ १९ ॥

भूमिशायी निराहारः शीतवातातपक्षतः ।
मुनिव्रतोऽपि नरकक्लेशमश्नाति सेवकः ॥ २० ॥

---

१. ईश्वरो धनवान्, शिवश्च. २. भूतिर्भस्म, संपच्च. ३. वाहिनीं सेनां प्रविश्य येन वपुः खड्गपात्रीकृतम्. युद्धे मृत इत्यर्थः. तेन सेवाजनितावमानानां तिलोदकं जलाञ्जलिर्दत्तम्. अन्योऽपि वाहिनीं नदीं प्रविश्य खड्गपात्रं गण्डकचर्मनिर्मितमर्घ्यपात्रमादाय पितृभ्यस्तिलमिश्रमुदकं ददाति. ४. घना निबिडा आशा, अथ च घनानां मेघानामाशा. ५. मातङ्गो गजः, चण्डालश्च. ६. त्रिशङ्कुर्नाम कश्चिद्राजा स्वर्गं प्राप्तः, ततश्च देवैः पुनरपि मर्त्यलोके पात्यमानो विश्वामित्रवचसा मध्ये स्तम्भितोऽद्यापि दक्षिणदिशि नक्षत्ररूपेण तिष्ठति—इति पौराणिकाः.

करोति सेवकः सेवां तावदाशामिवायताम् ।
यावद्भोगरसज्ञेन यौवनेन वियुज्यते ॥ २१ ॥

चक्षुर्द्वार्यञ्जलौ पाणिः स्तुतौ जिह्वा नतौ शिरः ।
अहो नु सेवकैः कायः परोपकरणीकृतः ॥ २२ ॥

हन्त याच्ञावमानेन सेवको लघुतां गतः ।
सेवापङ्कपदे मग्नो यदन्विष्टो न लभ्यते ॥ २३ ॥

अविश्रान्त्याविरक्तस्य दीर्घोच्छ्वासेन शुष्यतः ।
जरेव दुःसहा जन्तोः सेवा संकोचकारिणी ॥ २४ ॥

त्रुट्यति छिन्नतन्त्रीव मालेव म्लायति क्षणात् ।
सेवा नारचयत्येव दिनच्छेदेन नश्यति ॥ २५ ॥

सेवासंक्षपिताङ्गानां राजरथ्यासु शुष्यताम् ।
तीव्रतृष्णाविषार्तानां शरणं शमवारिदः ॥ २६ ॥

लोभस्य मोहाध्वनि वृद्धभावे जाता दुराशाशयितस्य सेवा ।
अधोमुखी सा सततं सलज्जा जरत्कुमारीव न कस्य शोच्या ॥ २७ ॥

आशेव शून्येषु विवर्तमाना तृष्णेव संतोषपराङ्मुखीयम् ।
दिवानिशं कर्षणदीर्घरज्जुः सेवा सुराणामपि दैन्यभूमिः ॥ २८ ॥

निसर्गवन्ध्यासु फलाशया ये कुर्वन्ति सेवासु सदा प्रयत्नम् ।
कृषिप्रवृत्ताः शशशृङ्गकोट्या खनन्ति मूर्खाः खलु खस्थलीं ते ॥ २९ ॥

अन्तःस्थितेऽप्यात्मनि यैः क्रियन्ते सेवाप्रवृत्तैः पुरुषैः प्रणामाः ।
दुग्धाब्धिकल्लोलिनि कूलकच्छे तृष्णातुरास्ते जलमर्थयन्ते ॥ ३० ॥

भागीरथीतीरवनान्तरेषु फलावनम्रेषु महाद्रुमेषु ।
क्षुत्तापतृष्णाशमनेषु सत्सु किं दैन्यसेवाव्यसनावमानैः ॥ ३१ ॥

नित्यप्रसक्त्या न सृजत्यवज्ञां न लौल्यगर्हागणनां करोति ।
अत्यन्तयाच्ञासु न याति खेदं भिक्षाभुजां पात्रमतो नु सेव्यम् ॥ ३२ ॥

जयन्ति ते स्वस्ति नमोऽस्तु तेभ्यः प्रभुप्रणामच्युतमानरत्नम् ।
सेवाप्रयासव्यसनेषु मिथ्या रथ्यारजोभाग्शिरो न येषाम् ॥ ३३ ॥

किं राजभिर्दुर्जनजन्मजालव्यासैरवाप्तैरपि कष्टदृष्टैः।
सन्त्येव सेव्या भुवि भूभृतस्ते तटेषु येषां मुनयो निविष्टाः॥ ३४॥
तृष्णातुराणां रजसा वृतानां सेवा[1]कुकूलानलतापितानाम्।
शान्त्यै हितं चन्द्रकिरीटजूटमैत्रीपवित्रं त्रिदशापगाम्भः॥ ३५॥
उत्सृज्य तीव्रं विषयाभिलाषं संतोषपोषं कुशलो भजस्व।
इत्यर्थ्यमानः सुखसेवयायमात्मैव सर्वं सुधियां ददाति॥ ३६॥
एकस्य जाने सुखभोगभाजः श्लाघ्यस्य सेवाव्यसनं निवृत्तम्।
सदैव शिश्नोदरवर्जितत्वादयाच्ययाच्ञारहितस्य राहोः॥ ३७॥
सेवाव्रते [2]प्राय इवोपविष्टः सर्वात्मना निश्चितजीवनाशः।
द्वाःस्थैः प्रयत्नेन निवारितोऽपि न दुर्ग्रहं मुञ्चति नष्टसंज्ञः॥ ३८॥
तमोऽध्वतापेन च चिन्तया च शीतेन दैन्येन च पिण्डिताङ्गः।
सुखाशया दुःखसहस्रभागी सेवाव्रतं मुग्धमतिर्बिभर्ति॥ ३९॥
गच्छामि गच्छामि दिनं गतं मे दिने गतोऽहं न नृपोऽद्य दृष्टः।
इति ब्रुवाणस्य सदा जनस्य जीर्णातरां तस्य तनुर्न तृष्णा॥ ४०॥
विच्छेदकारी सहसा कथानामनीप्सितो दीप इव प्रविष्टः।
संसक्तवस्त्रान्तरमक्षिकेव न सेवकः कस्य करोति दुःखम्॥ ४१॥
धूमायमानोऽक्षिविपक्षभूतश्चाटुक्रमोत्पादितकर्णशूलः।
कुसेवकः पादतलेऽवलग्नः पदे पदे कण्टकतामुपैति॥ ४२॥
एकः खमेव क्षितिमीक्षतेऽन्यः स निर्जनार्थी स च गाढलग्नः।
स्वस्वार्थिता तस्य भृशं स चार्थी कथं स सेव्यः स च सेवकोऽस्तु॥ ४३॥
[3]छायाग्रहो मूर्त इवानुयायी स्थितश्चिरं वृश्चिकनिश्चलश्च।
अकालपाती सुखकेलिलीलायन्त्रोपलः सेवकदुर्विदग्धः॥ ४४॥
विसृज्यमानोऽप्यनिशं न याति तीव्रोपरोधप्रणयेन मूर्खः।
भर्तुः प्रसादे विहितप्रयत्नो जातः परं प्रत्युत कोपहेतुः॥ ४५॥

---

१. कुकूलशब्दस्तुषाग्निवाचकः, तस्मादत्रानलशब्दोऽधिक इवाभाति. परंतु कवयस्त्वेवमेव प्रयुञ्जते, यथा—'शिरीषादपि मृद्वङ्गी केयमायतलोचना। अयं क्व च कुकूलाग्निकर्कशो मदनज्वरः॥'. २. अनशनव्रते. ३. शनैश्चरः.

शूत्कारिदीर्घश्वसितानुबन्धैर्निवेदितोद्वेगगतिप्रयासः ।
अतिप्रवेशात्खरमार्गणोऽसौ निरस्यमानो विफलत्वमेति ॥ ४६ ॥

श्रीरत्नचन्द्रवरवाजिगजोर्जितेऽस्मि-
न्गम्भीरराजकुलनाम्नि महासमुद्रे ।
अश्नाति मूढमतिरीश्वरतामवाप्तु-
माशावशात्क्षितिपतेर्बहु कालकूटम् ॥ ४७ ॥

विरम विरम नेयं पान्थ नम्राम्रमाला
बधिर खदिरपाली निष्फलैषा प्रयाहि ।
इति बहुविधमुक्तः सेवकोऽन्यापदेशै[1]-
स्त्यजति न विपुलाशापाशबद्धः कुसेवाम् ॥ ४८ ॥

प्रम्लाना सरसत्वमेति न पुनर्मालेव लग्नातपा
भग्ना काचमयीव संधिघटना योगेन न श्लिष्यति ।
सेवा दीपशिखेव दुर्गतगृहे संधार्यमाणा परं
निःस्नेहा क्षयमेति खेदजनितैरुच्छ्वासमालानिलैः ॥ ४९ ॥

[2]कस्त्वं गत्वर सेवकस्त्वरितता कस्मात्प्रभुर्दृश्यते
लाभः कस्तव तत्र वेत्रिविपुलाघातैः शिरस्ताडनम् ।
किं मृद्नासि मुदा विशालचरणैर्मिथ्यैव रथ्यामिमां
बन्धो वन्ध्यनरेन्द्रभव्यभवनभ्रान्त्या विडम्ब्यामहे ॥ ५० ॥

सुप्ताकर्षणदाम धाम महतो मोहस्य दैन्यस्य वा
सेवाक्लेशमहर्निशं विषहते यो वित्तलेशाशया ।
प्रस्फूर्जद्वडवाग्निगर्भगहनोद्धूतोर्मिमालाकुलं
संक्षुब्धं मकराकरं प्रविशति श्रीरत्नलब्ध्यै न किम् ॥ ५१ ॥

व्यर्थात्यर्थगतागतव्यतिकरैरश्रान्ततीव्रत्वरो
द्वारालोकनतत्परः परिजनैरुत्सार्यमाणः परम् ।
यत्नेनैव पुरः प्रवेशकलनैः क्लेशावमानाश्रयः
सर्वापत्पिशुनः शुनः सदृशतामालप्स्यते सेवकः ॥ ५२ ॥

१. अन्योक्तिभिः. २. उक्तिप्रत्युक्तिरूपोऽयं श्लोकः.

कूजत्क्रूरकपाटपीडनरुषा दत्तप्रहारैः परं
द्वारावस्थगनाय सुस्थिरभुजैर्द्वाःस्थैर्भृशं भर्त्सितः।
कुब्जीभूय जनस्य जानुविवरैः क्षिप्रप्रवेशोत्सुकः
पृच्छत्यन्तरनिर्गतानवसरं मौनव्रतान्सेवकः॥ ५३॥
द्वारे रुद्धमुपेक्षते कथमपि प्राप्तं पुरो नेक्षते
विज्ञप्तौ गजमीलनानि कुरुते गृह्णाति वाक्यच्छलम्।
निर्यातस्य करोति दोषगणनां स्वल्पापराधे यमः
स स्वामी यदि सेव्यते मरुतटे किं नः पिशाचैः कृतम्॥ ५४॥
नित्यं राजकुले न पूज्ययजने तद्द्वारपालार्चनं
भक्तिं भूतिसमुद्भवे न तु भवे ध्यानं धने नात्मनि।
दृष्टादृष्टविचिन्तनं नरपतौ न स्वोचिते कर्मणि
श्रीहेतोर्बत निष्फलं प्रकुरुते सर्वं जडः सेवकः॥ ५५॥
सा तीव्रं जडनिम्नपातनरता नो नित्यसक्ता त्वरा
रथ्यापङ्ककलङ्कितं न वदनं न द्वारपालैः कलिः।
यस्मिंस्तच्चिरसेवकः प्रविततं पुण्यं वनं गम्यतां
क्रूरास्ते न भवन्ति तत्र विकृतक्रोधोद्धताः पार्थिवाः॥ ५६॥
हंहो कष्टविनष्ट सेवक सखे खिन्नोऽसि पोषाशया
रागश्चेद्विभवे तदेष कुपतिः क्लीबः किमासेव्यते।
सेव्यः कोऽपि महेश्वरः स भगवान्यस्य प्रसादेक्षणै-
रक्षुण्णैः करुणास्पदीकृतमरुन्नाथो मरुत्तः कृतः॥ ५७॥
राज्ञामज्ञतया कृतं यदनिशं दैन्यं तदुत्सृज्यतां
संतोषाम्भसि मृज्यतामपि रजः पादप्रणामार्जितम्।
संतोषः परमः पुराणपुरुषः संविन्मयः सेव्यतां
यत्स्मृत्या न भवन्ति ते सुमनसां भूयो भवग्रन्थयः॥ ५८॥

१. महाभारत आश्वमेधिकपर्वणि मरुत्तकथा द्रष्टव्या, द्रोणपर्वणि च पञ्चपञ्चाशत्तमेऽध्याये.

उत्सृज्य प्राज्यसेवां विजनसुखजुषां भूभुजां व्याजभाजां
छित्त्वाशापाशबन्धान्विमलशमजलैस्तीव्रतृष्णां निवार्य ।
स्थित्वा शुद्धे समाधौ किमपरममृतं मृग्यतां ज्योतिरन्त-
र्यस्मिन्दृष्टे विनष्टोत्कटतिमिरभरे लभ्यते मोक्षलक्ष्मीः ॥ ५९ ॥

वृत्त्या जीवति लोकः सेवावृत्तिर्निजैव केषांचित् ।
अस्थाने तीव्रतरा निन्द्या तु तदर्थिनां सेवा ॥ ६० ॥

विद्वज्जनाराधनतत्परेण संतोषसेवारसनिर्भरेण ।
क्षेमेन्द्रनाम्ना सुधियां सदैव सुखाय सेवावसरः कृतोऽयम् ॥ ६१ ॥

इति श्रीव्यासदासापराख्यमहाकविश्रीक्षेमेन्द्रकृतः सेव्यसेवकोपदेशः समाप्तः ।

---

## श्रीविक्रमविरचितं

## नेमिदूतम् ।

प्राणित्राणप्रवणहृदयो बन्धुवर्गं समग्रं
हित्वा भोगान्सह परिजनैरुग्रसेनात्मजां च ।
श्रीमान्नेमिर्विषयविमुखो मोक्षकामश्चकार
स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेषु ॥ १ ॥

सा तत्रोच्चैः शिखरिणि समासीनमेनं मुनीशं
नासान्यस्तानिमिषनयनं ध्याननिर्धूतदोषम् ।
योगासक्तं सजलजलदश्यामलं राजपुत्री
वप्रक्रीडापरिणतगजप्रेक्षणीयं ददर्श ॥ २ ॥

उद्वीक्ष्यैनं शमसुखरतं मेदुराम्भोदनादै-
र्नृत्यत्केकिव्रजमथ नगं प्रोन्मिषन्नीपपुष्पम् ।
सा शोकार्ता क्षितितलमगात्स्यान्न दुःखं हि नार्याः
कण्ठाश्लेषप्रणयिनि जने किं पुनर्दूरसंस्थे ॥ ३ ॥

तां दुःखार्तां शिशिरसलिलासारसारैः समीरै-
राश्वास्यैवं स्फुटितकुटजामोदमत्तालिनादैः ।

साध्वीमद्रिः पतिमनुगतां तत्पदन्यासपूतः
प्रीतः प्रीतिप्रमुखवचनं स्वागतं व्याजहार ॥ ४ ॥
सिद्धेः सङ्गं समभिलषतः प्राणनाथस्य नेमेः
सा तन्वङ्गी विरहविधुरा तच्छिरोऽधिष्ठितस्य ।
तत्संमोहाद्द्रुतमनुनयं शैलराजं ययाचे
कामार्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु ॥ ५ ॥
सा तं दूना मनसिजशरैर्यादवेशं बभाषे
रक्षेत्स्वामी शरणगमसौ भूपतीनां तु धर्मः ।
तन्मां स्वामिन्नव भवदधीनां समभ्यर्थये त्वां
याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामा ॥ ६ ॥
तुङ्गं शृङ्गं परिहर गिरेरेहि यावः पुरीं स्वां
रत्नश्रेणीरचितभवनद्योतिताशान्तरालाम् ।
शोभासाम्यं कलयति मनाङ् नालका नाथ यस्या
बाह्योद्यानस्थितहरशिरश्चन्द्रिकाधौतहर्म्या ॥ ७ ॥
आलोक्यैनं तरलतडिदाक्रान्तनीलाब्दमालं
प्रावृट्कालं विततविकसद्यूथिकाजातिजालम् ।
अन्तर्जाग्रद्विरहदहनो जीविताल्म्बनेऽलं
न स्यादन्योऽप्यहमिव जनो यः पराधीनवृत्तिः ॥ ८ ॥
अस्माद्द्रेः प्रसरति मरुत्प्रेरितः प्रौढनादै-
र्भिन्दानोऽयं विरहिजनताकर्णजाहं पयोदः ।
यं पश्यैताः पथिकवनिताम्भोजचन्द्रातपाभाः
सेविष्यन्ते नयनसुभगं खे भवन्तं बलाकाः ॥ ९ ॥
वीक्ष्याकाशं नवजलधरश्याममुद्दामकामा-
विर्भावेन व्यथितवपुषो योषितो विह्वलायाः ।
काले कोऽस्मिन्वद यदुपते जीवितेशादृतेऽन्यः
सद्यःपाति प्रणयिहृदयं विप्रयोगे रुणद्धि ॥ १० ॥

शैलप्रस्थे जलदतमसा छादिताशाम्बरेण
स्निग्धश्यामाञ्जनचयरुचासादिताभिन्नभावाः ।
यामिन्योऽमूर्विहितवसतेर्वासराश्चाजनेऽस्मि-
न्संपत्स्यन्ते नभसि भवतो राजहंसाः सहायाः ॥ ११ ॥

तन्मत्वैवं व्रज निजपुरीं द्वारकां सत्सहायै-
र्गोविन्दाद्यैः सममनुभवासाद्य राज्यं सुखानि ।
कामं तेषां यदुवर पुनःसंगमे भाविनी ते
स्नेहव्यक्तिश्चिरविरहजं मुञ्चतो बाष्पमुष्णम् ॥ १२ ॥

वन्याहारा धृतमुनिजनाचारसाराः सदारा
यां नाथान्ते वयसि सुधियः क्षत्रियाः संश्रयन्ति ।
किं तारुण्ये गिरिवरभुवं सेवसे तां तपोभिः
क्षीणः क्षीणः परिलघु पयः स्रोतसां चोपभुज्य ॥ १३ ॥

कात्र प्रीतिस्तव नगवरे चारु तद्द्वारकाया-
स्त्यक्त्वोद्यानं युवयदुमनोन्मादि यत्रासुरारिः ।
निर्जित्येन्द्रं ससुरमनयत्पारिजातं द्युलोका-
द्दिङ्नागानां पथि परिहरन्स्थूलहस्तावलेपान् ॥ १४ ॥

यत्प्रागासीदनलविलसद्भूषणाभाभिरामं
भात्यारोहन्नवघनजलोद्भिन्नवल्लीचयेन ।
तत्ते नीलोपलतटविभाभिन्नभासाधुनाङ्गं
बर्हेणेव स्फुरितरुचिना गोपवेषस्य विष्णोः ॥ १५ ॥

रम्या हर्म्यैः क्व तव नगरी दुर्गश्रृङ्गैः क्व चाद्रिः
क्वैतत्काम्यं तव मृदु वपुः क्व व्रतं दुःखचर्यम् ।
चित्तग्राह्यं हितमिति वचो मन्यसे चेन्ममालं
किंचित्पश्चाद्व्रज लघुगतिर्भूय एवोत्तरेण ॥ १६ ॥

कुर्वन्पान्थांस्त्वरितहृदयान्संगमायाङ्गनाना-
मेनं पश्या विगतसमयः स्वं वयस्यं मयूरम् ।

जीमूतोऽयं मदयति विभो कोऽथवान्योऽपि काले
प्राप्ते मित्रे भवति विमुखः किं पुनर्यस्तथोच्चैः ॥ १७ ॥
पूर्वं येन त्वमसि वयसा भूषितोऽङ्गे समग्रे
तैस्तैः क्रीडारससुखसखैर्भव्यभोगैरिदानीम् ।
तत्तारुण्यं सफलय पुरीं द्वारकामेत्य शीघ्रं
सद्भावार्द्रः फलति न चिरेणोपकारो महत्सु ॥ १८ ॥
किं शैलेऽस्मिंस्तव निवसतो न व्यथा कापि चित्ते
संत्यज्य स्वां पुरमनुपमां द्योतते नाथ यस्याः ।
त्वत्सौधेनासितमणिमयाग्रेण हैमोग्रवप्रो
मेघश्यामः स्तन इव भुवः शेषविस्तारपाण्डुः ॥ १९ ॥
यामालोक्य स्वगृहगमनायोत्सुकाः स्युस्त्वदन्ये
पश्याकाशे जलदपटलेऽस्मिन्बलाकावलीं ताम् ।
अन्तर्विद्युत्स्फुरितरुचिरे सुप्रकाशेन्द्रचापे
भक्तिच्छेदैरिव विरचितां भूतिमङ्गे गजस्य ॥ २० ॥
युक्तं लक्ष्म्या मुदितमनसो यादवेशाः सभाया-
मासीनं यं निजपुरि चिरं त्वामसेवन्त पूर्वम् ।
संप्रत्येकः श्रयसि स नगं नाथ किं वेत्सि नैवं
रिक्तः सर्वो भवति हि लघुः पूर्णता गौरवाय ॥ २१ ॥
मुक्तातङ्कास्तव यदुविभो जिह्वयाङ्गं लिहन्तः
संक्रीडन्ते शिशव इव येऽङ्के समाधिस्थितस्य ।
संप्रत्येते पुरमभियतो विप्रयोगेण नेत्रैः
सारङ्गास्ते जललवमुचः सूचयिष्यन्ति मार्गम् ॥ २२ ॥
एतत्तुङ्गं त्यज शिखरिणः शृङ्गमङ्गीकुरुष्व
प्राज्यं राज्यं प्रणयमखिलं पालयन्बन्धुवर्गे ।
रम्ये हर्म्ये चिरमनुभव प्राप्य भोगानखण्डा-
न्सोत्कण्ठानि प्रियसहचरीसंभ्रमालिङ्गितानि ॥ २३ ॥

धूतोन्निद्रार्जुनपरिमलोद्गारिणः पान्थसार्था-
न्ये कुर्वीरञ्जलदमरुतो वेश्मसंदर्शनोत्कान् ।
तैः संस्पृष्टो विरहिहृदयोन्माथिभिः स्वां पुरीं नु
प्रत्युद्यातः कथमपि भवान्गन्तुमाशु व्यवस्येत् ॥ २४ ॥

नोत्साहस्ते स्वपुरगमने चेद्वियुक्ता त्वयाहं
वृद्धावेतौ तव च पितरौ तज्जनास्ते त्रयोऽमी ।
म्लानास्याब्जाः कलुषतनवो ग्रीष्मतोयाशयाभाः
संपत्स्यन्ते कतिपयदिनस्थायिहंसा दशार्णाः ॥ २५ ॥

तन्नः प्राणानव तव मते जीवरक्षैव धर्मो
वासार्थं वः सुरविरचितां तां पुरीमेहि यस्याः ।
वप्रप्रान्ते स्फुरति जलधेर्हारि वेलारमण्याः
सभ्रूभङ्गं मुखमिव पयो वेत्रवत्याश्चलोर्मि ॥ २६ ॥

अस्मादद्रेः प्रतिपथमधःसंचरन्दानवारेः
क्रीडाशैलं विमलमणिभिर्भासुरं द्रक्ष्यसि त्वम् ।
अन्तः कान्तारतरसगलद्भूषणैर्यो यदूना-
मुद्दामानि प्रथयति शिलावेश्मभिर्यौवनानि ॥ २७ ॥

तस्योद्याने वरतरुचिते त्वं मुहूर्तं श्रमार्त-
स्तिष्ठेस्तुष्टो विविधतदुपानीतपुष्पोपहारैः ।
पुष्णन्नन्तश्चर परिमलोद्गारसारस्मितानां
छायादानक्षणपरिचितः पुष्पलावीमुखानाम् ॥ २८ ॥

दृष्ट्वा रूपं तव निरुपमं तत्र पीनस्तनीनां
तासामन्तर्मनसिजरसोल्लासलीलालसानाम् ।
कर्णाम्भोजोपगतमधुकृत्संभ्रमोद्यद्विलासै-
र्लोलापाङ्गैर्यदि न रमसे लोचनैर्वञ्चितोऽसि ॥ २९ ॥

तस्मिन्नुद्यन्मनसिजरसाः प्रांशुशाखावनाम-
व्याजाद्याविष्कृतकुचवलीनाभिकाञ्चीकलापाः ।

संधास्यन्ते त्वयि मृगदृशस्तान्विचित्रान्विलासा-
न्स्त्रीणामाद्यं प्रणयवचनं विभ्रमो हि प्रियेषु ॥ ३० ॥
त्वां याचेऽहं न नयविदुषां क्वापि कार्ये विलम्बो
गन्तव्या ते सपदि नगरी स्वा यतः सा त्वदम्बा ।
मुक्ताहारा सजलनयना त्वद्वियोगार्तिदीना
कार्श्यं येन त्यजति विधिना स त्वयैवोपपाद्यः ॥ ३१ ॥
तस्याधस्ताद्विषमपुलिनां स्वर्णरेखामतीतो
मार्गे दृष्ट्वा पुरमनुपमां तां भवान्वामनस्य ।
भुक्त्वा लोकोपचयमवनिं नाकिनामागतानां
शेषैः पुण्यैर्हृतमिव दिवः कान्तिमत्खण्डमेकम् ॥ ३२ ॥
यस्यां सान्द्रोऽनुपमचलितो वेश्मसु स्वेच्छयैवं
मुष्णन्नङ्गात्सुरतललितादुज्जयन्तीं विगाह्य ।
खेदं तीरे विदलितपुटः सेवते वारनारीं
सिप्रावातः प्रियतम इव प्रार्थनाचाटुकारः ॥ ३३ ॥
यत्र स्तम्भान्मरकतमयान्देहलीं विद्रुमाणां
प्रासादाग्रं विविधमणिभिर्निर्मितं वासवेन ।
भूमिं मुक्ताप्रकररचितां हास्तिकं चापि दृष्ट्वा
संलक्ष्यन्ते सलिलनिधयस्तोयमात्रावशेषाः ॥ ३४ ॥
अत्रात्युग्रैः किल मुनिवरो वामनः प्राक्तपोभि-
र्लब्ध्वा सिद्धिं निखिलभुवनव्यापिना विग्रहेण ।
ईशं वामं भुजगसदने प्रापयद्दानवाना-
मित्यागन्तूनरमयति जनो यत्र बन्धूनभिज्ञः ॥ ३५ ॥
तामासाद्य प्रवरनगरीं विश्रुतां संनिवासं
कुर्याः पौरैर्नृवर विहितानेकपूजोपचारः ।
आस्तीर्णान्तर्विमलशयनेष्वग्रसौधेषु कामं
नीत्वा खेदं ललितवनितापादरागाङ्कितेषु ॥ ३६ ॥

उद्यानानामुपतटभुवामुज्जयन्त्याः समन्ता-
दाधुन्वद्भिर्विपुलविकसन्मालतीजालकानि ।
अङ्गान्मार्गश्रमजलकणान्सेत्स्यसेऽस्यां हरद्भि-
स्तोयक्रीडानिरतयुवतिस्नानतिक्तैर्मरुद्भिः ॥ ३७ ॥

तत्रोपास्यः प्रथितमहिमा नाथ देवस्त्वयाद्यः
प्रासादस्थः क्षणमनुपमं यं निरीक्ष्य त्वमक्ष्णोः ।
शृण्वन्प्रेक्षामुरजनिनदान्वारिवाहस्य तुल्या-
नामन्द्राणां फलमविकलं लप्स्यसे गर्जितानाम् ॥ ३८ ॥

त्वद्रूपेणापहृतमलसो विस्मयात्पौरनार्यः
सौन्दर्याधःकृतमनसिजे राजमार्गं प्रयाति ।
प्रातस्तस्यां कुवलयदलश्यामलाङ्गे सलील-
मामोक्ष्यन्ते त्वयि मधुकरश्रेणिदीर्घान्कटाक्षान् ॥ ३९ ॥

तस्याः पश्यन्वरगृहततिं तां व्रजेर्यां स्पृशन्ती-
मैक्यं प्राप्यासितरजनिषु प्रस्फुरद्रत्नदीपाः ।
विद्योतन्ते निहततिमिरव्योममार्गश्च लोके
शान्तोद्वेगस्तिमितनयनं दृष्टभक्तिर्भवान्या ॥ ४० ॥

पौरैस्तस्यां रथमुपहृतं रम्यमास्थाय यान्तं
द्रष्टुं ग्राम्याः पथि युवतयस्त्वामुपैष्यन्ति तस्मात् ।
शब्दैस्तत्र स्खलदुपलजैरर्थिसार्थीकृतश्री-
स्तोयोत्सर्गस्तनितमुखरो मा च भूर्विक्लवास्ताः ॥ ४१ ॥

त्वामायान्तं पथि यदुवराः केशवाद्या निशम्य
प्रीता बन्धूंस्तव पितृमुखान्सौहृदान्नन्दयन्तः ।
साकं सैन्यै रथमभिमुखं प्रेषयिष्यन्ति तूर्णं
मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः ॥ ४२ ॥

श्रुत्वा तीरे तदनुजलधेरागतं सोपहारो
मान्यो मन्त्री यदि बलपुरात्सीरिणस्त्वामुपेतः ।

तस्यादेया स्वशयविहिता सत्क्रिया तेन वेत्सि
प्रत्यावृत्तस्त्वयि कररुधि स्यादनल्पाभ्यसूयः ॥ ४३ ॥
गच्छेर्वेलातटमनु ततस्तोयमुल्लासिमत्स्यं
स्वच्छं काचच्छवि जलनिधेस्तस्य पश्यन्रथस्थः ।
यः कामीव क्षणमपि सरित्कामिनीनां न शक्तो
मोघीकर्तुं चटुलशफरोद्वर्तनप्रेक्षितानि ॥ ४४ ॥
तां वेलाङ्के विमलसलिलामागतां द्रक्ष्यसि त्वं
पूर्वोद्दिष्टां सरितमसकृद्वारिभिर्वीचिहस्तैः ।
यामालिङ्ग्योपरमति पिबन्यन्मुखं न क्षणार्धं
ज्ञातास्वादो विपुलजघनां को विहातुं समर्थः ॥ ४५ ॥
तस्मिन्नुच्चैर्दलितलहरीसीकरासारहारी
वारां राशेस्तटजविकसत्केतकामोदरम्यः ।
खेदं मार्गक्रमणजनितं ते हरिष्यत्यजस्रं
शीतो वायः परिणमयिता काननोदुम्बराणाम् ॥ ४६ ॥
नाम्ना रत्नाकरमथ पुरस्ताद्व्रजे वीक्षमाणो
जज्ञे यस्माद्भुवनभयकृत्तत्पुरा कालकूटम् ।
यत्रासाध्यं निवसति जगद्दाहदक्षं जलाना-
मत्यादित्यं हुतवहमुखे संभृतं तद्धि तेजः ॥ ४७ ॥
त्वामायान्तं तटवनचरा मेघनीलं मयूरा
दृष्ट्वा दूरान्मधुरविरुतैस्तत्र ये संस्तुवन्ति ।
त्वं तान्दिव्यध्वनिभिरुदधेः सान्द्रितैः संनिकृष्टः
पश्चाददद्रिग्रहणगुरुभिर्गर्जितैर्नर्तयेथाः ॥ ४८ ॥
उत्कल्लोला विपुलपुलिनाग्रेऽथ भद्राभिधाना
सा ते सिन्धुर्नयनविषयं यास्यति प्रस्थितस्य ।
वातोद्धूतैर्हसति सलिलैर्या शशाङ्कांशुगौरैः
स्रोतोमूर्त्या भुवि परिणतां रन्तिदेवस्य कीर्तिम् ॥ ४९ ॥

उच्चैर्भिन्नं जवितमुदधौ हारि नीरं रथस्थे
तस्यास्त्वय्युत्तरति सरितो यादवेन्द्र प्रवाहम् ।
वीक्षिष्यन्ते क्षणमनिमिषो व्योमभाजोऽतिदूरा-
देकं मुक्तागुणमिव भुवः स्थूलमध्येन्द्रनीलम् ॥ ५० ॥

तामुत्तीर्णः पुनरधिवसेरीशपौराभिधानं
नानादेशागतजनचयैः पूर्णरम्यापणं तत् ।
यस्याकाशं स्पृशति निवहो वेश्मनामूर्ध्वभागा-
त्पात्रीकुर्वन्दशपुरवधूनेत्रकौतूहलानाम् ॥ ५१ ॥

तस्माद्वर्त्मानघ तव कियद्गच्छतो भाति दुर्गं
पङ्काकीर्णं नवतृणचितं तत्र तोयाशयानाम् ।
कुर्वन्नब्दः किल कलुषतां मार्गणैः प्रागरीणां
धारापातैस्त्वमिव कमलान्यभ्यषिञ्चन्मुखानि ॥ ५२ ॥

नानारत्नोपचितशिखरश्रेणिरम्यः पुरस्ते
यास्यत्यक्ष्णोर्विषयमचलो मादनो गन्धपूर्वः ।
यं सोत्कण्ठो नवमिव पुनर्वीक्षितुं कान्त हर्षा-
दन्तः शुद्धस्त्वमपि भविता वर्णमात्रेण कृष्णः ॥ ५३ ॥

यस्मिन्पूर्वं किल विरचितां वामभागे भवानीं
देवीं वीक्ष्य त्रिपुरजयिनः स्वेच्छया केलिभाजम् ।
जह्नोः पुत्री तदनु दधतोऽङ्केऽभ्युपेर्ष्यं सपत्नी
शंभोः केशग्रहणमकरोदिन्दुलग्नोर्मिहस्ता ॥ ५४ ॥

आरूढस्य स्फटिकमणिभूश्वेतसानुप्रतापे
यस्मिञ्छैले विमलविलसत्कान्तितोयप्रवाहा ।
संक्रामन्त्या तव घनरुचा छायया स्वर्धुनीव
स्यादस्थानोपगतयमुनासंगमेवाभिरम्या ॥ ५५ ॥

भास्वद्भास्वन्मणिमयबृहत्तुङ्गशृङ्गाग्रसंस्थाः
संप्रत्युद्यत्परिणतफलश्यामला वामभागे ।

यस्मिन्नम्बुक्षितिरुहचया धारयिष्यन्ति सान्द्राः
शोभां शुभ्रत्रिनयनवृषोत्खातपङ्कोपमेयाम् ॥ ५६ ॥
श्रुत्वायान्तं द्रुतमुपगतास्तत्र बन्दिव्रजा ये
त्वां यावन्तः प्रथितयशसं येऽर्थिनो दौःस्थ्यदीनाः ।
तान्कुर्वीथाः समभिलषितार्थप्रदानैः कृतार्था-
नापन्नार्तिप्रशमनफलाः संपदो ह्युत्तमानाम् ॥ ५७ ॥
आकर्ण्याद्रिप्रतिरवगुरुं वानरास्त्वत्सकाशे
क्रोधाताम्रास्ततमुखरवं तत्र येऽभिद्रवन्ति ।
तान्योधानां विमुखय पुनर्दारुणैर्ज्यानिनादैः
के वा न स्युः परिभवपदं निष्फलारम्भयत्नाः ॥ ५८ ॥
तस्मिन्नद्रौ निवसति विभुः स स्वयंभूर्भवो वा
देवः सेवापरसुरगणैर्वन्द्यपादारविन्दः ।
यद्ध्यानेनापहृतदुरिता मानवाः पुण्यभाजः
संकल्पन्ते स्थिरगणपदप्राप्तये श्रद्दधानाः ॥ ५९ ॥
नीपामोदोन्मदमधुकरं गुञ्जनं गीतरम्यं
केका वेणुक्कणितमधुरा बर्हिणां चारु नृत्यम् ।
श्रोत्रानन्दी मुरजनिनदस्त्वत्प्रयाणे यदि स्या-
त्संगीतार्थो ननु पशुपतेस्तत्र भावी समग्रः ॥ ६० ॥
तस्माद्गच्छन्नथ पथि भवान्वीक्षिता वेणुनाख्यं
शैलं नीलोपलपरिचयाशेषसानूच्छ्रयं तम् ।
व्याप्याकाशं नवजलभृतां संनिभो यो विभाति
श्यामः पादो बलिनियमनायोद्यतस्येव विष्णोः ॥ ६१ ॥
तांस्तान्ग्रामानपि शुचिगिरिं दक्षिणेन व्यतीत्य
द्रष्टास्यग्रे सितमणिमयं सौधसंघं स्वपुर्याः ।
क्रान्त्वा वप्रं वियति विशदैः शोभते योंऽशुजालै
राशीभूतः प्रतिदिशमिव त्र्यम्बकस्याट्टहासः ॥ ६२ ॥

प्रत्यासत्तिं विशदशिखरोत्सङ्गभागे पयोदे
नीलस्निग्धे क्षणमुपगते पुण्डरीकप्रभस्य ।
शोभा काचिद्विलसति मनोहारिणी यस्य संप्र-
त्यंसन्यस्ते सति हलभृतो मेचके वाससीव ॥ ६३ ॥

प्राप्योद्यानं पुरपरिसरे केलिशैले यदूनां
विश्रामार्थं क्षणमभिरतिं गोमतीवारि पश्यन् ।
उत्सर्पद्भिर्दधदिव दिवो वर्त्मनो वाजिसंघैः
सोपानत्वं कुरु मणितटारोहणायाग्रयायी ॥ ६४ ॥

तत्रासीनो मुररिपुयशो निश्चलः किंनरीभिः
शृण्वंस्तिष्ठञ्छ्रुतिसुखकरं गीयमानं मुहूर्तम् ।
शब्दैरश्वस्खलितरवजैर्मेदुरैरम्बुराशेः
क्रीडालोलाः श्रवणपरुषैर्गर्जितैर्भीषयेस्ताः ॥ ६५ ॥

सान्द्रोन्निद्रार्जुनसुरभितं प्रोन्मिषत्केतकीकं
हृद्यं जातिप्रसवरजसास्वादमत्तालिनादैः ।
नृत्यत्केकामुखरशिखिनं भूषितोपान्तभूमिं
नानाचेष्टैर्जलदललितैर्निर्विशेस्तं नगेन्द्रम् ॥ ६६ ॥

तस्या हर्षादवकृतमहास्ते प्रवेशाय पुर्या
निर्यास्यन्ति प्रवरयदवः संमुखाः शौरिमुख्याः ।
या कालेऽस्मिन्भवनशिखरैः प्रक्षरद्वारि धत्ते
मुक्ताजालग्रथितमलकं कामिनीवाभ्रवृन्दम् ॥ ६७ ॥

शश्वत्सान्द्रस्वतनुमहसं प्रोल्लसद्रत्नदीपा
मानप्रांशु शिखरनिवहैर्व्योममार्गं स्पृशन्तः ।
गौरं ज्योत्स्नाविमलयशसा शुभ्रवर्णाः सुधाभिः
प्रासादास्त्वां तुलयितुमलं यत्र तैस्तैर्विशेषैः ॥ ६८ ॥

यामुद्दामाखिलसुररिपून्माथिनो दानवारेः
साहाय्याय प्रथितमहसोऽध्यासते योधवर्याः ।

नानादैत्यप्रहरणभवैः संगरेषु स्वकीर्त्या
प्रत्यादिष्टाभरणरुचयश्चन्द्रहासव्रणाङ्कैः ॥ ६९ ॥
व्याधिर्देहान्स्पृशति न भयाद्रक्षितुः शार्ङ्गपाणे-
र्मृत्योर्वार्ता श्रवणपथगा कुत्र यद्वासभाजाम् ।
कामक्रीडारससुखजुषां यच्छतामर्थिकामा-
न्वित्तेशानां न च खलु वयो यौवनादन्यदस्ति ॥ ७० ॥
कर्णे जातिप्रसवममलं केतकं केशपाशे
कस्तूरीभिः कृतविरचना गण्डयोः पत्रवली ।
कण्ठे माला ग्रथितकुटजा मण्डनं भावि काम्यं
सीमन्ते च त्वदुपगमजं यत्र नीपं वधूनाम् ॥ ७१ ॥
यस्यां रम्यं युवजनमनोहारि वाराङ्गनानां
लास्यं तालानुगतकरणं भास्वति त्वत्प्रवेशे ।
वाञ्छन्तीनां तदवगमनादङ्गभाजां प्रसादं
त्वद्गम्भीरध्वनिषु शनकैः पुष्करेष्वाहतेषु ॥ ७२ ॥
संसक्तानां नवरतरसे कामिभिः कुण्ठ्यमानाः
पृष्ठेऽप्यन्तः कृतविरचनाघर्मवार्यङ्गनानाम् ।
यस्यां ग्रीष्मे शिशिरकिरणस्यांशुभिर्यामिनीषु
व्यालुम्पन्ति स्फुटजललवस्यन्दिनश्चन्द्रकान्ताः ॥ ७३ ॥
गत्वा पूर्वं रजनिसमये धूप्यमानेषु लीला-
वेश्मस्वन्तर्युवतिनिहितै रत्नदीपैर्निरस्ताः ।
जालैर्यत्रान्धतमसचयाः साध्यसेनेव भूयो
धूमोद्गारानुकृतिनिपुणा जर्जरा निष्पतन्ति ॥ ७४ ॥
रात्रौ यस्यामुपसखि भृशं गात्रसंकोचभाजां
रागेणान्धैः शयनभवनेषूल्लसद्दीपवत्सु ।
प्रेम्णा कान्तैरभिकुचयुगं हृद्यगन्धिर्वधूनां
ह्रीमूढानां भवति विफलप्रेरणा चूर्णमुष्टिः ॥ ७५ ॥

गायन्तीभिस्त्वदमलयशो वारसीमन्तिनीभिः
साकं माद्यन्मधुरमुरजं तारसारान्यपुष्टम् ।
यस्यां रम्यं सुरभिसमये सोत्सवाः सीरिमुख्या
बद्धापानं बहिरुपवनं कामिनो निर्विशन्ति ॥ ७६ ॥

उद्यत्कामालसयुवतिभिः सेव्यमानैः सरोज-
स्कन्धान्यस्यां सुमधुररसानक्षयानापिबद्धिः ।
निर्गम्यन्ते शरदि यदुभिः सद्मपृष्ठे स्वकीर्त्या
नित्यज्योत्स्नाः प्रतिहततमोवृत्तिरम्याः प्रदोषाः ॥ ७७ ॥

कान्तोत्तंसास्तुहिनसमये कुङ्कुमालिप्तदेहाः
सान्द्रच्छाये शुचिनि तरुभिर्गोमतीरम्यतीरे ।
रूपोल्लासाद्विजितरतयः कुन्दकाले सलीलं
संक्रीडन्ते मणिभिरमरप्रार्थिता यत्र कन्याः ॥ ७८ ॥

यस्यां पुष्पोपचयममलं भूषणं साधुहृद्यं
गन्धद्रव्यं व्यजननिवहं सूक्ष्ममिच्छानुकूलम् ।
न्यस्तः प्रीत्या त्रिदशपतिना वासुदेवस्य सद्म-
न्येकः सूते सकलमबलामण्डनं कल्पवृक्षः ॥ ७९ ॥

एणाङ्काश्मावनिषु शिशिरैः कुङ्कुमार्द्रैः पदाङ्कैः
शीतोत्कम्पाद्गतिविगलितैर्बालकैः केशपाशात् ।
भ्रष्टैः पीनस्तनपरिलसद्रम्यमाल्यैश्च यस्यां
नैशो मार्गः सवितुरुदये सूच्यते कामिनीनाम् ॥ ८० ॥

बाणस्याजौ हरविजयिनो वासुदेवस्य यस्यां
प्राप्यासत्तिं चरति गतभीः पुष्पचापो निरस्तः ।
यस्माद्द्वेधाकृतयुवमनोमोहमात्मप्रकर्षै-
स्तस्यारम्भश्चतुरवनिताविभ्रमैरेव सिद्धः ॥ ८१ ॥

यायास्तस्माद्रथपरिवृतस्त्वं प्रवेशाय यस्यां
तत्प्राचीनं पुरि हरिमुखैर्गोपुरं यादवेन्द्रैः ।

यत्राशोकः कलयति नवस्तोरणाभां तथान्यो
हस्तप्राप्यस्तबकनमितो बालमन्दारवृक्षः ॥ ८२ ॥
उद्यद्वालव्यजनमनिलोल्लासिकाशप्रसूनाः
श्वेतच्छत्रं विकसितसिताम्भोजभाजो विलोक्य ।
तस्यां पौरा विशदयशसं न श्रियः शारदीना
नाध्यास्यन्ति व्यपगतशुचस्त्वामपि प्रेक्ष्य हंसाः ॥ ८३ ॥
पुष्पाकीर्णे पुरि सह तदा यस्त्वया राजमार्गे
यास्यत्युद्यद्धनिजवसनं चन्दनाम्भश्छटाङ्कम् ।
शौरिं पीताम्बरधरमनुक्ष्माधरं मेघमेनं
प्रेक्ष्योपान्तस्फुरिततडितं त्वां तमेव स्मरामि ॥ ८४ ॥
यातं तस्याः पुरि पुरि बलादुत्सवैः कामिनोत्कं
हर्षोत्कर्षं नरपतिपथेनैष्यतस्तौ ययोस्तु ।
स्त्रीणामेको रमयति शतान्यङ्गनां पाययित्वा
काङ्क्षत्यन्यो वदनमदिरां दोहदच्छद्मनास्याः ॥ ८५ ॥
सौधश्रेणीर्विततविलसत्तोरणास्ता व्यतीत्य
स्वावासं तं मणिचयरुचा भासुरं प्राप्स्यसि त्वम् ।
यस्मिन्कस्मै न भवति मुदे साग्रभूमिर्घनानां
यामध्यास्ते दिवसविगमे नीलकण्ठः सुहृद्भः ॥ ८६ ॥
नत्वा पूर्वं पितृमुखगुरूंस्तान्विसृज्याथ बन्धू-
न्सौधं मञ्चद्वयमपि ततोऽलं कुरुष्वार्द्रचित्तः ।
यन्निःश्रीकं हरति न मनस्त्वां विना यादवेन्दो
सूर्यापाये न खलु कमलं पुष्यति स्वामभिख्याम् ॥ ८७ ॥
इत्युक्तेऽस्या वदसि विमुखं मुक्तिकान्तानुरक्तं
दृष्ट्वा नेमिं किल जलधरः संनिधौ भूधरस्थः ।
तत्कारुण्यादिव जलधरश्रेणिमुक्ताश्रु धत्ते
खद्योतालीविलसितनिभां विद्युदुन्मेषदृष्टिम् ॥ ८८ ॥

तत्सख्यूचे तमभिवचनं वाञ्छितं साधयास्या
बालामेनां नय निजगृहं शैलशृङ्गं विहाय ।
त्वत्संयोगान्ननु धृतिसमेतानवद्याङ्ग्यधि-
र्या तत्र स्याद्युवतिविषये सृष्टिराद्येव धातुः ॥ ८९ ॥

अस्वीकारात्सुभग भवतः क्लिष्टशोभां कियद्भि-
र्मृद्वीमन्तर्विरहशिखिना वासरैर्दह्यमानाम् ।
एनां शुष्यद्वदनकमलां दूरविध्वस्तपत्रां
जातां मन्ये तुहिनमथितां पद्मिनीं वान्यरूपाम् ॥ ९० ॥

आकाङ्क्षन्त्या मृदुकरपरिष्वङ्गसौख्यानि सख्याः
पश्यामुष्या मुखमनुदिनं म्लानमस्मेरमश्रि ।
उद्यत्तापात्कुमुदमिव ते कैरविण्या वियोगा-
दिन्दोर्दैन्यं त्वदनुसरणक्लिष्टकान्तेर्बिभर्ति ॥ ९१ ॥

शय्योत्सङ्गे निशि पितृगृहे प्राप्य निद्रां पुरासौ
त्वं क स्वामिन्व्रजसि सहसेति ब्रुवाणा प्रबुद्धा ।
ऊचेऽस्माभिर्न खलु नयनेनापि यो वीक्षिताङ्गः
कच्चिद्भर्तुः स्मरसि रसिके त्वं हि तस्य प्रियेति ॥ ९२ ॥

एतद्दुःखापनयरसिके प्राक्सखीनां समाजे
गायत्यासां किमपि मधुरं गीतमादाय वीणाम् ।
तद्ध्यानेनापहृतहृदया गातुकामा ललज्जे
भूयो भूयः स्वयमपि कृतां मूर्च्छनां विस्मरन्ती ॥ ९३ ॥

त्वत्प्राप्त्यर्थं विरचितवती तत्र सौभाग्यदेव्याः
पूजामेषा सुरभिकुसुमैरेकचित्ता मुहूर्तम् ।
दैवज्ञान्वानयति निपुणान्स्म क्षणं भाषयन्ती
प्रायेणैते रमणविरहेष्वङ्गनानां विनोदाः ॥ ९४ ॥

याते पाणिग्रहणसमयेऽद्रिं विहाय त्वयीमां
त्यक्त्वा माल्यं सपदि रचिता यानया विप्रयोगे ।

तामेवैषा वहति शिरसा स्वे निधाय प्रदेशे
गण्डाभोगात्कठिनविषमामेकवेणीं करेण ॥ ९५ ॥
गीताद्यैर्वा श्रुतसुखकरैः प्रस्तुतैर्वा विनोदैः
पौराणीभिः कृतनुतिमिमां त्वद्वियोगात्कथाभिः ।
तुष्टिं नेतुं रजनिषु पुनर्नालिवर्गः क्षमोऽभू-
त्तामुन्निद्रामवनिशयनां सौधवातायनस्थः ॥ ९६ ॥
या प्रागस्याः क्षणमिव नवैर्गीतवार्ताविनोदै-
रासीच्छय्यातलविगलितैर्गल्लभागैर्विलङ्घ्य ।
रात्रिं संवत्सरशतसमां वीक्षते सन्नगात्री
तामेवोष्णैर्विरहजनितैरश्रुभिर्यापयन्ती ॥ ९७ ॥
पश्यन्ती त्वन्मयमिव जगन्मोहनावासमग्नं
ध्यायन्ती त्वां मनसि निहितं तत्क्षणं तद्विरामे ।
मूर्तिं भित्तावपि च लिखितामीक्षितुं ते पुरस्ता-
दाकाङ्क्षन्ती नयनसलिलोत्पीडरुद्धावकाशम् ॥ ९८ ॥
अन्तर्भिन्ना मनसिजशरैर्मीलिताक्षी मुहूर्तं
लब्ध्वा संज्ञां दिशि दिशि मुहुर्वीक्ष्यमाणार्तिदीना ।
शय्योत्सङ्गे नवकिसलयाग्रेऽपि भद्रं न लेभे
साभ्रेऽह्नीव स्थलकमलिनी न प्रबुद्धा न सुप्ता ॥ ९९ ॥
वृत्तान्तेऽस्मिंस्तदनु कथिते मातुरस्यास्तयैत-
द्वृत्तं ज्ञातं निशि सह मया प्रेषितः सौविदल्लः ।
सख्याः पश्यन्नयमपि दशां तां तदावेक्ष्य जातं
प्रत्यक्षं ते निखिलमचिराद्भ्रातरुक्तं मया यत् ॥ १०० ॥
प्रेक्ष्यैतस्मिन्नपि मृगदृशस्तामवस्थामसह्या-
मस्याः प्रातः कथयति पुरा विस्तरात्सैतदम्बा ।
श्रुत्वा दुःखं दुहितुरसृजद्बाष्पमच्छिन्नधारं
प्रायः सर्वो भवति करुणावृत्तिरार्द्रान्तरात्मा ॥ १०१ ॥

आहूयैनामवददथ सा निर्दयो योऽत्यजत्त्वा-
मित्थं भद्रे कथय किमियद्धार्यते तत्र दुःखम् ।
त्यक्त्वा लोलं नयनयुगलं तेऽरुणत्वं रुदत्या
मीनक्षोभाच्चलकुवलयश्रीतुलामेष्यतीति ॥ १०२ ॥

अन्तस्तापान्मृदुभुजयुगं ते मृणालस्य दैन्यं
म्लानिं चैतन्मिहिरकिरणक्लिष्टशोभस्य धत्ते ।
प्लुष्टः श्वासैर्विरहशिखिना स द्वितीयस्तवायं
यास्यत्यूरुः सरसकदलीस्तम्भगौरश्चलत्वम् ॥ १०३ ॥

वत्से शोकं त्यज सृज पुनः स्वच्छतां मृष्टवाणीं
यच्छस्वैवं प्रयतमनसानुग्रहं मे कुरुष्व ।
भर्तुर्भूयो न भवति रहः संगतायास्तथा ते
सद्यः कण्ठच्युतभुजलताग्रन्थि गाढोपगूढम् ॥ १०४ ॥

आरोप्याङ्के मधुरवचसाश्वासितेत्थं जनन्या
तत्याजाधिं क्षणमपि न या त्वद्वियोगात्कृशाङ्गी ।
संप्रत्येषा विसृजति तनुं कोमलाङ्गी यथा नो
वक्तुं धीरस्तनितवचनैर्मानिनीं प्रक्रमेथाः ॥ १०५ ॥

मातुः शिक्षाशतमलमवज्ञाय दुःखं सखीना-
मन्तश्चित्तेष्वजनयदियं पाणिपङ्केरुहाणि ।
हस्ताभ्यां प्राक्सपदि रुदती रुन्धती कोमलाभ्यां
मन्द्रस्निग्धैर्ध्वनिभिरबला वेणिमोक्षोत्सुकानि ॥ १०६ ॥

वृद्धः साध्व्या सुभग तव यः प्रेषितोऽभूत्प्रवृत्तिं
ज्ञातुं तस्मात्कुशलिनमियं रैवताद्रौ द्विजातिः ।
त्वामाकर्ण्योच्छ्वसितहृदयासीत्क्षणं सुन्दरीणां
कान्तोदन्तः सुहृदुपगतः संगमात्किंचिदूनः ॥ १०७ ॥

इत्थं कृच्छ्राद्विधुरवपुषो वासरान्वर्षतुल्या-
नस्याः सख्या जनकसदने त्वद्वियोगान्नयन्त्याः ।

अन्तश्चित्ते त्वयि सुखलवः स प्रपेदे प्रवेशं
संकल्पैस्तैर्विशति विधिना वैरिणा रुद्धमार्गः ॥ १०८ ॥
प्राप्यानुज्ञामथ पितुरियं त्वां सहास्माभिरस्मि-
न्संप्रत्यद्रौ शरणमबला प्राणनाथं प्रपन्ना ।
अर्हस्येनां विषमविशिखाद्रक्षितुं त्वं हि कृच्छ्रा-
त्पूर्वाभाष्यं सुलभविपदां प्राणिनामेतदेव ॥ १०९ ॥
धर्मज्ञस्त्वं यदि सहचरीमेकचित्तां च रक्तां
किं मामेवं विरहशिखिनोपेक्ष्यसे दह्यमानाम् ।
तत्स्वीकारात्कुरु मयि कृपां यादवाधीश बाला
त्वामुत्कण्ठाविरचितपदं मन्मुखेनेदमाह ॥ ११० ॥
दुर्लङ्घ्यत्वं शिखरिणि पयोधौ च गाम्भीर्यमुर्व्यां
स्थैर्यं तेजः शिखिनि मदने रूपसौन्दर्यलक्ष्मीम् ।
बुद्धिं क्षान्तिं नृवर कलया गीतवृन्दं गुणानां
हन्तैकस्थं क्वचिदपि न ते चण्डि सादृश्यमस्ति ॥ १११ ॥
एतानीत्थं विधुरमनसा स्वीकृतायास्त्वया मे
दुःखार्तायाः क्षितिभृति दिनानीश कल्पोपमानि ।
आसन्नस्मिन्मदनदहनोद्दीपकानि प्रकाशं
दिक्संसक्तप्रविरलघनव्यस्तसूर्यातपानि ॥ ११२ ॥
रात्रौ निन्द्रां कथमपि चिरात्प्राप्य यावद्भवन्तं
लब्धं स्वप्ने प्रणयवचनैः किंचिदिच्छामि वक्तुम् ।
तावत्तस्या भवति दुरितैः प्राक्तनैर्मे विरामः
क्रूरस्तस्मिन्नपि न सहते संगमं नौ कृतान्तः ॥ ११३ ॥
मन्नाथेन ध्रुवमवजितो रूपलक्ष्म्या तपोभि-
स्तद्वैरान्मामिषुभिरबलां हन्त्यशक्तो मनोभूः ।
दृग्भ्यां क्लृप्तेष्विति मम निशि स्रस्तरे चिन्तयन्त्या
मुक्तास्थूलास्तरुकिसलयेष्वश्रुलेशाः पतन्ति ॥ ११४ ॥

अस्मिन्नेते शिखरिणि मया यादवेशान्तिकान्ते
जीमूताम्भःकणचयमुषः संचरन्तः पुरस्तात् ।
संसेव्यन्ते विषमविशिखोत्तंसया नीपवाताः
पूर्वं स्पृष्टं यदि किल भवेदङ्गमेभिस्तवेति ॥ ११५ ॥

संचिन्त्यैवं हृदि मयि दयां धारयंस्तत्प्रसीद
स्वामिन्निर्वापय वपुरिदं स्वाङ्गसङ्गामृतेन ।
यत्संताप्यानिशमतितरां प्राणलावण्यशेषं
गाढोष्माभिः कृतमशरणं त्वद्वियोगव्यथाभिः ॥ ११६ ॥

दुःखं येनानवधि बुभुजे त्वद्वियोगादिदानीं
संयोगात्तेऽनुभवतु सुखं तद्वपुर्मे चिराय ।
यस्माज्जन्मान्तरविरचितैः कर्मभिः प्राणभाजां
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ॥ ११७ ॥

प्रावृट् प्रान्तं प्रियतम गता दुर्दशा दुःखदेव
प्रायोऽन्योन्यै रतिकरमितः सांप्रतं संगमाय ।
भोगानेकोत्सवसुखसुखानिच्छया मन्दिरे स्वे
निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु ॥ ११८ ॥

इत्येतस्याः सफलय चिराद्वाक्यमासाद्य सद्यः
स्वं वेश्मैनां नय नवरसैः स्वस्थचित्तां कुरुष्व ।
तल्पे प्राक्त्वां निशि वदति या सेक्षमाणेव मोहा-
द्दृष्टः स्वप्ने कितव रमयन्काममपि त्वं मयेति ॥ ११९ ॥

त्वत्संयोगाकुलितहृदयोत्कण्ठया राजपुत्री
त्वामेषा च त्वरयति चिरात्स्नेहपूर्णा प्रयातु ।
प्रायेणैताः प्रियजनमनोवृत्तयोऽप्राप्तिभावा-
दिष्टे वस्तुन्युपचितरसाः प्रेमराशीभवन्ति ॥ १२० ॥

तस्माद्बालां स्मरशरचयैर्दुःसहैर्जर्जराङ्गीं
संभाष्यैनां नय निजगृहान्सत्वरं यादवेन्द्र ।

प्रीत्या चास्या मधुरवचनाश्वासनाभिः प्रयान्तं
प्रातः कुन्दप्रसवशिथिलं जीवितं धारयेथाः ॥ १२१ ॥
त्वामर्थेऽस्याः किमिति नितरां प्रार्थये नाथ भूयो
यस्मादीदृग्जगति महतां लक्षणं सुप्रसिद्धम् ।
स्नेहादेते न खलु मुखरा याचिताः संभवन्ति
प्रत्युक्तं हि प्रणयिषु सतामीप्सितार्थक्रियैव ॥ १२२ ॥
गत्वा शीघ्रं स्वपुरमतुलं प्राप्य राज्यं त्रिलोक्याः
कीर्तिं शुद्धां वितनु सुहृदां पूरयाशां च पित्रोः ।
राजीमत्या सह नवघनस्येव वर्षासु भूयो
मा भूदेवं क्षणमपि च ते विद्युता विप्रयोगः ॥ १२३ ॥
तत्सख्योक्ते वचसि सदयस्तां सतीमेकचित्तां
संबोध्येशः स भवविरतो रम्यधर्मोपदेशैः ।
चक्रे योगान्निजसहचरीं मोक्षसौख्याप्तिहेतोः
केषां न स्यादभिमतफला प्रार्थना ह्युत्तमेषु ॥ १२४ ॥
श्रीमान्योगादचलशिखरे केवलज्ञानमस्मि-
न्नेमिर्देवोरगनरगणैः स्तूयमानोऽधिगम्य ।
तामानन्दं शिवपुरि परित्याज्य संसारभाजां
भोगानिष्टानविरतसुखं भोजयामास शश्वत् ॥ १२५ ॥
तद्दुःखार्थं प्रवरकवितुः **कालिदासस्य** काव्या-
दन्त्यं पादं सुपदरचितान्मेघदूताद्गृहीत्वा ।
श्रीमन्नेमेश्चरितविशदं **साङ्गणस्याङ्गजन्मा**
चक्रे काव्यं बुधजनमनःप्रीतये **विक्रमाख्यः** ॥ १२६ ॥

इति साङ्गणसूनुश्रीविक्रमकविविरचितं नेमिदूतं समाप्तम् ।

---

## पण्डितराजश्रीजगन्नाथविरचिता
## लक्ष्मीलहरिः ।

समुन्मीलन्नीलाम्बुजनिकरनीराजितरुचा-
मपाङ्गानां भङ्गैरमृतलहरीश्रेणिमसृणैः ।

ह्रिया हीनं दीनं भृशमुदरलीनं करुणया
हरिश्यामा सा मामवतु जडसामाजिकमपि ॥ १ ॥
समुन्मीलत्वन्तःकरणकरुणोद्गारचतुरः
करिप्राणत्राणप्रणयिनि दृगन्तस्तव मयि ।
यमासाद्योन्माद्यद्द्विपनियुतगण्डस्थलगल-
न्मदक्लिन्नद्वारो भवति सुखसारो नरपतिः ॥ २ ॥
उरस्यस्य भ्रश्यत्कबरभरनिर्यत्सुमनसः
पतन्ति स्वर्बालाः स्मरशरपराधीनमनसः ।
सुरास्तं गायन्ति स्फुरिततनु गङ्गाधरमुखा-
स्तवायं दृक्पातो यदुपरि कृपातो विलसति ॥ ३ ॥
समीपे संगीतस्वरमधुरभङ्गी मृगदृशां
विदूरे दानान्धद्विरदकलभोद्दामनिनदः ।
बहिर्द्वारे तेषां भवति हयहेषाकलकलो
दृगेषा ते येषामुपरि कमले देवि सदया ॥ ४ ॥
अगण्यैरिन्द्राद्यैरपि परमपुण्यैः परिचितो
जगज्जन्मस्थानप्रलयरचनाशिल्पनिपुणः ।
उदञ्चत्पीयूषाम्बुधिलहरिलीलामनुहर-
न्नपाङ्गस्तेऽमन्दं मम कलुषवृन्दं दलयतु ॥ ५ ॥
नमन्मौलिश्रेणित्रिपुरपरिपन्थिप्रतिलस-
त्कपर्दव्यावृत्तिस्फुरितफणिफूत्कारचकितः ।
लसत्फुल्लाम्भोजभ्रदिमहरणः कोऽपि चरण-
श्चिरं चेतश्चारी मम भवतु वारीशदुहितुः ॥ ६ ॥
प्रवालानां दीक्षागुरुरपि च लाक्षारुणरुचां
नियन्त्री बन्धूकद्युतिनिकरबन्धूकृतिपटुः ।
नृणामन्तर्ध्वान्तं निबिडमपहर्तुं तव किल
प्रभातश्रीरेषा चरणरुचिवेषा विजयते ॥ ७ ॥

प्रभातप्रोन्मीलत्कमलवनसंचारसमये
शिखाः किंजल्कानां विदधति रुजं यत्र मृदुलाः ।
तदेतन्मातस्ते चरणमरुणश्लाघ्यकरुणं
कठोरा मद्वाणी कथमियमिदानीं प्रविशतु ॥ ८ ॥

सितज्योत्स्नामज्जद्द्विजमणिमयूखामृतझरै-
र्निषिञ्चन्तीं विश्वं तव विमलमूर्तिं स्मरति यः ।
अमन्दं स्यन्दन्ते वदनकमलादस्य कृतिनो
विविक्तौ वैकल्पाः सततमविकल्पा नवगिरः ॥ ९ ॥

शरौ मायावीजौ हिमकरकलाक्रान्तशिरसौ
विधायोर्ध्वं बिन्दुं स्फुरितमिति बीजं जलधिजे ।
जपेद्यः स्वच्छन्दं स हि पुनरमन्दं गजघटा-
मदभ्राम्यद्भृङ्गैर्मुखरयति वेश्मानि विदुषाम् ॥ १० ॥

स्मरो नामं नामं त्रिजगदभिरामं तव पदं
प्रपेदे सिद्धिं यां कथमिव नरस्तां कथयतु ।
यया पातं पातं पदकमलयोः पर्वतचरो
हरो हा रोषार्द्रामनुनयति शैलेन्द्रतनयाम् ॥ ११ ॥

हरन्तो निःशङ्कं हिमकरकलानां रुचिरतां
किरन्तः स्वच्छन्दं किरणमयपीयूषनिकरम् ।
विलुम्पन्तु प्रौढा हरिहृदयहाराः प्रियतमा
ममान्तः संतापं तव चरणशोणाम्बुजनखाः ॥ १२ ॥

मिषान्माणिक्यानां विगलितनिमेषं निमिषता-
ममन्दं सौन्दर्यं तव चरणयोरम्बुधिसुते ।
पदालंकाराणां जयति कलनिक्वाणनपटु-
रुदञ्चन्नुद्दामः स्तुतिवचनलीलाकलकलः ॥ १३ ॥

मणिज्योत्स्नाजालैर्निजतनुरुचां मांसलतया
जटालं ते जङ्घायुगलमघभङ्गाय भवतु ।

भ्रमन्ती यन्मध्ये दरदलितशोणाम्बुजरुचां
दृशां माला नीराजनमिव विधत्ते मुररिपोः ॥ १४ ॥

हरद्गर्वं सर्वं करिपतिकराणां मृदुतया
भृशं भाभिर्दम्भं कनकमयरम्भावनिरुहाम् ।
लसज्जानुज्योत्स्नातरणिपरिणद्धं जलधिजे
तवोरुद्वन्द्वं नः श्लथयतु भवोरुज्वरभयम् ॥ १५ ॥

कलक्वाणां काञ्चीं मणिगणजटालामधिवह-
न्वसानः कौसुम्भं वसनमसनं कौस्तुभरुचाम् ।
मुनिव्रातैः प्रातः शुचिवचनजातैरतिनुतं
नितम्बस्ते बिम्बं हसति नवमम्बाम्बरमणेः ॥ १६ ॥

जगन्मिथ्याभूतं मम निगदतां वेदवचसा-
मभिप्रायो नाद्यावधि हृदयमध्याविशदयम् ।
इदानीं विश्वेषां जनकमुदरं ते विमृशतो
विसंदेहं चेतोऽजनि गरुडकेतोः प्रियतमे ॥ १७ ॥

अनल्पैर्वादीन्द्रैरगणितमहायुक्तिनिवहै-
र्निरस्ता विस्तारं क्वचिदकलयन्ती तनुमपि ।
असत्ख्यातिव्याख्याधिकचतुरिमाख्यातमहिमा
वलग्ने लग्नेयं सुगतमतसिद्धान्तसरणिः ॥ १८ ॥

निदानं शृङ्गारप्रकरमकरन्दस्य कमले
महानेवालम्बो हरिनयनरोलम्बवरयोः ।
निदानं शोभानां निधनमनुतापस्य जगतो
जवेनाभीतिं मे दिशतु तव नाभीसरसिजम् ॥ १९ ॥

गभीरामुद्वेलां प्रथमरसकल्लोलमिलितां
विगाढुं ते नाभीविमलसरसीं गौर्मम मनाक् ।
पदं यावन्न्यस्यत्यहह विनिमग्नैव सहसा
नहि क्षेमं सूते गुरुमहिमभूतेष्वविनयः ॥ २० ॥

कुचौ ते दुग्धाम्भोनिधिकुलशिखामण्डनमणे
हरेते सौभाग्यं यदि सुरगिरेश्चित्रमिह किम् ।
त्रिलोकीलावण्याहरणनवलीलानिपुणयो-
र्ययोर्दत्ते भूयः करमखिलनाथो मधुरिपुः ॥ २१ ॥
हरक्रोधत्रस्यन्मदननवदुर्गद्वयतुलां
दधत्कोकद्वन्द्वद्युतिदमनदीक्षाधिगुरुताम् ।
तवैतद्वक्षोजद्वितयमरविन्दाक्षमहिले
मम स्वान्तध्वान्तं किमपि च नितान्तं गमयतु ॥ २२ ॥
अनेकब्रह्माण्डस्थितिनियमलीलाविलसिते
दयापीयूषाम्भोनिधिसहजसंवासभवने ।
विधोश्चित्तायामे हृदयकमले ते तु कमले
मनाङ् मन्निस्तारस्मृतिरपि च कोणे निवसतु ॥ २३ ॥
मृणालीनां लीलाः सहजलवणिम्ना लघयतां
चतुर्णां सौभाग्यं तव जननि दोष्णां वदतु कः ।
लुठन्ति स्वच्छन्दं मरकतशिलामांसलरुचः
श्रुतीनां स्पर्धां ये दधत इव कण्ठे मधुरिपोः ॥ २४ ॥
अलभ्यं सौरभ्यं कविकुलनमस्या रुचिरता
तथापि त्वद्धस्ते निवसदरविन्दं विकसितम् ।
कलापे काव्यानां प्रकृतिकमनीयस्तुतिविधौ
गुणोत्कर्षाधानं प्रथितमुपमानं समजनि ॥ २५ ॥
अनल्पं जल्पन्तु प्रतिहतधियः पल्लवतुलां
रसज्ञामज्ञानां क इव कमले मन्थरयतु ।
त्रपन्तु श्रीभिक्षावितरणवशीभूतजगतां
कराणां सौभाग्यं तव तुलयितुं तुङ्गरसनाः ॥ २६ ॥
समाहारः श्रीणां विरचितविहारो हरिदृशां
परीहारो भक्तप्रभवभवसंतापसरणेः ।

प्रहारः सर्वासामपि च विपदां विष्णुदयिते
ममोद्धारोपायं तव सपदि हारो विमृशतु ॥ २७ ॥

अलं कुर्वाणानां मणिगणघृणीनां लवणिमा
यदीयाभिर्भाभिर्भजति महिमानं लघुरपि ।
सुपर्वश्रेणीनां जनितपरसौभाग्यविभवा-
स्तवाङ्गुल्यस्ता मे ददतु हरिवामेऽभिलषितम् ॥ २८ ॥

तपस्तेपे तीव्रं किमपि परितप्य प्रतिदिनं
तव ग्रीवालक्ष्मीलवपरिचयादाप्तविभवम् ।
हरिः कम्बुं चुम्बत्यथ वहति पाणौ किमधिकं
वदामस्तत्रायं प्रणयवशतोऽस्यै स्पृहयति ॥ २९ ॥

अभूदप्रत्यूहः सकलहरिदुल्लासनविधि-
र्विलीनो लोकानां स हि नयनतापोऽपि कमले ।
तवास्मिन्पीयूषं किरति वदने रम्यवदने
कुतो हेतोश्चेतो विधुरयमुदेति स जलधेः ॥ ३० ॥

मुखाम्भोजे मन्दस्मितमधुरकान्त्या विकसतां
द्विजानां ते हीरावलिविहितनीराजनरुचाम् ।
इयं ज्योत्स्ना कापि स्रवदमृतसंदोहसरसा
ममोद्यद्दारिद्र्यज्वरतरुणतापं तिरयतु ॥ ३१ ॥

कुलैः कस्तूरीणां भृशमनिशमाशास्यमपि च
प्रभातप्रोन्मीलन्नलिननिवहैरश्रुतचरम् ।
वहन्तः सौरभ्यं मृदुगतिविलासा मम शिवं
तव श्वासा नासापुटविहितवासा विदधताम् ॥ ३२ ॥

कपोले ते दोलायितललितलोलालकवृते
विमुक्ता धम्मिल्लादभिलसति मुक्तावलिरियम् ।
स्वकीयानां बन्दीकृतमसहमानैरिव बला-
न्निबध्योर्ध्वं कृष्टा तिमिरनिकुरम्बैर्विधुकला ॥ ३३ ॥

  

प्रसादो यस्यायं नमदमितगीर्वाणमुकुट-
प्रसर्पज्ज्योत्स्नाभिश्चरणतलपीठार्चितविधिः ।
दृगम्भोजं तत्ते गतिहसितमत्तेभगमने
वने लीनैर्दीनैः कथय कथमीयादिह तुलाम् ॥ ३४ ॥

दुरापा दुर्वृत्तैर्दुरितदमने दारुणभरा
दयार्द्रा दीनानामुपरि दलदिन्दीवरनिभा ।
दहन्ती दारिद्र्यद्रुमकुलमुदारद्रविणदा
त्वदीया दृष्टिर्मे जननि दुरदृष्टं दलयतु ॥ ३५ ॥

तव श्रोत्रे फुल्लोत्पलसकलसौभाग्यजयिनी
सदैव श्रीनारायणगुणगणौघप्रणयिनी ।
रवैर्दीनां लीनामनिशमवधानातिशयिनी
ममाप्येतां वाचं जलधितनये गोचरयताम् ॥ ३६ ॥

प्रभाजालैः प्राभातिकदिनकराभापनयनं
तवेदं खेदं मे विघटयतु ताटङ्कयुगलम् ।
महिम्ना यस्यायं प्रलयसमयेऽपि क्रतुभुजां
जगत्पायं पायं स्वपिति निरपायं तव पतिः ॥ ३७ ॥

निवासो मुक्तानां निबिडतरनीलाम्बुदनिभ-
स्तवायं धम्मिल्लो विमलयतु मल्लोचनयुगम् ।
भृशं यस्मिन्कालागुरुबहुलसौरभ्यनिवहैः
पतन्ति श्रीभिक्षार्थिन इव मदान्धा मधुलिहः ॥ ३८ ॥

विलग्नौ ते पार्श्वद्वयपरिसरे मत्तकरिणौ
करोन्नीतैरञ्चन्मणिकलशमुग्धास्यगलितैः ।
निषिञ्चन्तौ मुक्तामणिगणजयैस्त्वां जलकणै-
र्नमस्यामो दामोदरगृहिणि दारिद्र्यदलिताः ॥ ३९ ॥

अये मातर्लक्ष्मि त्वदरुणपदाम्भोजनिकटे
लुठन्तं बालं मामविरलगलद्बाष्पजटिलम् ।

सुधासेकस्निग्धैरतिमसृणमुग्धैः करतलैः
स्पृशन्ती मा रोदीरिति वद समाश्वास्यसि कदा ॥ ४० ॥
रमे पद्मे लक्ष्मि प्रणतजनकल्पद्रुमलते
सुधाम्भोधेः पुत्रि त्रिदशनिकरोपास्तचरणे ।
परे नित्यं मातर्गुणमयि परब्रह्ममहिले
जगन्नाथस्याकर्णय मृदुलवर्णावलिमिमाम् ॥ ४१ ॥

इति पण्डितराजश्रीजगन्नाथविरचिता लक्ष्मीलहरिः समाप्ता ।

---

## १न्यायवाचस्पतिश्रीरुद्रकविकृतो भावविलासः ।

यः फल्गूकृतफाल्गुनो रणभुवि प्रौढप्रतापानल-
ज्वालाभिः प्रतिपक्षपक्षविपिनश्रेणीर्ददाह क्षणात् ।
योऽभूद्भूसुरभूरुहोऽत्र **भगवद्दासो** निवासः श्रियां
तस्मादाविरभूत्प्रभूतमहिमा **श्रीमानसिंहो** नृपः ॥ १ ॥
सङ्ग्रामोद्दामधामप्रतिभटपृतनाकण्ठरक्तोपरक्ता
येनाकीर्य स्वसेनाश्वतुरुदधिजलैः क्षालिता खड्गधारा ।
गाढं शस्त्राभिघातादरिमदकरिणां दानमाच्छिद्य सद्यो
हस्ते न्यस्तं च येन क्षपितरिपुकुले दक्षिणे दक्षिणेन ॥ २ ॥
तत्खड्गाघातजातव्यथरिपुवनितामुक्तबाष्पाम्बुधारा-
सारादारादुदारा दिशि दिशि सरितो नोद्भटाश्चेद्भवेयुः ।
कल्पान्तक्रूरसूरप्रकरविजयिनो विस्फुरत्तत्प्रतापा-
न्पारावारानपारानपि सपदि पराञ्छुष्यतः पूरयेत्कः ॥ ३ ॥

---

१. अयं कविर्भावसिंहमहीपतेः समये बभूवेत्यस्मिन्नेव ग्रन्थे स्फुटम्. स च भावसिंहमहीपतिर्वर्तमानजयपुरमहाराजस्य षोडशः पूर्वपुरुषः ख्रिस्तसंवत्सरीयसप्तदशशतकप्रारम्भ एवासीत्. यतो भावसिंहमहीपतेर्जनकोऽतिप्रसिद्धो मानसिंहमहीपतिर्दिल्लीबादशाहो जल्लालुद्दीनापरनामाक्बरशाहश्च समकालीनौ. अकबरशाहस्य राज्यसमयस्तु १५५६ मितात्ख्रिस्तसंवत्सरादारभ्य १६०५ मितख्रिस्तसंवत्सरपर्यन्तमासीत्.

श्रीमाञ्छ्रीमानसिंहक्षितिपतिजलधेरुद्गतो भावसिंहः
पूर्णः पीयूषभानुर्विलसति किरणध्वस्तदैन्यान्धकारः ।
स्फारस्फारस्तुषाराचलसुरतटिनीहंसहारानुकाराः
कीर्तिज्योत्स्नाः पिबन्ति प्रतिदिशमनिशं यस्य विद्वच्चकोराः ॥ ४ ॥

यस्य स्फारासिधाराहतिदलितभुजभ्रष्टखड्गप्रमुष्टि-
प्राच्योदीच्य[प्रतीच्य]प्रभृतिनृपतिभिर्दर्शिता पृष्ठलक्ष्मीः ।
हर्षादुत्तंसयन्ते दिशि दिशि सुदृशो भूरिशो यस्य नित्यं
व्याकोशं कीर्तिपुष्पं चतुरुदधितटीवृक्षवाटीविलासि ॥ ५ ॥

रिङ्गत्तुङ्गतुरंगबन्धुरखुरक्षुण्णक्षमामण्डल-
क्षुभ्यद्धूलिपरम्पराजलधरध्वस्तार्चिषि व्योमनि ।
दोष्णोर्यस्य करालकालरसनाकल्पा कृपाणीलता
विद्युद्वल्लिरिवानिशं प्रतिदिशं लोकैरलोकि प्रभोः ॥ ६ ॥

यद्गन्धद्विपदानवारिभिरभूत्सङ्ग्रामभूः पङ्किला
तस्यां वैरिकरीन्द्रमौक्तिकमयं बीजं च येनाहितम् ।
तस्मादाविरभूद्यशस्तरुरयं तस्योद्गताः कोरका-
स्तारास्तेषु च पूर्णचन्द्रकपटादेकैक उज्जृम्भते ॥ ७ ॥

घूर्णन्ते तूर्णमेते कुलधरणिभृतो दिग्द्विपा दिग्विदिक्षु
क्षुभ्यन्ति क्षोभयन्ति क्षितिमतिमुदितो मर्मणा कूर्मराजः ।
प्रस्थाने यस्य गर्जत्करटिघनघटासंभ्रमन्यञ्चदुर्वी-
मूर्वीं दर्वीकरेन्द्रः कलयितुमदितश्वासमार्तिं बिभर्ति ॥ ८ ॥

योऽसौ प्रत्यर्थिनारीनयनजलभरप्रोन्मिषन्नीरराशि-
प्रोन्मीलत्कीर्तिचन्द्रः क्षितिपकुलमणिर्भानुवंशावतंसः ।
यद्दोरुद्दामचापध्वनिजनितरुषो जामदग्न्यस्य राम-
ज्यानिर्घोषभ्रमेण भ्रमति विचलितस्यारुणा दिक्षु दृष्टिः ॥ ९ ॥

खेलन्ती व्योमगर्भे दिशि विदिशि मुहुर्निष्पतन्ती हरन्ती
शश्वत्प्रौढान्धकारानखिलजनमनोविस्मयं वर्धयन्ती ।

यस्य स्फारासिधारा तडिदिव तरला वैरिकण्ठोपकण्ठं
प्राप्ता सद्यो नटीव प्रणयकुतुकिनी मोहमाविष्करोति ॥ १० ॥

यस्याग्निः कोपपुञ्जे वसति खुरपुटे वाजिनां गन्धवाहो
लक्ष्मीः सस्नेहदृष्टौ कमठकुलमणेर्वाचि वाचामधीशा ।
रूक्षे कौक्षेयकाग्रे क्षपितरिपुगणे कोपनोऽसौ कृतान्तः
कस्तं श्रीभावसिंहं प्रबलमखभुजामाश्रयं नाश्रयेत ॥ ११ ॥

रत्नान्यम्बुधितोयगर्भमगमन्मेरुः सुराञ्छिश्रिये
स्वीयाङ्के कमलां निधाय विदधौ निद्रां हरिर्नीरधौ ।
यस्मिन्दित्सति भूरिदातरि नृणां भासस्थले दुर्लिपी-
व्रीडानम्रशिराः कमण्डलुजलं जग्राह मार्ष्टुं विधिः ॥ १२ ॥

पादे कङ्कणमर्पयन्ति करयोर्मञ्जीरमातन्वते
काञ्चीदाम च कुर्वते कुचतटे हारान्नितम्बेषु च ।
नेपथ्यग्रहणे बताग्रजनुषामेणीदृशो भूरिशो
यस्मिन्दानगुरौ महीसुरतरौ विश्वंभरां बिभ्रति ॥ १३ ॥

फूत्कारेण कुमूर्च्छितस्य कटुभिः कीटान्तराणां रवै-
र्बालानां रुदितारवैरपि च ये निन्युर्विनिद्रा निशाः ।
यस्मिन्दातरि यापयन्ति त इमे हेषास्वनैर्बृंहितै-
र्वामानां करकङ्कणध्वनिभिरप्युज्जागरा यामिनीः ॥ १४ ॥

यस्मिन्दित्सति दातरि द्विजनुषो दर्भाङ्कुराकर्षण-
क्रूरैः पाणितलैर्वधूस्तनतटे बध्नन्ति मुक्तास्रजः ।
शीतोष्णश्रमकर्कशैरतिकृशैरङ्गैः प्रियालिङ्गितैः
कान्ता रुक्मपरिच्छदाः शशिनिभाः शय्याः समध्यासते ॥ १५ ॥

ऐश्वर्यं नहुषस्य विष्णुविषयश्रद्धाम्बरीषस्य सा
पाण्डित्यं धनुषश्च पाण्डुजनुषो गाम्भीर्यमम्भोनिधेः ।
दातृत्वं बलिकर्णयोरिह जगत्येकत्र चेत्स्यात्तदा
तस्य श्रीयुतभावसिंहनृपतेः साम्यं समुन्मीलतु ॥ १६ ॥

काव्यालापकलाकलापकलनावैदग्ध्यदीक्षागुरो-
भूमीकल्पतरोरशेषजनतासंगीतकीर्तेरिह ।
तस्याज्ञामधिगत्य यः कविकुलानन्दाय संपादितः
संदर्भस्तममत्सराः कृतधियः कुर्वन्तु कर्णातिथिम् ॥ १७ ॥

जिह्मो लोकः कथयति पुरो हन्त हित्वा गुणौघा-
नम्भः क्षारं गुणगणनिधेस्तस्य रत्नाकरस्य ।
विष्वक्छिद्रानुसरणसमारूढसर्वेन्द्रियाणां
दोषे दृष्टिः पिशुनमनसां नानुरागो गुणेषु ॥ १८ ॥

गुणिनां गुणेषु सत्स्वपि पिशुनजनो दोषमात्रमादत्ते ।
कुसुमे फले विरागी क्रमेलकः कण्टकौघमिव ॥ १९ ॥

सुजनानामपि हृदयं पिशुनपरिष्वङ्गमलिनमिह भवति ।
पवनः परागवाही रथ्यासङ्गे रजस्वलो भवति ॥ २० ॥

लोक एष गतलोचनत्रपः कस्य वा न विवृणोति वाच्यताम् ।
लोचनोत्सवमशेषजीवनं यत्कलङ्कयति चन्द्रमण्डलम् ॥ २१ ॥

पिशुन समारोहसि किं सुजनसमाजानभीष्टसौजन्यः ।
करटोऽपि किं नु लभते कलकण्ठपदं रसालमौलिगतः ॥ २२ ॥

द्विरदरदनप्रौढाघातान्न तादृशसंभ्रमः
परशुपतनादस्य त्रासो न हन्त तथाविधः ।
अयमविरतं क्रोडे क्रीडन्हताशहुताशनो
दलयति यथा मर्मात्यर्थं तरोर्न तथापरः ॥ २३ ॥

आपातमलिनिमासौ सहृदयहृदये न दोषाय ।
अङ्गारयोगजन्मा निसर्गशुद्धे यथा स्फटिके ॥ २४ ॥

केनादिष्टौ कमलकुमुदोन्मीलने पुष्पवन्तौ
विश्वं तोयैः स्नपयितुमसौ केन वा वारिवाहः ।
विश्वानन्दोपचयचतुरो दुर्जनानां दुरापः
श्लाघ्यो लोके जयति महतामुज्ज्वलोऽयं निसर्गः ॥ २५ ॥

कस्मादिन्दुरसौ धिनोति जगतीं पीयूषगर्भैः करैः
कस्माद्वा जलधारयैष धरणिं धाराधरः सिञ्चति ।
श्रामं श्राममयं च नन्दयति वा कस्मात्त्रिलोकीं रविः
साधूनां हि परोपकारकरणे नोपाध्यपेक्षं मनः ॥ २६ ॥

तोयानामधिपतिराकरो मणीनां शैलानामभयपदं महान्महद्भ्यः ।
अग्राह्यो भवसि यदि त्वमेव तावत्को नु स्याज्जगति तदा जनावलम्बः ॥२७॥

कुम्भोद्भवस्य करपुष्करकोषकोणे
पाथोनिधौ विधिवशाद्द्विपदं प्रयाते ।
ये दुर्लभास्त्रिदिवलोकविलासिनीनां
ते पङ्कसीमनि महामणयो लुठन्ति ॥ २८ ॥

गरलं यदि जलराशेरिदमुत्पन्नं किमेतेन ।
तेनैवास्य तु महिमा यदभूत्पीयूषपारिजातादि ॥ २९ ॥

पीयूषपारिजाताद्याः के नाभूवन्पयोनिधेः ।
रत्नैरेव तथाप्येष रत्नाकरपदं गतः ॥ ३० ॥

गुणिनः क इव विशेषो गुणरहिते जननि निरणायि ।
येन विहाय गुणाश्रयमगुणे गाढानुरागासि ॥ ३१ ॥

हरिभामिनि सिन्धुसंभवे कमले किं कथयामि ते गुणान् ।
अनुरज्यसि हा जडे जने गुणगौरे पुरुषे विरज्यसि ॥ ३२ ॥

मधूके माध्वीकं पिबसि शतपत्रेऽभिरमसे
मधूलीपालीभिर्मधुप सहकारे विहरसि ।
वसन्ते वासन्तीमधु मधुरमश्नासि बहुशो
दुरावेशोऽयं ते तदपि कुटजे यद्विचरसि ॥ ३३ ॥

मधूलीमन्विष्यन्मलयपवनान्दोलितदले
मुधा मुग्धः कुन्दस्तबकनिकुरम्बे विचरसि ।
ततः कान्तादन्तच्छदनवसुधासारमधुरे
बधान प्रेमाणं मधुकर नवाम्भोजमधुनि ॥ ३४ ॥

निःशङ्कं गजपतिगण्डदानधारामाराध्य भ्रमर दिनान्यमून्यनैषीः ।
यावन्न स्फुरति करालकर्णतालस्तावत्त्वं नवनलिनीवनीमुपेयाः ॥ ३५ ॥

मधु नवसुधास्वादं तावन्निपाय्य निरन्तरं
निशि निशि निजक्रोडे कामं ययासि निवेशितः ।
स्मरसि किमु तामेतामद्य त्वदेकपरायणां
भ्रमर नलिनीं दिक्षु भ्राम्यंल्लताशतलम्पटः ॥ ३६ ॥

इह रूपमात्रसारे चित्रकृते कनककह्लारे ।
न रसो नापि च गन्धो मधुकर बन्धो मुधा भ्रमसि ॥ ३७ ॥

न चेतश्चाम्पेयस्तबकनिकुरम्बेऽभिरमते
समुत्कण्ठा काचिन्न च विकचपुंनागमुकुले ।
न मल्लीवल्लीनामपि मधुनि वाञ्छा मधुलिहः
समाघ्रातो नूनं यदवधि लवङ्गीपरिमलः ॥ ३८ ॥

भ्रम स्वैरं भ्रातर्भ्रमर नवयूथीषु बहुशो
मधूलीमन्विष्यन्कुमुदवनवीथीषु विचर ।
वसन्तप्रारम्भस्फुरितमधुसंभारसुभगो
न ते विस्मर्तव्यः क्वचन सहकारव्यतिकरः ॥ ३९ ॥

आस्वाद्यात्र मधूनि षट्पद मदं मा गाः कषायाङ्कुरै-
र्माकन्देन पिकान्प्रतारितवता मूर्धानमध्यासितः ।
प्रत्यासन्नतमे पिकेऽपि भवते येनार्पिता तादृशी
माध्वी तस्य विवेकविच्युतिरियं साद्गुण्यमेतन्न ते ॥ ४० ॥

नीरजान्यपि निषेव्य निर्भरं नीरसानि कुटजानि वाञ्छसि ।
चञ्चलत्वमिह चञ्चरीक ते साहजं कथमिदं विमोक्ष्यसि ॥ ४१ ॥

पीतमत्र मधु यापिता क्षपा भृङ्ग सर्वमचिरेण विस्मृतम् ।
हीयमानसुषमां हिमागमे पद्मिनीं यदिह नावलोकसे ॥ ४२ ॥

एणीदृशः श्रवणसीम्नि यदानयन्ति
तेनैव तस्य महिमा नवचम्पकस्य ।

त्वं तत्र नो विहरसे यदि भृङ्ग तेन
नैतस्य किंचिदपि तत्तु तवैव हानिः ॥ ४३ ॥

गलितानि मधूनि सर्वतो विनिकीर्णानि दलानि मारुतैः ।
अधुनापि न हन्त माधवीं मधुपैनामिह नाम मुञ्चसि ॥ ४४ ॥

उपानीतं दूरात्परिमलमुपाघ्राय मरुता
समायासीदस्मिन्मधुरमधुलोभान्मधुकरः ।
परो दूरे लाभः कुपितफणिनश्चन्दनतरोः
पुनर्जीवन्यायाद्यदि तदिह लाभोऽयमतुलः ॥ ४५ ॥

भ्रातर्भ्राम्य लवङ्गवल्लिषु पिब स्वैरं नवाम्भोरुहे
माध्वीं माधविकामधूनि मधुराण्याकण्ठमास्वादय ।
कस्मादापतितोऽसि केतकमिदं यस्मिन्नुदीर्णं रजो
दृष्टिं लुम्पति सूचयः प्रवितताः कृन्तन्ति मर्माण्यपि ॥ ४६ ॥

सहसा समये समीयुषो रुचितामङ्गविशेषशून्ययोः ।
इह षट्पदपङ्कजन्मनोर्नमनोग्लानिरसावुपैष्यति ॥ ४७ ॥

नालिङ्गिता नवलवङ्गलता न चापि
संभाविता विटपिनः कलगुञ्जितेन ।
आसादिता सपदि काचन रीतिरन्या
माकन्दकोरकमुदीक्ष्य मधुव्रतेन ॥ ४८ ॥

किं न पश्यसि महेन्द्रदिङ्मुखे शीतदीधितिरसावुदञ्चति ।
मीलितैव नलिनीह मा कृथास्तन्मधुव्रत मुधा गतागतम् ॥ ४९ ॥

कुन्दकुड्मलमुपास्यतां त्वया यत्र शीतसमयोऽतिवाहितः ।
चञ्चरीक परिहीणसौरभा रोचते न भवते सरोजिनी ॥ ५० ॥

अये मधुप मा कृथा, बत वृथा मनोदीनतां पृथ्वी छन्द
तुषारसमये लताशतनिषेवणव्याकुलः ।
इयं पुरत एव ते, सरसपुष्पमासोदये
रसालनवमञ्जरीमधुझरी जरीजृम्भते ॥ ५१ ॥

चञ्चरीक चतुरोऽसि चन्द्रिकावैभवे कुमुदिनीं निषेवसे।
भास्करे जयति पुष्करे करैरुन्मिषन्नवदलेऽनुरज्यसि ॥ ५२ ॥

इतो वसन्तहेमन्तद्वैराज्यादिव दुर्मनाः।
न कुन्दे नापि माकन्दे पदं बध्नाति षट्पदः ॥ ५३ ॥

मा गाः खेदं कमल किरणैरेष पीयूषगर्भैः
प्रालेयांशुर्यदिह कुमुदामोदमाविष्करोति।
नानुग्राह्यं यदसि महतामीदृशानामयं ते
मन्ये कालादिह परिणतः प्राक्तनो दुर्विपाकः ॥ ५४ ॥

यावत्त्वां न खलु हसन्ति कैरविण्यो यावत्त्वां तरणिकराः परामृशन्ति।
यावत्ते मधुविभवो नवोऽस्ति तावन्माध्वीकं वितर सरोज षट्पदेभ्यः ॥ ५५ ॥

रुचिरतिरुचिरा शुचित्वमुच्चैः शिरसि धृतः स्वयमेव शंकरेण।
कमलिनि मलिनीकरोषि कस्मान्मुखमिदमिन्दुमुदीक्ष्य लोककान्तम् ॥ ५६ ॥

नलिनि निपुणतां वदामि किं ते भ्रमरविलासविशेषलालसायाः।
त्रिभुवननयनोत्सवं यदिन्दुं न नयसि हन्त दृगन्तवर्त्मसीमाम् ॥ ५७ ॥

न कुले नापि च शीले न चापि रूपेऽस्ति कश्चिदुत्कर्षः।
यत्पुष्णासि मिलिन्दानरविन्द महत्त्वमेतत्ते ॥ ५८ ॥

वैदग्ध्यं मृगलाञ्छनस्य मनसो निर्माति मे न व्यथां
नो दूये चिरलालिता मधुलिहः सर्पन्ति यन्नान्तिकम्।
जल्पन्तीव दुरक्षराणि मधुपश्रेणीध्वनिच्छद्मना
यत्कादम्ब कुमुद्वती हसति मां तन्मे मनस्ताम्यति ॥ ५९ ॥

मरन्दलोभान्न मिलिन्दमाला भेजे न बाला श्रवणे निनाय।
हा हन्त नालीकमिदं दुरन्तप्रालेयपाली कवलीचकार ॥ ६० ॥

एकस्मिन्ननिरावयोः समजनि स्वच्छे सरोवारिणि
भ्रातः किं च सहैव कानिचिदहान्यत्र व्यतीतानि नौ।
लब्धं तामरस त्वया मृगदृशां कर्णावतंसास्पदं
शेवालं विलुठामि पामरवधूपादाहते पाथसि ॥ ६१ ॥

विश्रम्य काननमसौ दिवसावसाने
त्वय्येव षट्पदयुवा हृदयं बबन्ध ।
राजीव चेन्मलिनिमानमुरीकरोषि
कः स्यादहो मधुलिहामधुनावलम्बः ॥ ६२ ॥

मिलसि मनोज्ञे मनसा मालति मलिनेन वारिवाहेण ।
कुसुमाकरे विरज्यसि मुग्धे वैदग्ध्यमीदृशं कस्मात् ॥ ६३ ॥

सौरभ्येण समावृणोषि ककुभः पुष्णासि पुष्पंधयां-
ल्लूतातन्तुवृतस्तथापि कियतीस्त्वं यापयेर्यामिनीः ।
अस्मिन्दाशपुरे पुरस्तत इतो विन्यस्तचित्रामिषे
मालाकारमृते लवङ्गि ललितान्कस्ते गुणाञ्ज्ञास्यति ॥ ६४ ॥

संदर्शयस्व मधुवैभवमस्ति यत्ते
रे कुन्द किं दुरभिमानमुरीकरोषि ।
एतन्न चेतसि करोषि सरोजबन्धुः
पुष्पंधयोऽपि मयि सौरभमातनोति ॥ ६५ ॥

एष षट्पदयुवा यदायताः कुन्द यापयति यामिनीस्त्वयि ।
दुर्वहा तदपि नापचीयते पद्मिनीविरहवेदना हृदि ॥ ६६ ॥

आस्वाद्यैष कषायमङ्कुरमुरुप्रेमानुबद्धाशयो
माकन्दस्य यशांसि कोकिलयुवा निर्माति दिग्भित्तिषु ।
माध्वीकानि निपीय तस्य मधुपास्तत्रैव गुञ्जन्त्यमी
को ब्रूतामसतां सतां द्विजनुषां मर्मातिगं चेष्टितम् ॥ ६७ ॥

न पश्यति लवङ्गिकां न च निषेवते मालतीं
रसाल रसिकस्तथा न नलिनीवनीमञ्चति ।
भवन्तमयमीहते मधुपलक्षपक्षानिलाः
क्षिपन्ति यदमुं जने जयति तत्तवैवायशः ॥ ६८ ॥

शश्वन्निसर्गमलिनाः सहकार कामं
लुण्ठन्ति तान्यपि मधून्यहह द्विरेफाः ।

युक्तं न तत्तव कषायरसप्ररोहै-
रेतान्प्रतारयसि यत्कलकण्ठयूनः ॥ ६९ ॥

स्निग्धाग्राः फलिनो दलत्परिमलैः पुष्पैर्मधुस्यन्दिनो
नानन्दाय भवन्ति किं वनभुवां भूमीरुहो भूरिशः ।
माधुर्यं मधुनस्तवैव विदितं माकन्द मन्यामहे
माध्वीमर्मविदो दृढं मधुलिहः स्यूता यतो मर्मणि ॥ ७० ॥

विमुक्ता वासन्ती बकुलकुसुमे नापि मिलितं
व्यलोकि व्याकोशः क्षणमपि न कोऽपि क्षितिरुहः ।
यमालोक्योत्कण्ठातरलमिह भृङ्गेन चलितं
विदूरान्माकन्दः स खलु दलितो यूथपतिना ॥ ७१ ॥

उन्मीलयन्ति कुसुमानि मनोरमाणि
के नाम नात्र तरवः समयोचितानि ।
कस्येदृशं कथय दोहदमस्ति तस्य
यादृग्विनिर्मितमशोकमहीरुहस्य ॥ ७२ ॥

गर्वायसे विकचकोरकपुञ्जगुञ्ज-
दुद्वृत्तषट्पदघटाविभवेन किं नु ।
वामभ्रुवां चरणताडनदोहदानि
किं नाम न स्मरसि तावदशोक तानि ॥ ७३ ॥

करट कलकण्ठशावकमेनं पुष्णासि किं मुधायासैः ।
अयमिह पुरा सपक्षः परिचयमपि ते न जानीते ॥ ७४ ॥

कलयसि मृणालकन्दं विहरसि बिसिनीदलेषु सानन्दम् ।
अयि राजहंस शंस त्यजसि मनोहारि कथमिदं वारि ॥ ७५ ॥

नेदं सरः सरसवारि न वारिजं वा
नैतन्मधूनि मधुपाः सहवासिनो वा ।
हेमारविन्दवनवासविलासभाजो
रे हंस मानसजुषस्तव मानसेऽपि ॥ ७६ ॥

अत्र स्नातमिहोपभुक्तममलं भूयो मृणालीदलं
याभ्यां शश्वदिहान्वभूयत सुखं कल्लोलहिन्दोलजम् ।
कष्टं तावशनिध्वनिप्रणयिभिः प्रौढानिलास्फालितैः
स्फाराम्भोधरमण्डलैर्विघटितौ चक्राङ्गचक्राह्वयौ ॥ ७७ ॥

दूरादेष निशां निरस्य ककुभामुन्मूल्य गाढं तमः
प्रेमाणं युवयोर्व्यनक्ति तरणिर्विश्लेषदुःखं नुदन् ।
एतस्याङ्ग रथाङ्ग चण्डमहसो मा गाः समीपं व्रज-
न्प्रीतिं हास्यसि निष्पतिष्यसि पुनर्निर्दग्धपक्षः क्षणात् ॥ ७८ ॥

आयातैव विभावरी विभजते नो निर्दयोऽयं विधिः
स्तापाङ्गि रथाङ्गि पश्यसि मुधा चित्तव्यथां मा कृथाः ।
दैवं संप्रति गर्हयाव बहुशो निर्माय येनावयो-
र्गाढं प्रेम विनिर्मितः प्रतिनिशं विच्छेदखेदो महान् ॥ ७९ ॥

कूपेऽम्भांसि पिबन्तु कूपरसिका वापीषु वापीजुषो
नादेयाश्च पतत्रिणोऽपि नितरामास्वादयन्तां पयः ।
सारङ्गस्य नभोनिवेशितदृशः किं तेन यावन्मही-
मम्भोभिः स्नपयन्नसावुदयते न प्रावृषेण्यो घनः ॥ ८० ॥

तापं लुम्पसि सर्वतो वितनुषे मुक्ताफलं शुक्तिषु
क्षेत्रान्सिञ्चसि किं च पल्लवयसि श्रीखण्डमुख्यान्द्रुमान् ।
क्षारं क्षारमिदं जलं जलनिधेरादाय जीमूत हे
विश्वं जीवयसि ब्रवीतु जगति प्रौढोऽपि कस्ते गुणान् ॥ ८१ ॥

ऊषरेषु विवरेषु चाम्भसां वीचयोऽपि भवता प्रवर्तिताः ।
क्षेत्रसीम्नि निहितास्तु बिन्दवो वारिवाह भवतो नवो नयः ॥ ८२ ॥

संपादिताः सपदि दर्दुरदीर्घनादा
यत्कोकिलाकलरुतानि निराकृतानि ।
निष्पीतमम्बु लवणं न तु देवनद्याः
पर्जन्य तेन भवता न कृतो विवेकः ॥ ८३ ॥

यत्तादृशेषु नलिनेषु न पक्षपातो
जातो बत स्फुटमसौ कुटजानुरागः ।
विश्वैकजीवनपटोरपि वारिवाह
दुर्वारवायुवशगस्य न तद्विचित्रम् ॥ ८४ ॥

नैवामी प्रभवन्ति चातकतृषाविच्छेदसंपत्तये
प्रागल्भ्यं दधते न हन्त हरितां संतापशान्तावपि ।
प्रक्षामास्तरणित्विषोऽपि न तिरोधातुं समर्थाः पुनः
क्षुद्राः पिच्छिलयन्ति केवलमपां लेशैः पथस्तोयदाः ॥ ८५ ॥

उद्दामद्युमणिमयूखमूर्च्छितानामेतेषामहह महीरुहामिह स्यात् ।
आलम्बः क इव दिवं भुवं पयोभिः सिञ्चन्तं जगति विहाय वारिवाहम् ॥८६॥

संतापं जगतो विलुम्पसि धरां धाराभिरासिञ्चसि
क्षेत्राण्यङ्कुरयस्यमून्मुकुलयस्यह्नाय नीपद्रुमान् ।
सारङ्गस्य नभोनिवेशितदृशश्चञ्चूपुटीपूरणे
वैमुख्यं व्रजसि त्वमम्बुद यदि प्रत्येतु को नाम तत् ॥ ८७ ॥

तानि तानि कमलानि तज्जलं तानि षट्पदकुलानि ते खगाः ।
सर्वमेकपद एव विच्युतं पङ्कशेषमचिरादभूत्सरः ॥ ८८ ॥

नावर्तो न च तरलास्तरङ्गमाला नेदानीं जलरयजा रवाः करालाः ।
सैव त्वं तटिनि तटद्रुमान्निपात्य प्रौढानामपयशसामिहासि पात्रम् ॥ ८९ ॥

वापी कापि कदापि न श्रुतिचरी को वेद कीदृक्सरो
व्योमाम्भोजवनीव नात्र तटिनी कैर्नाम न ज्ञायते ।
हंहो पान्थ दुरन्तसाहसभरेणेहागतं चेन्मरौ
मण्डूकाकुलपङ्कसंकुलतलादन्धोः[1] कबन्धं पिब ॥ ९० ॥

मूलं कूलमहीरुजां विरुजति क्लिश्नाति तुङ्गास्तटी-
र्विश्लेषं च रथाङ्गयोर्वितनुते राजीविनीः कर्षति ।
श्यामाः शैवलवल्लरीर्वितुदते मथ्नाति वीचीः क्षणा-
त्किं तद्यन्न करोति मारुतवशादम्भोधरः प्रावृषि ॥ ९१ ॥

---

१. कूपाज्जलं पिब.

राजीविनीविपिनसौरभसारगन्धि
योऽभूद्वसन्तदिवसेषु जनैकबन्धुः।
रथ्यारजांसि विकिरन्विरुजन्नगेन्द्रा-
नुन्मत्तवद्भ्रमति पश्यत सोऽद्य वायुः॥ ९२॥

गन्धवाह गहनानि गाहसे गन्धजातमिह संचिनोषि च।
नैपुणच्युतिरियं च तावकी यन्न तत्र सदसद्विवेचनम्॥ ९३॥

निधेः कलानामपि रीतिरेषा मर्माणि मे संस्पृशतीव भूयः।
कुतो विशेषात्कुमुदेऽनुरागः कुतो विरागश्च कुशेशयेषु॥ ९४॥

रञ्जिता न ककुभो निवेशिता नार्चिषो बत चकोरचञ्चुषु।
कष्टमिन्दुरुदयन्निपीयते दारुणेन तमसा बलीयसा॥ ९५॥

लक्ष्मीकेलिगृहे कुशेशयदृशां पाणिद्युतिद्रोहिणि
श्यामासूक्तसुधासहोदरमधुप्रस्यन्दसंदोहिनि।
जीवातुस्त्रिदिवौकसां त्रिजगतामाप्यायनं चन्द्रम-
स्त्वं चेदम्बुरुहे न रज्यसि गुणश्लाघा तदस्तं गता॥ ९६॥

श्रेयान्विधोर्बहुलपक्षपरिक्षयोऽपि
नो पूर्णतापि जलधेरिह वर्णनीया।
यद्वारि न स्पृशति हन्त पृथग्जनोऽपि
यस्यामृतैर्मखभुजोऽपि मुदं भजन्ते॥ ९७॥

आरोपितः शिरसि यः स्वयमीश्वरेण
सिक्तः सदैव सुरशैवलिनीजलेन।
न क्षामतां तदपि मुञ्चति सोऽयमिन्दु-
रेतद्व्यनक्ति दुरतिक्रममेव दैवम्॥ ९८॥

इन्दोर्निन्दतु नाम धाम नलिनी निन्दन्तु चक्राह्वया
नैवानेन सुधाकरस्य सुषमा हानिर्न वा दुर्यशः।
एतेनैव कृतार्थतास्य जनता यन्मोदमालम्बते
यज्ज्योत्स्नासु चिरं चकोरपरिषच्चञ्चूपुटं न्यस्यति॥ ९९॥

या महेशशिरसो विभूषणं या त्रिलोकजनलोचनोत्सवः ।
सेयमिन्दुकलिका दिनागमे तापिता कमिव नातितापयेत् ॥ १०० ॥

उत्साहं वनितासखेषु विरहग्लानेषु दैन्यं शशी
शोकं कोककुटुम्बिनीषु दिशति क्षेमं चकोरीषु च ।
लक्ष्मीं लुम्पति पङ्कजस्य कुमुदामोदाय संपद्यते
तद्बीजं ध्रुवमत्र पूर्वविहितं द्वेषस्य रागस्य च ॥ १०१ ॥

धुनोति ध्वान्तानि व्यपनयति नीहारपटलं
कुलं राजीवानां दलयति रथाङ्गं रमयति ।
जगद्व्यापी देवो जनयति जनानां च नयनं
न याति स्थेमानं यदि तदिह दैवं जयतु कः ॥ १०२ ॥

अरविन्दानि विन्दन्ति व्यथा विरहतो रवेः ।
तेषां विरहतस्तस्य न जाने कीदृगन्तरम् ॥ १०३ ॥

येन शैशवपदे मदेभराङ्गण्डसीम नखरैर्विखण्डितम् ।
यौवनोत्सवमवाप्य केसरी केषु दर्शयतु सोऽद्य पौरुषम् ॥ १०४ ॥

भूमिपालभवने स केसरी पञ्जरे स्फुरति रुद्धपौरुषः ।
उन्मिषत्सु करटेषु कुम्भिनां कः करोति करजार्पणोत्सवम् ॥ १०५ ॥

एतस्य केसरिपतेर्गिरिकाननानि
तानि स्मरन्ति परमस्य पराक्रमस्य ।
अद्यातिदुर्वहजराविकलस्य को नु
प्रत्येतु तानि चरितानि चिरंतनानि ॥ १०६ ॥

मग्नं मत्तैः सरसि करिभिर्विद्रुतं द्वीपिमुख्यै-
र्लीनं कुञ्जे शबरपतिभिर्मूर्छितं रङ्कुयूथैः ।
आकर्ण्योच्चैरिह मृगपतेर्जृम्भमाणस्य नादा-
न्कैः कैः किं किं न खलु चकितैः काननेऽस्मिन्नकारि ॥ १०७ ॥

स्वैरं सैरिभयूथपैरिह सरः शृङ्गेण विक्षोभितं
तावन्न्यङ्कुकुलं च हुंकृतिशतैर्विद्रावितं द्वीपिभिः ।

हेलाक्षिप्तपदे पराक्रमनिधावुज्जृम्भमाणे हरौ
चित्रं सैव तदैव चित्रलिखितेवासीदरण्यस्थली ॥ १०८ ॥

माद्यत्कुञ्जरकुम्भकूटविगलन्मुक्तावदातान्तराः
किंचित्कोपकषायितेन मनसा येनाद्रिपादाः कृताः ।
सोऽयं संप्रति दूषिकाकुलदृशा कष्टां दशामागतः
सिंहः पांसुभिरेणशावकखुरोन्मुक्तैः समाकीर्यते ॥ १०९ ॥

गर्भान्हठेन दलयन्ति करेणुकानां
गण्डूषयन्ति गजगण्डतटीमदाम्भः ।
यद्गर्जितानि जरया मुषितः स एव
कण्ठीरवः परिभवं सहते मृगेभ्यः ॥ ११० ॥

मीलितेक्षणयुगं विगाहसे वारणेन्द्र गहनं न वीक्षसे ।
अन्तिके तृणविमुद्रिताननः कूप एष खलु दुस्तरस्तव ॥ १११ ॥

शैवलानि शिरसा प्रतीच्छतः पद्भिरेव कमलानि लुम्पतः ।
स्वैरिणस्तव सरोविहारिणो वारणेन्द्र विदितो न वो नयः ॥ ११२ ॥

नैवावासमहीरुहं विरहयल्लीलासरो न त्यज-
न्विश्लिष्यन्न करेणुकाभिरभितः श्लिष्यन्न वा कण्टकान् ।
एवं नाम विदूयते मरुमहीमासाद्य मध्यंदिने
संतप्तैः कलभैर्यथा करिपतिः कान्तारगस्ताम्यति ॥ ११३ ॥

न स्वां करेणुमपि नापि निजान्किशोरा-
न्नात्मानमेष परिशोचति वारणेन्द्रः ।
दावाग्निमग्नतनुरत्र यथोपसन्ना-
न्दानार्थिनो मधुकरानधिरूढभावान् ॥ ११४ ॥

हेलाकुड्मलितेक्षणेन करटं कण्डूयतोन्मूलिताः
शाखाचुम्बितचन्द्रबिम्बवपुषो भूमीरुहो भूरिशः ।
छिन्ना कुम्भविघट्टितैर्गिरितटी येनाद्य माद्यन्बला-
देरण्डे स कथं हि गण्डमिभराट् कण्डूयितुं काङ्क्षतु ॥ ११५ ॥

रे यूथनाथ गहनानि विगाहमानो
मश्नासि पादपशतानि भिनत्सि शैलान् ।
किं पौरुषाणि न वदामि हरेः परोक्षं
किं तत्समक्षमथ तानि पलायितानि ॥ ११६ ॥

लीयन्तां मशकास्तृणेषु विहगा गुच्छेषु गुल्मेषु वा
वल्लीषु भ्रमराः क्षुपेषु सृमराः श्वभ्रेषु च श्वापदाः ।
मध्येऽह्नि द्युमणौ महांसि खदिराङ्गारोपमान्युत्किर-
त्युत्तप्तस्य मरौ परं करिपतेर्नास्त्येव विश्रामभूः ॥ ११७ ॥

सरसि न सहसा विनिष्पतेस्त्वं बहिरमलं कलयन्विसारि वारि ।
द्विरदपरिवृढ प्ररूढपङ्के कति करिणोऽत्र मदालसा न मग्नाः ॥ ११८ ॥

आधोरणेन सुतरां च निपीडितोऽसि
धिक्छृङ्खलामपि हठादिह लम्भितोऽसि ।
श्वभ्रोदरे कलभलुब्धमना निपत्य
रे यूथनाथ सहसे बहुयन्त्रणानि ॥ ११९ ॥

साधो किमाधोरण यूथनाथमङ्कुष्ठकेनातितरां दुनोषि ।
नो चेदयं वेद निजानुभावं तज्ज्ञस्य ते कर्तुमिदं न युक्तम् ॥ १२० ॥

तीर्णः कथं वनकिरातशराभिपाता-
न्मुक्तः कथं कथमपि क्षुधितात्तरक्षोः ।
दुर्दैववैभववशान्मृगशावकोऽय-
मुद्दामदावदहने गहने निमग्नः ॥ १२१ ॥

कस्तूरिकाहरिण मुञ्च वनोपकण्ठं
मा सौरभेण ककुभः सुरभीकुरुष्व ।
आस्तां यशो ननु किरातशराभिपाता-
त्त्रातापि हन्त भविता भवतो दुरापः ॥ १२२ ॥

विलपति तनुते गतागतानि स्पृहयति न व्यथिता कुशाङ्कुरेभ्यः ।
अचकमत निरीक्ष्य रुद्धसेणी हरिणमरुंतुदजालबन्धनानि ॥ १२३ ॥

त्वरितेन तरक्षुदर्शनान्निजशावोऽपि मनाङ्‌ न वीक्षितः ।
अधुना हरिणीषु हन्त ते वलते कोऽपि कुरङ्ग विक्रमः ॥ १२४ ॥

कुरु कुञ्चितचिल्लि[1] पामराणां न समाजे सरसानि कौशलानि ।
स्फुटदर्शनमत्र दृग्विलासो न तु वैदग्ध्यमतिस्फुटैव वाणी ॥ १२५ ॥

सूर्याचन्द्रमसौ घनैरतिघनैरेतौ विलुप्तद्युती
स्वच्छन्दं मलिनाः परं जलमुचो वर्षन्ति गर्जन्ति च ।
तुल्या एव सरित्समुद्रसरसीकुल्या बभूवुः क्षणा-
त्कालः क्रीडति कौतुकं विरचयन्कस्मै किमाचक्ष्महे ॥ १२६ ॥

अतुलरूपगुणोचितयोगयोः कमलिनीशशिनोरसमागमात् ।
अपयशो विधिना निजमर्जितं विनिहिता च जनस्य हृदि व्यथा ॥१२७॥

परेषु लोकेषु विचिन्त्य याचनां परोऽपि को नाम न यातु नम्रताम् ।
त्रिलोकनाथोऽपि यया दुरन्तया हठादयं वामनतामनीयत ॥ १२८ ॥

लभते लघुरप्येष सपक्षो लक्ष्यमाशुगः ।
पक्षहीनतया हन्त न धनुर्गुणवानपि ॥ १२९ ॥

मणिरयमनुष्ण इति ते मनसीलायामुदेतु नाश्वासः ।
अचिरेण तरणिकिरणव्यतिकरमात्रेण दन्दहीत्येषः ॥ १३० ॥

घनपांसुविधूसरांशुराशिर्न मणे तापयसे मुधावधान ।
अधिचत्वरवीथि पामरीणाममरीदुर्लभ कस्तव प्रकारः ॥ १३१ ॥

दीर्णोऽसि चेत्कनकसूत्रनिवेशनाय
मुक्ताकलाप किमतो भवतो विषादः ।
यत्पञ्चबाणजयमङ्गलहेमकुम्भे
कुम्भस्तनीस्तनतटे भवितानुषङ्गः ॥ १३२ ॥

येनाकारि महीभृतामविरतं कण्ठेषु लीलायितं
येन प्रापि सरोजसुन्दरदृशां तुङ्गस्तनालिङ्गनम् ।
जातं येन गजेन्द्रगण्डयुगले साधारणं गुञ्जया
मुक्तादाम तदेव पामरपुरे नावाप कां कां दशाम् ॥ १३३ ॥

---

१. कुञ्चितभ्रु यथा स्यात्, चिल्लीशब्दो भ्रूवाचकः।

अन्यापदेशविनिवेशविदग्धबुद्धि-
श्रीभावसिंहनरसिंहनियोगयोगात् ।
संपादितो विविधभावविकासभाजां
प्रीत्यै भृशं भवतु भावविलास एषः ॥ १३४ ॥

सद्गुणानां समुद्रेण रुद्रेण ग्रथिता गुणैः ।
कण्ठस्था श्लोकमालेयं केषां न कुरुते श्रियम् ॥ १३५ ॥

विद्याविलासपुत्रस्य न्यायवाचस्पतेरियम् ।
काव्यालापविदग्धानां मुदं निर्मातु निर्मितिः ॥ १३६ ॥

इति विद्याविलाससूनुन्यायवाचस्पतिश्रीरुद्रकविकृतो भावविलासः समाप्तः ।

---

## महाकविश्रीक्षेमेन्द्रकृता
## चारुचर्या ।

श्रीलाभसुभगः [1]सत्यासक्तः स्वर्गापवर्गदः ।
जयतात्त्रिजगत्पूज्यः सदाचार इवाच्युतः ॥ १ ॥

ब्राह्मे मुहूर्ते पुरुषस्त्यजेन्निद्रामतन्द्रितः ।
प्रातः प्रबुद्धं कमलमाश्रयेच्छ्रीर्गुणाश्रया ॥ २ ॥

पुण्यपूतशरीरः स्यात्सततं स्नाननिर्मलः ।
तत्याज [2]वृत्रहा स्नानात्पापं वृत्रवधार्जितम् ॥ ३ ॥

न कुर्वीत क्रियां कांचिदनभ्यर्च्य महेश्वरम् ।
ईशार्चनरतं [3]श्वेतं नाभून्नेतुं यमः क्षमः ॥ ४ ॥

श्राद्धं श्रद्धान्वितं कुर्याच्छास्त्रोक्तेनैव वर्त्मना ।
भुवि पिण्डं ददौ विद्वान्भीष्मः पाणौ न शंतनोः ॥ ५ ॥

नोत्तरस्यां प्रतीच्यां वा कुर्वीत शयने शिरः ।
शय्याविपर्ययाद्गर्भो दितेः शक्रेण पातितः ॥ ६ ॥

अर्थिभुक्तावशिष्टं यत्तदश्नीयान्महाशयः ।

---

१. सत्ये सत्यभामायां चासक्तः. २ इन्द्रः. ३. श्वेतो नाम मुनिः तत्कथा लिङ्गपुराणे पूर्वार्धे त्रिंशन्मितेऽध्याये द्रष्टव्या.

[1]श्वेतोऽर्थिरहितं भुक्त्वा निजमांसाशनोऽभवत् ॥ ७ ॥
जपहोमार्चनं कुर्यात्सुधौतचरणः शुचिः ।
पादशौचविहीनं हि प्रविवेश नलं[2] कलिः ॥ ८ ॥
न संचरणशीलः स्यान्निशि निःशङ्कमानसः ।
[3]माण्डव्यः शूललीनोऽभूदचौरश्चौरशङ्कया ॥ ९ ॥
न कुर्यात्परदारेच्छां विश्वासं स्त्रीषु वर्जयेत् ।
हतो दशास्यः सीतार्थे हतः पत्न्या विदूरथः[4] ॥ १० ॥
न मद्यव्यसनी क्षीबः कुर्याद्वेतालचेष्टितम् ।
[5]वृष्णयो हि ययुः क्षीबास्तृणप्रहरणाः क्षयम् ॥ ११ ॥
ईर्ष्या कलहमूलं स्यात्क्षमा मूलं हि संपदाम् ।
ईर्ष्यादोषाद्विप्रशापमवाप जनमेजयः[6] ॥ १२ ॥
न त्यजेद्धर्ममर्यादामपि क्लेशदशां श्रितः ।
हरिश्चन्द्रो हि धर्मार्थी सेहे चण्डालदासताम् ॥ १३ ॥
न सत्यव्रतभङ्गेन कार्यं धीमान्प्रसाधयेत् ।
ददर्श[7] नरकक्लेशं सत्यनाशाद्युधिष्ठिरः ॥ १४ ॥
कुर्वीत संगतं सद्भिर्नासद्भिर्गुणवर्जितैः ।
प्राप राघवसंगत्या प्राज्यं राज्यं विभीषणः ॥ १५ ॥

---

१. श्वेतो नाम राजा. तत्कथावाल्मीकीयरामायण उत्तरकाण्डेऽष्टसप्ततितमे सर्गे द्रष्टव्या. २. 'कृत्वा मूत्रमुपस्पृश्य संध्यामन्वास्त नैषधः । अकृत्वा पादयोः शौचं तत्रैनं कलिराविशत् ॥' इति महाभारते वनपर्वण्येकोनषष्टितमेऽध्याये. ३. 'स रक्षिभिस्तैरज्ञातः शूले प्रोतो महातपाः' इत्यादि महाभारत आदिपर्वणि १०७ अध्याये माण्डव्यकथा द्रष्टव्या. ४. 'शस्त्रेण वेणीविनिगूहितेन विदूरथं स्वा महिषी जघान' इति बृहत्संहिता (७८।१)। 'वेणीनिगूढेन च शस्त्रेण बिन्दुमती वृष्णिं बिन्दूरथं [जघान]' इति हर्षचरितषष्ठोच्छ्वासः. ५. वृष्णयो यादवाः. एतत्कथा महाभारते मौसलपर्वणि प्रसिद्धैव. ६. 'जगाम स रथो नाशं शापाद्गार्ग्यस्य धीमतः । गार्ग्यस्य हि सुतं बालं स राजा जनमेजयः । वाक्क्रूरं हिंसयामास ब्रह्महत्यामवाप सः ॥' इति हरिवंशे प्रथमपर्वणि त्रिंशेऽध्याये. ७. 'व्याजेन हि त्वया द्रोण उपचीर्णः सुतं प्रति । व्याजेनैव ततो राजन्दर्शितो नरकस्तव ॥' इति महाभारते स्वर्गारोहणपर्वणि तृतीयेऽध्याये.

मातरं पितरं भक्त्या तोषयेन्न प्रकोपयेत् ।
[1]मातृशापेन नागानां सर्पसत्रेऽभवत्क्षयः ॥ १६ ॥

जराग्रहणतुष्टेन निजयौवनदः सुतः ।
कृतः कनीयान्प्रणतश्चक्रवर्ती [2]ययातिना ॥ १७ ॥ (युग्मम्)

दानं सत्त्वमितं दद्यान्न पश्चात्तापदूषितम् ।
बलिनात्मार्पितो बन्धे दानशेषस्य शुद्धये ॥ १८ ॥

त्यागे सत्त्वनिधिः कुर्यान्न प्रत्युपकृतिस्पृहाम् ।
कर्णः कुण्डलदानेऽभूत्कलुषः [3]शक्तियाच्ञया ॥ १९ ॥

ब्राह्मणान्नावमन्येत ब्रह्मशापो हि दुःसहः ।
तक्षकाग्नौ ब्रह्मशापात्परीक्षिदगमत्क्षयम् ॥ २० ॥

दम्भारम्भोद्धतं धर्मं नाचरेदन्तनिष्फलम् ।
ब्राह्मण्यदम्भलब्धास्त्रविद्या [4]कर्णस्य निष्फला ॥ २१ ॥

नासेव्यसेवया दध्याद्दैवाधीने धने धियम् ।
भीष्मद्रोणादयो याताः क्षयं दुर्योधनाश्रयात् ॥ २२ ॥

परप्राणपरित्राणपरः कारुण्यवान्भवेत् ।
मांसं कपोतरक्षायै स्वं श्येनाय ददौ शिबिः[5] ॥ २३ ॥

अद्वेषपेशलं कुर्यान्मनः कुसुमकोमलम् ।

---

१. 'नावपद्यन्त ये वाक्यं तान्शशाप भुजंगमान् । सर्पसत्रे वर्तमाने पावको वः प्रधक्ष्यति ॥' इति महाभारत आदिपर्वणि विंशेऽध्याये. २. 'गृहाण यौवनं मत्तश्चर कामान्यथेप्सितान् । जरयाहं प्रतिच्छन्नश्चरिष्यामि यथात्थ माम् ॥ ययातिरुवाच— पूरो प्रीतोऽस्मि ते वत्स प्रीतश्चेदं ददामि ते । सर्वकामसमृद्धा ते प्रजा राज्ये भविष्यति ॥' इति महाभारत आदिपर्वणि चतुरशीतितमेऽध्याये. ३. 'वर्मणा कुण्डलाभ्यां च शक्तिं मे देहि वासव । अमोघां शत्रुसंघानां नाशिनीं पृतनामुखे ॥' इति महाभारते वनपर्वणि दशाधिकत्रिशततमेऽध्याये. ४. 'यस्मान्मिथ्योपचरितो ह्यस्त्रलोभादिह त्वया । तस्मादेतन्न ते मूढ ब्रह्मास्त्रं प्रतिभास्यति ॥' इति महाभारते शान्तिपर्वणि राजधर्मे तृतीयेऽध्याये कर्णं प्रति परशुरामस्य शापः. ५. 'उत्कृत्य स स्वयं मांसं राजा परमधर्मवित् । तुलयामास कौन्तेय कपोतेन समं विभो ॥' इति महाभारते वनपर्वण्येकत्रिंशदधिकशततमेऽध्याये.

बभूव द्वेषदोषेण देवदानवसंक्षयः ॥ २४ ॥
अविस्मृतोपकारः स्यान्न कुर्वीत कृतघ्नताम् ।
हत्वोपकारिणं विप्रो नाडीजङ्घमधश्च्युतः ॥ २५ ॥
स्त्रीजितो न भवेद्धीमान्गाढरागवशीकृतः ।
पुत्रशोकाद्दशरथो जीवं जायाजितोऽत्यजत् ॥ २६ ॥
न स्वयं संस्तुतिपदैर्ग्लानिं गुणगणं नयेत् ।
स्वगुणस्तुतिवादेन ययातिरपतद्दिवः ॥ २७ ॥
त्यजेन्मृगव्यव्यसनं हिंसयातिमलीमसम् ।
मृगयारसिकः पाण्डुः शापेन तनुमत्यजत् ॥ २८ ॥
क्षिपेद्वाक्यशरांस्तीक्ष्णान्न पारुष्यव्युपप्लुतान् ।
वाक्पारुष्यरुषा चक्रे भीमः कुरुकुलक्षयम् ॥ २९ ॥
परेषां क्लेशदं कुर्यान्न पैशुन्यं प्रभोः प्रियम् ।
पैशुन्येन गतौ राहोश्चन्द्रार्कौ भक्षणीयताम् ॥ ३० ॥
कुर्यान्नीचजनाभ्यस्तां न याच्ञां मानहारिणीम् ।
बलियाच्ञापरः प्राप लाघवं पुरुषोत्तमः ॥ ३१ ॥
न जातूल्लङ्घनं कुर्यात्सतां मर्मविदारणम् ।
चिच्छेद वदनं शंभुर्ब्रह्मणो वेदवादिनः ॥ ३२ ॥
न बन्धुसंबन्धिजनं दूषयेन्नापि वर्जयेत् ।
दक्षयज्ञक्षयायाभूत्त्रिनेत्रस्य विमानना ॥ ३३ ॥
न विवादमदान्धः स्यान्न परेषाममर्षणः ।
वाक्पारुष्याच्छिरश्छिन्नं शिशुपालस्य शौरिणा ॥ ३४ ॥
गुणस्तवेन कुर्वीत महतां मानवर्धनम् ।

---

१. विप्रो गौतमः. नाडीजङ्घं नाम बकम्. एतत्कथा महाभारते शान्तिपर्वण्यापद्धर्मेऽष्टषष्ठ्यधिकशततमाध्यायमारभ्यापद्धर्मसमाप्तिपर्यन्तं द्रष्टव्या. २. इयं ययातिकथा महाभारत आदिपर्वण्यष्टाशीतितमितेऽध्याये द्रष्टव्या. ३. 'ततो वैरविनिर्बन्धः कृतो राहुमुखेन वै । शाश्वतश्चन्द्रसूर्याभ्यां ग्रसत्यद्यापि चैव तौ ॥' इति महाभारत आदिपर्वण्येकोनविंशतितमेऽध्याये.

हनूमानभवत्स्तुत्या रामकार्यभरक्षमः ॥ ३५ ॥
गुणेष्वेवादरं कुर्यान्न जातो जातु तत्त्ववित् ।
द्रौणिर्द्विजोऽभवच्छूद्रः शूद्रश्च विदुरः क्षमी ॥ ३६ ॥
नात्यर्थमर्थार्थनया धीमानुद्वेजयेज्जनम् ।
अब्धिर्दत्ताश्वरत्नश्रीर्मथ्यमानोऽसृजद्विषम् ॥ ३७ ॥
वक्रैः क्रूरतरैर्लुब्धैर्न कुर्यात्प्रीतिसंगतिम् ।
वसिष्ठस्याहरद्धेनुं विश्वामित्रो निमन्त्रितः ॥ ३८ ॥
तीव्रे तपसि लीनानामिन्द्रियाणां न विश्वसेत् ।
विश्वामित्रोऽपि सोत्कण्ठः कण्ठे जग्राह मेनकाम् ॥ ३९ ॥
कुर्याद्वियोगदुःखेषु धैर्यमुत्सृज्य दीनताम् ।
अश्वत्थामवधं श्रुत्वा द्रोणो गतधृतिर्हतः ॥ ४० ॥
न क्रोधयातुधानस्य धीमान्गच्छेदधीनताम् ।
पपौ राक्षसवद्भीमः क्षतजं रिपुवक्षसः ॥ ४१ ॥
प्रभुप्रसादे नो दद्यात्स्वविनाशास्पदे मतिम् ।
स्वक्षयायोद्धतं युद्धं बाणस्त्र्यक्षमयाचत ॥ ४२ ॥
विद्योद्योगी गतोद्वेगः सेवया तोषयेद्गुरुम् ।
गुरुसेवापरः सेहे कायक्लेशदशां कचः ॥ ४३ ॥
भक्तं भक्तं हितं रक्तं निर्दोषं न परित्यजेत् ।
रामस्त्यक्त्वा सतीं सीतां शोकशल्यातुरोऽभवत् ॥ ४४ ॥
रक्षेत्ख्यातिं पुनः स्मृत्या यशःकायस्य जीवनीम् ।

---

१. वाल्मीकीयरामायणे किष्किन्धाकाण्डे षट्षष्टितमे सर्गे कथेयं द्रष्टव्या. २. द्रौणिरश्वत्थामा. इयं कथा महाभारते सौप्तिकपर्वसमाप्तौ द्रष्टव्या. ३. 'एवमुक्तस्तथा पार्थ विश्वामित्रो बलादिव । हंसचन्द्रप्रतीकाशां नन्दिनीं तां जहार गाम् ॥' इति महाभारत आदिपर्वणि पञ्चसप्तत्यधिकशततमेऽध्याये. ४. इयं कथा महाभारत आदिपर्वणि द्विसप्ततितमेऽध्याये द्रष्टव्या. ५. दीनतामुत्सृज्य धैर्यं कुर्यादित्यन्वयः. ६. 'तद्ब्रूहि मम युद्धस्य कच्चिदागमनं भवेत् । न मे युद्धं विना देव रतिरस्ति प्रसीद मे ॥' इति हरिवंशे द्वितीयपर्वणि. ७. कचो बृहस्पतिपुत्रः. तत्कथा महाभारत आदिपर्वणि षट्सप्ततितमेऽध्याये द्रष्टव्या.

च्युतः स्मृतो जनैः स्वर्गमि[1]न्द्रद्युम्नः पुनर्गतः ॥ ४५ ॥
न कदर्यतया रक्षेल्लक्ष्मीं क्षिप्रपलायिनीम् ।
युक्त्या [2]व्याडीन्द्रदत्ताभ्यां हृता श्रीर्नन्दभूभृतः ॥ ४६ ॥
शक्तिक्षये क्षमां कुर्यान्नाशक्तः शक्तमाक्षिपेत् ।
कार्तवीर्यः ससंरम्भं [3]बबन्ध दशकंधरम् ॥ ४७ ॥
वेश्यावचसि विश्वासी न भवेन्नित्यकैतवे ।
[4]ऋष्यशृङ्गोऽपि निःसङ्गः शृङ्गारी वेश्यया कृतः ॥ ४८ ॥
अल्पमप्यवमन्येत न शत्रुं बलदर्पितः ।
[5]रामेण रामः शिशुना ब्राह्मण्यदययोज्झितः ॥ ४९ ॥
जगद्वैरी जरासंधः पाण्डवेन द्वि[6]धा कृतः ॥ ५० ॥
औचित्यप्रच्युताचारो युक्त्या स्वार्थं न साधयेत् ।
व्याजवालिवधेनैव रामकीर्तिः कलङ्किता ॥ ५१ ॥
वर्जयेदिन्द्रियजयी विजने जननीमपि ।
पुत्रीकृतोऽपि प्रद्युम्नः कामितः [7]शम्बरस्त्रिया ॥ ५२ ॥
न तीव्रतपसां कुर्याद्धैर्यविप्लवचापलम् ।
नेत्राग्निशलभीभावं भवोऽनैषीन्मनोभवम् ॥ ५३ ॥
न नित्यकलहाक्रान्ते सक्तिं कुर्वीत कैतवे ।
[8]रुक्मी फलकदुर्घातैर्द्यूते हलभृता हतः ॥ ५४ ॥

---

१. इन्द्रद्युम्नो नाम राजा. तत्कथा महाभारते वनपर्वणि नवनवत्युत्तरशततमेऽध्याये द्रष्टव्या. २. इयं व्याडीन्द्रदत्तयोः कथा कथासरित्सागरे चतुर्थतरङ्गे द्रष्टव्या. ३. 'स तु बाहुसहस्रेण बलाद्गृह्य दशाननम् । बबन्ध बलवान्राजा बलिं नारायणो यथा ॥' इति वाल्मीकीयरामायण उत्तरकाण्डे द्वात्रिंशे सर्गे. ४. ऋष्यशृङ्गकथा वाल्मीकीयरामायणे बालकाण्डे दशमसर्गे, महाभारते च वनपर्वणि दशोत्तरशततमेऽध्याये द्रष्टव्या. ५. रामेण दशरथसुतेन. रामः परशुरामः. ६. 'करे गृहीत्वा चरणं द्वेधा चक्रे महाबलः' इति महाभारते सभापर्वणि चतुर्विंशेऽध्याये. ७. 'स यदा यौवनस्थस्तु प्रद्युम्नः कामदर्शनः । तं सा मायावती कान्तं कामयामास कामिनी ॥' इति हरिवंशे द्वितीयपर्वणि चतुरुत्तरशततमेऽध्याये. ८. 'विवादे कुपितो रामः क्षेप्तारं किल रुक्मिणम् । जघानाष्टापदेनैव प्रमथ्य यदुनन्दनः ॥' इति हरिवंशे द्वितीयपर्वण्येकषष्टितमेऽध्याये.

प्रभुप्रसादे सत्याशां न कुर्यात्स्वप्नसंनिभे ।
नन्देन मन्त्री निहितः[1] शकटालो हि बन्धने ॥ ५५ ॥
न लोकायतवादेन नास्तिकत्वेऽर्पयेद्धियम् ।
हरिर्हिरण्यकशिपुं जघान स्तम्भनिर्गतः ॥ ५६ ॥
अत्युन्नतपदारूढः पूज्यान्नैवावमानयेत् ।
[2]नहुषः शक्रतामेत्य च्युतोऽगस्त्यावमाननात् ॥ ५७ ॥
संधिं विधाय रिपुणा न निःशङ्कः सुखी भवेत् ।
संधिं कृत्वावधीदिन्द्रो वृत्रं[3] निःशङ्कमानसः ॥ ५८ ॥
हितोपदेशं श्रुत्वा तु कुर्वीत च यथोचितम् ।
विदुरोक्तमकृत्वा तु शोच्योऽभूत्कौरवेश्वरः ॥ ५९ ॥
बह्वन्नाशनलोभेन रोगी मन्दरुचिर्भवेत् ।
प्रभूताज्यभुजो जाड्यं दहनस्याप्यजायत ॥ ६० ॥
यत्नेन शोषयेद्दोषान्न तु तीव्रव्रतैस्तनुम् ।
तपसा कुम्भकर्णोऽभून्नित्यनिद्राविचेतनः ॥ ६१ ॥
स्थिरताशां न बध्नीयाद्भुवि भावेषु भाविषु ।
रामो रघुः शिबिः पाण्डुः क्व गतास्ते नराधिपाः ॥ ६२ ॥
विडम्बयेन्न वृद्धानां वाक्यकर्मवपुःक्रियाः ।
श्रीसुतः प्राप वैरूप्यं विडम्बिततनुर्मुनेः ॥ ६३ ॥
नोपदेशोऽप्यभव्यानां मिथ्या कुर्यात्प्रवादिताम् ।
शुक्रषाड्गुण्यगुप्तापि प्रक्षीणा दैत्यसंततिः ॥ ६४ ॥
न तीव्रदीर्घवैराणां मन्युं मनसि रोपयेत् ।
कोपेनापातयन्नन्दं चाणक्यः सप्तभिर्दिनैः ॥ ६५ ॥

---

१. 'योगनन्दोऽथ कूपान्तः शकटालं तमक्षिपत्' इति कथासरित्सागरे चतुर्थतरङ्गे. २. इयं नहुषकथानुशासनिकपर्वणि शततमेऽध्याये द्रष्टव्या. ३. इयं वृत्रवधकथा शान्तिपर्वणि मोक्षधर्मे द्व्यशीत्युत्तरद्विशततमेऽध्याये द्रष्टव्या. ४. अग्नेः. इयं कथा महाभारत आदिपर्वणि त्रयोविंशत्युत्तरद्विशतमितेऽध्याये द्रष्टव्या. ५. 'अवश्यं हतनन्दोऽयं सप्तभिर्दिवसैर्मया । विनाश्यो बन्धनीया च ततो निर्मन्युना शिखा । सप्तमे दिवसे प्राप्ते पञ्चत्वं समुपागमत् ॥' इति कथासरित्सागरे पञ्चमतरङ्गे.

न सतीनां तपोदीप्तं कोपयेत्क्रोधपावकम् ।
वधाय दशकण्ठस्य वेदवत्यत्यजत्तनुम् ॥ ६६ ॥
गुरुमाराधयेद्भक्त्या विद्याविनयसाधनम् ।
रामाय प्रददौ तुष्टो विश्वामित्रोऽस्त्रमण्डलम् ॥ ६७ ॥
वसु देयं स्वयं दद्याद्बलाद्यद्दापयेत्परः ।
द्रुपदोऽपह्नवी राज्यं द्रोणेनाक्रम्य दापितः ॥ ६८ ॥
साधयेद्धर्मकामार्थान्परस्परमबाधकान् ।
त्रिवर्गसाधना भूपा बभूवुः सगरादयः ॥ ६९ ॥
स्वकुलान्न्यूनतां नेच्छेत्तुल्यः स्यादथवाधिकः ।
सोत्कर्षेऽपि रघोर्वंशे रामोऽभूत्स्वकुलाधिकः ॥ ७० ॥
कुर्यात्तीर्थाम्बुभिः पूतमात्मानं सततोज्ज्वलम् ।
लोमशादिष्टतीर्थेभ्यः प्रापुः पार्थाः कृतार्थताम् ॥ ७१ ॥
आपत्कालोपयुक्तासु कलासु स्यात्कृतश्रमः ।
नृत्तवृत्तिर्विराटस्य किरीटी भवनेऽभवत् ॥ ७२ ॥
अरागभोगसुभगः स्यात्प्रसक्तविरक्तधीः ।
राज्ये जनकराजोऽभून्निर्लेपोऽम्भसि पद्मवत् ॥ ७३ ॥
अशिष्यसेवया लाभलोभेन स्याद्गुरुर्लघुः ।
संवर्तयज्ञयाच्ञाभिर्लज्जां लेभे बृहस्पतिः ॥ ७४ ॥
नष्टशीलां त्यजेन्नारीं रागवृद्धिविधायिनीम् ।
चन्द्रोच्छिष्टाधिकप्रीत्यै पत्नी निन्द्याप्यभूद्गुरोः ॥ ७५ ॥
न गीतवाद्याभिरतिर्विलासव्यसनी भवेत् ।

---

१. वेदवत्येव जन्मान्तरे सीता समभूत्. तत्कथा वाल्मीकीयरामायण उत्तरकाण्डे सप्तदशे सर्गे द्रष्टव्या. २. द्रुपदकथा महाभारत आदिपर्वण्यष्टत्रिंशदधिकशततमेऽध्याये द्रष्टव्या. ३. लोमशोक्तं तीर्थवर्णनं महाभारते वनपर्वण्यशीतितममध्यायमारभ्य द्रष्टव्यम्. ४. अर्जुनः. इयं कथा महाभारते विराटपर्वण्येकादशेऽध्याये द्रष्टव्या. ५. इयं संवर्तबृहस्पतिकथा महाभारत आश्वमेधिकपर्वण्यष्टमनवमाध्याययोर्द्रष्टव्या. ६. इयं बृहस्पतिपत्नीकथा हरिवंशे प्रथमपर्वणि पञ्चविंशेऽध्याये द्रष्टव्या.

वीणाविनोदव्यसनी वत्सेशः[1] शत्रुणा हृतः ॥ ७६ ॥
उद्वेजयेन्न तैक्ष्ण्येन रामाः कुसुमकोमलाः ।
सूर्यो भार्याभयोच्छित्त्यै तेजो[2] निजमशातयत् ॥ ७७ ॥
पद्मवन्न नयेत्कोषं धूर्तभ्रमरभोज्यताम् ।
सुरैः क्रमेण नीतार्थः श्रीहीनोऽभूत्पुराम्बुधिः ॥ ७८ ॥
नोपदेशामृतं प्राप्तं भग्नकुम्भनिभस्त्यजेत् ।
पार्थो विस्मृत[3]गीतार्थः सासूयः कलहेऽभवत् ॥ ७९ ॥
न पुत्रायत्तमैश्वर्यं कार्यमार्यैः कदाचन ।
पुत्रार्पितप्रभुत्वोऽभूद्धृतराष्ट्रस्तृणोपमः ॥ ८० ॥
न शत्रुशेषदूष्याणां स्कन्धे कार्यं समर्पयेत् ।
निष्प्रतापोऽभवत्कर्णः शल्य[4]तेजोवधार्दितः ॥ ८१ ॥
न लब्धे प्रभुसंमाने फलक्लेशं समाश्रयेत् ।
ईश्वरेण धृतो मूर्ध्नि क्षीण एव क्षपापतिः ॥ ८२ ॥
श्रुतिस्मृत्युक्तमाचारं न त्यजेत्साधुसेवितम् ।
दैत्यानां श्रीवियोगोऽभूत्सत्यधर्मच्युतात्मनाम् ॥ ८३ ॥
श्रियः कुर्यात्पलायिन्या बन्धाय गुणसंग्रहम् ।
दैत्यांस्त्यक्त्वा श्रिता देवा निर्गुणान्सगुणाः श्रिया ॥ ८४ ॥
पदाग्निं गां गुरुं देवं न चोच्छिष्टः स्पृशेद्घृतम् ।
दानवानां विनष्टा श्रीरुच्छिष्टस्पृष्टसर्पिषाम् ॥ ८५ ॥
प्रतिलोमविवाहेषु न कुर्यादुन्नतिस्पृहाम् ।
ययातिः शुक्र[5]कन्यायां सस्पृहो म्लेच्छतां गतः ॥ ८६ ॥
रूपार्थकुलविद्यादिहीनं नोपहसेन्नरम् ।

---

१. इयं वत्सेशकथा कथासरित्सागरे द्वादशे तरङ्गे द्रष्टव्या. २. 'ततोऽभ्युपगमात्त्वष्टा मार्तण्डस्य विवस्वतः । भ्रमिमारोप्य तत्तेजः शातयामास भारत ॥' इति हरिवंशे प्रथमपर्वणि नवमेऽध्याये. ३. अर्जुनस्य गीतार्थविस्मरणकथा महाभारते आश्वमेधिकपर्वण्यनुगीतायां प्रसिद्धा. ४. शल्यकृतकर्णतेजोवधकथा महाभारते कर्णपर्वण्यतिप्रसिद्धा. ५. देवयान्याम्.

हसन्तमशपन्नन्दी रावणं वानराननः ॥ ८७ ॥
बन्धूनां वारयेद्वैरं नैकपक्षाश्रयो भवेत् ।
कुरुपाण्डवसङ्ग्रामे युयुधे न हलायुधः ॥ ८८ ॥
परोपकारं संसारसारं कुर्वीत सत्त्ववान् ।
निदधे भगवान्बुद्धः सर्वसत्त्वोद्धृतौ धियम् ॥ ८९ ॥
बिभृयाद्बन्धुमधनं मित्रं त्रायेत दुर्गतम् ।
बन्धुमित्रोपजीव्योऽभूदर्थिकल्पद्रुमो बलिः ॥ ९० ॥
न कुर्यादभिचारोग्रवध्यादिकुहकाः क्रियाः ।
लक्ष्मणेनेन्द्रजित्कृत्याद्यभिचारमयो हतः ॥ ९१ ॥
ब्रह्मचारी गृहस्थः स्याद्वानप्रस्थो यतिः क्रमात् ।
आश्रमादाश्रमं याता ययातिप्रमुखा नृपः ॥ ९२ ॥
कुर्याद्व्ययं स्वहस्तेन प्रभूतधनसंपदाम् ।
अगस्त्यभुक्ते वातापौ कोषस्यान्यैः कृतो व्ययः ॥ ९३ ॥
जन्मावधि न तत्कुर्यादन्ते संतापकारि यत् ।
ससारैकशिरःशेषः सीताक्लिशं दशाननः ॥ ९४ ॥
जराशुभ्रेषु केशेषु तपोवनरुचिर्भवेत् ।
अन्ते वनं ययुर्धीराः कुरुपूर्वा महीभुजः ॥ ९५ ॥
पुनर्जन्मजराच्छेदकोविदः स्याद्वयःक्षये ।
विदुरेण पुनर्जन्मबीजं ज्ञानानले हुतम् ॥ ९६ ॥
परमात्मानमन्तेऽन्तर्ज्योतिः पश्येत्सनातनम् ।
तत्प्राप्त्या योगिनो जाताः शुकशान्तनवादयः ॥ ९७ ॥
प्राप्तावधिरजीवेऽपि जीवेत्सुकृतसंततिः ।
जीवन्त्यद्यापि मांधातृमुखाः कायैर्यशोमयैः ॥ ९८ ॥
अन्ते संतोषदं विष्णुं स्मरेद्धन्तारमापदाम् ।

---

१. 'यस्माद्वानररूपं मामवज्ञाय दशाननः' इत्यादि कथा वाल्मीयकीरामायण उत्तरकाण्डे षोडशे सर्गे. २. इयं वातापिकथा महाभारते वनपर्वणि नवनवतिमितेऽध्याये द्रष्टव्या.

शरतल्पगतो भीष्मः सस्मार गरुडध्वजम् ॥ ९९ ॥
श्रव्या श्रीव्यासदासेन समासेन सतां मता ।
क्षेमेन्द्रेण विचार्येयं चारुचर्या प्रकाशिता ॥ १०० ॥

इति श्री प्रकाशेन्द्रात्मजव्यासदासापराख्यमहाकविश्रीक्षेमेन्द्रकृता चारुचर्या समाप्ता ।

---

## श्रीमधुसूदनसरस्वतीविरचिता
## आनन्दमन्दाकिनी ।

वाग्देवीचतुरास्यपञ्चवदना नित्यं सहस्राननो-
ऽप्युच्चैर्यत्र जडात्मतामुपगताः केऽन्ये वराकाः सुराः ।
मर्त्याः स्वल्पधियः कथं नु कुशलास्तत्राप्यहं प्रज्ञया
हीनः किं करवाणि तां व्रजकुलोत्तंस प्रशंसां तव ॥ १ ॥
नित्यं ब्रह्मसुरेन्द्रशंकरमुखैर्दत्तोपहाराय ते
विस्वादांस्तुषमिश्रतण्डुलकणान्विप्रः सुदामा ददौ ।
तद्वद्देव निरर्थकैः कतिपयै रूक्षाक्षरैर्निर्मितां
वागीशप्रमुखस्तुतस्य भवतः कुर्यां स्तुतिं निस्त्रपः ॥ २ ॥
शश्वद्ब्रह्मशिवेन्द्रदेवगुरुवाग्देवीफणीन्द्रादिभिः
स्तुत्यस्यापि हरे ममास्तु रचिता वाणी विनोदाय ते ।
चित्रालंकृतिशालिभिः सुललितैर्नित्यं कवीनां स्तवैः
सम्राजः समुपासितस्य शुकगीर्धत्ते प्रमोदं यथा ॥ ३ ॥
चित्राकारकिरीटकोटिविलसद्रत्नौघकान्तिच्छटा-
संघट्टेन विचित्रमम्बरतलं कुर्वत्स्थितं मूर्धनि ।
जीयात्केकिशिखण्डमण्डनमिदं नीलाचलस्थायिनी
स्वर्णाद्रेः शिखरे पुरंदरधनुर्व्यूहस्य निन्दावहम् ॥ ४ ॥

---

१. भीष्मस्य गरुडध्वजस्मरणं महाभारते शान्तिपर्वणि राजधर्मे सप्तचत्वारिंशेऽध्याये द्रष्टव्यम्. २. अद्वैतसिद्धि-प्रस्थानभेद-भगवद्गीताटीका-महिम्नस्तवटीका-सिद्धान्तबिन्दुटीकाद्यनेकग्रन्थकर्ता श्रीमधुसूदनसरस्वती कस्मिन्समये बभूवेति न निश्चयः. ३. श्रीकृष्णस्य केशादिपादान्तवर्णनरूपं स्तोत्रमिदम्.

यत्पादान्तनखांशुचिन्तनवशादज्ञानमन्धं तमो-
ऽप्यन्तं याति मुकुन्द तस्य भवतो ध्वान्तानि किं मूर्धनि ।
ज्ञातं त्वां दयितं समेत्य जलदा ये केशतामाश्रिता-
स्ते बद्धाश्चपलागणैः प्रणयजक्रोधात्किरीटच्छलात् ॥ ५ ॥

त्वच्चक्षुः सवितुः सरोरुहरुचेः साक्षात्कथं गण्डयो-
र्भाले च व्रजनाथ नर्तनपरा ध्वान्तार्भकाः संततम् ।
निर्णीतं मुखनेत्रपङ्कजवनीमाध्वीकपानान्मुहु-
र्माद्यन्तो मधुपा भ्रमन्ति परितो वक्त्रालकव्याजतः ॥ ६ ॥

त्वद्भाले निकषोपले विजयते काश्मीरगोरोचना-
संभूतस्तिलकः परीक्षणविधौ किं हेमरेखोद्गमः ।
चाञ्चल्यं चपला विहाय जलदं किं वा समालम्बते
किं वा मारकतस्थले समुदितः कंदर्पवृक्षाङ्कुरः ॥ ७ ॥

त्वद्भ्रूवल्लिमिषेण कार्मुकलतामाकृष्य पुष्पाशुगः
कृत्वा चम्पककोरकं च तिलकव्याजेन बाणं हरे ।
लक्ष्यं कुन्तलनीलकण्ठमतुलश्रीचन्द्रकं विध्यति
प्रायः शत्रुसमाननाश्यपि जने क्रोधो यदूर्जस्विनाम् ॥ ८ ॥

निःशेषप्रमदामनोमनसिजक्रीडामहामन्दिर-
व्रीडावज्रकपाटिकाविघटनप्रौढाकृतिः कुञ्चिका ।
दुर्मानग्रहिलत्रिलोकमहिलामानच्छिदाकर्तरी
शृङ्गारद्रुममञ्जरी स्फुरति किं गोविन्द ते भ्रूलता ॥ ९ ॥

नो कार्यं [1]श्रुतिवर्त्मलङ्घनमिदं [2]नालीकमुग्धाकृतिः
पर्यन्ताकलनं विधाय सहजस्वच्छेन भाव्यं सदा ।
अन्तः [3]कृष्णमुपास्य तद्रुचिमता संभावना सर्वतः
कार्येत्यम्बुजलोचनाक्षियुगलं मानं दधौ ते सताम् ॥ १० ॥

---

१. श्रुतिवर्त्मनः श्रोत्रसीमायाः; (पक्षे) वेदमार्गस्य. २. नालीकस्य कमलस्येव मुग्धा मनोहराकृतिः; (पक्षे) न अलीकेनासत्येन मुग्धा मूढाकृतिः. ३. कृष्णं कृष्णवर्णं स्वमध्यभागस्थितम्; (पक्षे) श्रीकृष्णम्.

सौन्दर्यामृतदीर्घिके तव दृशौ पक्ष्मावलिश्चैतयोः
कूले कामकृषीवलेन रचिता शृङ्गाररसस्योन्नतिः।
दृग्भङ्गीर्निगदन्ति यास्तु विबुधा रत्यम्भसां वीचय-
स्ताः स्युर्गोपवधूहृदम्बुजवनीदोलायिता यत्नतः॥ ११॥

दूरे ब्रह्मशिवेन्द्रपूर्वदिविषद्वृन्दे नमस्कुर्वति
व्यावल्गद्व्रजबालकौघलगुडत्र्युट्यत्किरीटे हठात्।
सावज्ञा मधुमत्तसुन्दरदृशां शोभाद्विषः सालसा
दृक्पातास्तव नन्दवंशतिलक स्वान्ते सदा सन्तु मे॥ १२॥

मुक्तेरप्यतिदुर्लभा हिमगिरिप्रस्यन्दिमन्दाकिनी-
धारातोऽप्यतिशीतलातिमसृणा चान्द्रान्मयूखादपि।
वाञ्छातोऽप्यतिविस्तृता विषयिणां त्वत्पादचिन्तापर-
स्वान्तादप्यतिनिर्मला मयि कृपादृष्टिस्तवास्तां हरे॥ १३॥

कल्पान्ताग्निशिखोन्नतिर्दितिसुतव्राते प्रपन्ने जने
पीयूषद्रवसिन्धुवृद्धिरमरस्तोमे विभूत्यायतिः।
सीमा प्रेमभरस्य गोपनिकरे कंदर्पकाण्डाहति-
र्ब्रह्माण्डोदरसुन्दरीहृदि हरे जीयादृशोस्ते द्युतिः॥ १४॥

निर्बन्धेन यदीन्द्रनीलमहसा संपादितौ दर्पणौ
ताभ्यां किं तुलना कपोलतलयोः संभाव्यते वा न वा।
एवं ज्ञातुमुपागते श्रुतिपथं नेत्रे त्रपाकुञ्चिते
शङ्के द्वैधवती त्वदीयवदनप्रान्तश्रियं पश्यतः॥ १५॥

त्वां पादाङ्गदकङ्कणाङ्गदशिरोलंकारहाराम्बरैः
संपूज्य प्रददौ सुतामथ मणिं रत्नाकरः कौस्तुभम्।
आस्ये तस्य सुतः सुधांशुरखिलां कान्तिं यदा दत्तवा-
न्स्वाकारं व्यतरंस्तदैव मकराः किं कुण्डलान्तस्तव॥ १६॥

लावण्यामृतवाहिनी तव मुखस्येयं मनोज्ञाकृति-
स्तस्यामद्भुतबुद्बुदः समभवत्सापि प्रेमोद्गमः।

नाशावंशगतं तमेव विशदं मुक्ताफलं ये विदु-
स्ते मान्या मधुसूदन त्वयि मनोवृत्त्यैव धन्या यतः ॥ १७ ॥
नेत्राम्भोजमुखेन्दुभालतिलकैर्नित्यं विवादो यतः
सौन्दर्यार्थमिति प्रतीत्य विधिना सीता कृता नासिका ।
तूणी वा कुसुमायुधस्य नृपतेर्यन्मल्लिकाकोरकः
काण्डस्तत्र चकास्ति मौक्तिकफलव्याजेन नन्दात्मज ॥ १८ ॥
योऽहं ते पदपङ्कजद्युतिलवं प्राप्याभवं पल्लवः
कल्पक्ष्मारुहमस्तकाभरणतां यातश्च राधापते ।
तं मां निन्दति बिम्बविद्रुमलताश्रीतस्करोऽयं श्रुता-
वेवं जल्पितुमागते किसलये स्थानेऽधरो रागवान् ॥ १९ ॥
दृग्भङ्गीः स्फुरदिन्द्रनीलनिचयः पक्ष्माणि कस्तूरिका
जिह्वेयं तव पद्मरागनिकरः शोणाधरो विद्रुमः ।
दन्ताली गजमौक्तिकानि मधुजिन्मन्दस्मितं चन्दनं
पण्यस्थानमिदं मनोजवणिजो जाने तवास्ते मुखम् ॥ २० ॥
या रक्ता वदनेन्दुमण्डलगतं माधुर्यमुच्चैस्तरा-
मास्वाद्येह सरस्वती स्थितवती सत्यं रसज्ञेव सा ।
यत्सप्तस्वरमण्डलानि बहुधा त्वत्कण्ठदेशाद्बहिः
प्रादुर्भूय मुदं श्रुतौ सुकृतिनां यच्छन्ति नन्दात्मज ॥ २१ ॥
साम्यं त्वद्वदनस्य वाञ्छति विधुर्दोषाकरो यद्यपि
क्षिप्तोऽप्यम्बुनि पद्मरागशकलो दन्तच्छदं स्पर्धते ।
दृष्ट्वैवं कुशलः कुशेशयभवः[1] क्लेशाद्यशोदात्मज
व्यक्तं त्वच्चिबुकं तथैव विदधे यत्तुल्यता न क्वचित् ॥ २२ ॥
[2]माधुर्यं न लवं मधूनि दधति द्राक्षा तु साक्षाद्विषं
पीयूषान्यपि यान्ति निम्बसमतां के दुग्धखण्डादयः ।
प्रालेयानि न शीतलानि सरसं नो कोकिलाकूजितं
गोधुग्वंशवतंस जातु जयति त्वद्वाग्विलासोदये ॥ २३ ॥

---

१. ब्रह्मा. २. मधूनि लवं कणिकामात्रमपि माधुर्यं न दधति.

 

वेदाश्चन्द्रमसं वदन्ति भवतः स्वान्तं कथं तद्वृथा
कुर्वन्त्यत्र विवादमात्रकुशला गोविन्द नन्दादयः ।
तस्यैवामृतपङ्क्लिलास्तव मुखादाविर्भवन्तो बहि-
र्ध्वान्तं यत्तिरयन्ति हन्त किरणा मन्दस्मितव्याजतः ॥ २४ ॥

यन्नामस्मरणादपि श्रवणतः प्रक्षीणरागाशया
यान्ति त्वत्परमं सदाशिवपदं यद्योगिनां दुर्लभम् ।
तस्याप्याननपङ्कजे तव जयत्युच्चैस्तरां रागिता
येनाभीरकुलप्रदीप तदलं ताम्बूलमास्तां मुदे ॥ २५ ॥

पीयूषद्रवसा[1]रसारघमधुद्रोणी त्वदीयाधरा-
स्वादायार्कसुतातटे श्रितव्रती सद्वंशजाता तपः ।
तत्पुण्यैर्मुरलीमिषेण रसिका माधुर्यमुच्चैस्तरा-
मास्येन्दोरनुभूय गोकुलपते गीतामृतं मुञ्चति ॥ २६ ॥

साफल्यं श्रुतिसंपदां त्रिजगतां प्रालेयधाराप्रपा
पीयूषद्रवमाधुरी परिभवक्लेशाम्बुधेः शोषणम् ।
ब्रह्मानन्दतिरस्कृतिः कुलवधूधैर्याद्रिवज्राहतिः
कंसध्वंसन शंस किं न भवतो वंशीनिनादोदयः ॥ २७ ॥

धैर्यं धिक्कुरुते त्रपां विचिनुते कौलं यशः प्रोञ्छति
प्रत्येकं गुरुवर्गगञ्जनशतं विस्मारयत्यञ्जसा ।
साध्वीनाम निराकरोति भवनं भर्तुर्विधत्ते विषं
किं किं नो विदधाति हन्त सुदृशां वंशीनिनादस्तव ॥ २८ ॥

लावण्यैरखिलैस्त्वदास्यमुकुरं निर्माय धाता चिरा-
न्मुष्टिं मारकतं विधाय तदधः कण्ठस्थलव्याजतः ।
ध्यायं ध्यायमशेषवस्तुसुषमाधाराय रेखात्रयं
ब्रूते नास्ति बभूव नो न भविता सौन्दर्यमेतादृशम् ॥ २९ ॥

[2]आशानागकरप्रसारिमहसा निःशेषवामभ्रुवा-
माशामिस्विदशेशनिर्भरशुभैः कंसादिनाशश्रिया ।

१. सरघा मधुमक्षिका तत्संचितं मधु सारघमित्युच्यते. २. दिग्गजः.

प्रेम्णा नन्दयशोदयोस्तनुजुषां निःसीमभाग्यैर्दृशां
सौभाग्यैर्व्रजसुभ्रुवां व्रजपते किं ते भुजौ निर्मितौ ॥ ३० ॥

कं यस्मादलमभ्युदेति भवतः सर्वाङ्गमेतादृशं
साम्यं वा भजतां कथं जलरुहे सर्वज्ञमध्यस्यतोः ।
मत्तर्कः पुनरत्र गोकुलपते त्रैलोक्यलक्ष्मी यत-
स्त्वत्पाण्योरिति तौ वदन्ति कमले सा यत्तदेकालया ॥ ३१ ॥

अङ्गुल्यस्तव हस्तयोर्मुरहर प्रायो रसालाङ्कुर-
श्रेणी यत्परितोऽङ्गुलीयकामिषस्निग्धालवालावलिः ।
किं वा पञ्चशरप्रचण्डतपसा पञ्चाशुगाः पञ्चतो-
त्तीर्णाः सत्फलिनः पुनर्भवरुचा[1] पुष्णन्ति नेत्रोत्सवान् ॥ ३२ ॥

भक्तानुग्रहकातरेण भवता कृत्वा नृसिंहाकृतिं
रागान्धस्य पुरा हिरण्यकशिपोर्वक्षःस्थली पाटिता ।
तेनाभूत्तव पाणिपङ्कजयुगे रागः स राधापते
गोपीनां कुचकुङ्कुमैर्द्विगुणितो नाद्यापि विश्राम्यति ॥ ३३ ॥

एतौ पञ्चशिरस्त्विषा दशदिशः संभावयन्तौ भृशं
दैत्यप्राणसमीरसंहतियमौ श्यामौ भुजंगोत्तमौ ।
तन्मौलिद्युतिशालिनी पुनरियं रत्नावली जृम्भते
यां प्राहुस्तव गोकुलेश नखरश्रेणीं करस्थां जनाः ॥ ३४ ॥

दोर्दण्डद्वयबन्धनानि विदधुर्नन्दोपनन्दादय-
स्तद्ग्रन्थित्रुटिशङ्कयातिचकिता गोवर्धनोद्धारणे ।
तान्येवाप्रतिमप्रभाणि हरितो विद्योतयत्यद्भुतं
विद्वांसस्तव कङ्कणाङ्गदतया गोविन्द यज्जायते ॥ ३५ ॥

शृङ्गारद्रुमसारकण्डनवशात्त्रैलोक्यसीमन्तिनी-
क्रीडामन्दिरमण्डनाय विधिना स्तम्भौ प्रलम्बौ कृतौ ।

---

१. नखकान्त्या.

तन्मध्ये पुनरिन्द्रनीलमणिभिः संपादिता वेदिका
तौ बाहू मधुजिद्वदन्ति भवतो वक्षःस्थलीं तामपि ॥ ३६ ॥
यद्रक्तः कमलाकरं करतलेनालम्बते भास्कर-
स्त्वच्चक्षुर्मुखपाणिपादकमले जातस्ततः शोणिमा ।
तन्मित्रं पुनराकलय्य स धृतः कण्ठे त्वया कौस्तुभ-
व्याजेनेति मुकुन्द मादृशि जने तर्कः समुज्जृम्भते ॥ ३७ ॥
आलोक्याखिलवेदशास्त्रजलधेस्तत्त्वं यदेकान्ततः
कृत्वा संकलितं स्वकीयनिलये क्षीराब्धिमध्ये धृतम् ।
सर्वार्थप्रतिभासकं व्रजकुलालंकार तत्कौस्तुभ-
व्याजाद्विस्मृतिशङ्कयेव भवता कण्ठे कृतं सांप्रतम् ॥ ३८ ॥
यात्वा विष्णुपदं समाश्रितवती नक्षत्रमाला स्फुर-
द्दीप्तिर्योग्यमिदं कथं मुररिपो नक्तंदिनं द्योतते ।
आं ज्ञातं दयितं तवाननविधुं यान्तीमिमां यामिनी
रोमश्रेणिमिषात्ततो धृतवती ज्ञात्वा सपत्नीमियम् (?) ॥ ३९ ॥
यः पाशेन यशोदया नियमितो येनापराधं विना
तस्मिन्नस्ति बलिस्त्रिधा मयि पुरः सोऽयं बलिध्वंसिनः ।
एवं चिन्तनतत्परः कृशतरस्त्वन्मध्यदेशो भृशं
याशोदेय स शोकमुद्गिरति ते रोमावलिव्याजतः (?) ॥ ४० ॥
सृष्ट्यादौ प्रकृतिर्गुणत्रयमयी या स्वीकृतासीत्त्वया
सेयं सत्त्वमयी सुखाय जगतां हाराकृतिस्ते भुवि ।
गुञ्जादाममिषान्मुकुन्द दधती रागाद्रजोविग्रहं
नाभीसीम्नि तमोमयी पुनरियं रोमावली राजते ॥ ४१ ॥
सौन्दर्यामृतवारिधौ स्मरमहायादःसमारम्भतः
संभूता भ्रमिरम्भसां सुललिता जातास्ततो वीचयः ।
तां जाने स्फुरदिन्द्रनीलघटितश्रीसंपुटार्धद्युतिं
त्वन्नाभीमपि तां वलित्रयमिति श्यामाभिरामाकृते ॥ ४२ ॥

---

१. स्मर एव महद्यादो जलजन्तुः.

नीलाम्भोरुहवल्लिरुल्लसति ते नाभीसरस्यां ध्रुवं
यच्छ्रीवत्समिषाद्बिभर्ति कुसुमं नालं च रोमावली ।
यं वा वक्षसि कौस्तुभं बुधजना जानन्ति नन्दात्मज
प्रायः सोऽप्यनुराग एव भविता त्रैलोक्यवामभ्रुवाम् ॥ ४३ ॥

नीरूपोऽपि घन[1]द्युतिर्मुनिमनोमात्रैकपात्रीकृतो-
ऽप्याभीरीगणसंगतः सुखघनोऽप्यानन्दितो बान्धवैः ।
ज्ञानात्माप्यतिमुग्धतामुपगतो वामभ्रुवां विभ्रमै-
रित्थं ते त्रिवलीमिषान्मुरहर त्रै[2]य्यस्ति चित्रा[3]र्पिता ॥ ४४ ॥

देव्यः पल्लवसंपदा विदधते सौभाग्यलक्ष्मीं श्रुतौ
स्वच्छन्दं सुमनःफलानि विबुधा विन्दन्ति ते सेवया ।
वेदेनापि निगद्यते मुरहर त्वं भक्तकल्पद्रुमः
प्रायः कल्पलता ततः श्रितवती त्वां वैजयन्तीछलात् ॥ ४५ ॥

विश्वानन्दक[4]दम्बसंपदमतिस्निग्धं तमालद्युतिं
दृष्ट्वा निर्भरविभ्रमं घन इति त्वां संगता विद्युतः ।
त्वद्रूपामृतसिन्धुसंगमवशात्प्राप्याम्बरप्रच्यवं
चाञ्चल्यात्किमु नन्दनन्दन भवत्पीताम्बरत्वं दधुः ॥ ४६ ॥

का[5]ञ्ची ते धृतयोगसंपदभितो जाता विशालाकृति-
र्यावन्ती मधुरा ध्वनिं विदधती पश्चादयोध्याभवत् ।
मायाद्वारवती शिवाधिवसतिः सा काशिका दृश्यते
तच्चित्रं न वदामि माधव यतस्त्वां सा सदा संश्रिता ॥ ४७ ॥

जानीमः सहजां त्वदङ्गमिलितामालोक्य पद्मालयां
तत्संगस्थितिभङ्गकातरतमौ कल्पद्रुमैरावतौ ।

---

१. निबिडकान्तिः, मेघच्छविश्च. २. वेदत्रयी. ३. चकिता. ४. समूह, वृक्षविशेषश्च. ५. काञ्ची, विशाला ( बदरीनारायणपुरी ), अवन्ती ( उज्जयिनी ), मधुरा ( मथुरा ), अयोध्या, माया ( हरिद्वारम् ), द्वारवती ( द्वारका ), काशिका ( काशी ), इत्यष्टपुरीनामान्यत्रोपन्यस्तानीति चमत्कारः.

आद्यः पल्लवसंपदं करपदे बिम्बाधरे चापरः
शुण्डादण्डगुणं तवोरुयुगले येनादधे माधव ॥ ४८ ॥
रम्भास्तम्भयुगं न तद्यदुपरि स्थूलं तथोरुद्वयं
तूणीरौ मकरध्वजस्य सुमनोमोदेन विद्मो वयम् ।
हा कष्टं मधुकैटभौ स्फुटमदौ किं कैटभारे हठा-
न्निष्पिष्टौ शतकोटिकोटिकठिनौ तस्मिन्स्थले कोमले ॥ ४९ ॥
स्तम्भद्वैतमिदं पयोनिधिसुतागेहस्य मन्दाकिनी-
स्यन्दामन्दमरन्दिताङ्घ्रिकमलद्वन्द्वस्य नालायुगम् ।
त्वज्जङ्घायुगलं विमुक्तिकलशीनिर्माणदण्डद्वयं
संपत्तिद्विपसंघयन्त्रणविधावालानयुग्मं भजे ॥ ५० ॥
विद्वान्सोऽपि कथं कठोरकमठीपृष्ठेन तुल्यं वद-
न्तीदृक्पादयुगं कथं नु कमला वक्षोजशैले दधत् ।
धिङ्मन्दां वसुधामिदं मधुरिपो गोचारणे संचर-
त्पाषाणाङ्कुरकण्टकादिषु हठाद्दृष्ट्वा विदीर्णा न यत् ॥ ५१ ॥
यद्रत्नौघमरीचयोऽपि समताव्यावर्तनं विश्वतः
कृत्वा दिग्वलयं भ्रमन्ति महिता नादैर्मधुस्यन्दिभिः ।
यच्च ब्रह्मशिवेन्द्रवन्दितपदद्वन्द्वोपरि द्योतते
तत्कृष्णस्य पदाङ्गदद्वयमतः किं वर्ण्यतां मादृशैः ॥ ५२ ॥
शेते यत्कमलालया तव पदाम्भोजद्वये संगता
धाता तत्र तनूपधानयुगलं गुल्फच्छलान्निर्ममे ।
किं वा मन्मथकारुणा विरचिते तस्या मुदे कन्दुके
सा यत्क्रीडति पाणिपङ्कजतले कृत्वा सखीभिः सह ॥ ५३ ॥
या रक्ता दशलोकपालमुकुटप्रान्तत्विषः संततं
कल्पक्ष्मारुहपुष्पसंभृतरुचस्त्वत्पादमूले बभुः ।
ता दीव्यन्नखराञ्चिताङ्गुलितया जानन्ति सत्यं जनाः
स्वस्मिन्नेव सदाधरेण दधते लेखा यदूर्ध्वश्रियम् (?) ॥ ५४ ॥

१. वज्राग्रकठोरौ.

पीयूषद्युतिबिम्बमम्बरतले विद्योतमानं पुरः
प्रेक्ष्योत्फुल्लदृशा त्वया मुहुरिदं देहीति यद्भाषितम् ।
तन्मन्ये तव पङ्कजेक्षण महच्चित्रं यशोदार्थनं
यत्त्वत्पादसरोजयोर्नखमणिव्याजेन शीतांशवः ॥ ५५ ॥

सत्यं यद्विबुधा वदन्ति पदयोर्द्वन्द्वं तवाम्भोरुहे
गोधूलिच्छलतः स्थितानि परितो हंसालिचेतांस्यलम् ।
पीत्वैतन्मकरन्दबिन्दुमसकृद्वृन्दावनीभूपते
मञ्जीरद्वयमञ्जुशिञ्जितमिषादञ्चन्ति यत्पञ्चमम् ॥ ५६ ॥

आकृष्याखिलवस्तुतः प्रथमतो रागं मुनीन्द्रैस्ततः
कृत्वा मानसपङ्कजे तव पदद्वन्द्वं स तस्मिन्धृतैः ।
येनास्मिन्नरविन्दलोचन पुनस्तत्केसराणां द्युति-
स्तोमेनापि समञ्चितः समुदयत्युच्चैस्तरां शोणिमा ॥ ५७ ॥

हंसास्त्वामुपनीय मानससरोजन्मप्रदेशेऽनिशं
क्रीडन्तः कमलालयेन भवता सार्धं प्रमोदं दधुः ।
स त्वं लोचनलोहिताधरपदद्योतः श्रितो हंसतां
तत्संपर्कवशादिति व्रजकुलालंकार शङ्कामहे ॥ ५८ ॥

क्षुद्रात्मा नितरां किमुन्नततरः काठिन्यवान्निर्भयं
किं वा केवलकोमलः श्रयति चेत्किंचिन्मदीयं पदम् ।
धन्यः सोऽयमितीव लोकमखिलं संबोधयन्माधव
त्वं धत्से पदयोर्यवं ध्वजवरं दम्भोलिमम्भोरुहम् ॥ ५९ ॥

त्वां नित्यं समुपास्य दास्यविधया स्थास्याम इत्याशया
ब्रह्मेन्द्राद्यमरैस्त्वदीयपदयोः स्वीया धृताः संपदः ।
तासामङ्कुशनीरजाशनिलसच्छत्रध्वजाद्याकृतिं
बिभ्राणा विजयश्रियं त्रिजगतां वन्द्यारविन्दालया ॥ ६० ॥

त्वत्पादाम्बुजसंगमात्रिजगतां वन्द्यारविन्दालया
स्थाने स्थानगुणाद्भवन्ति हि जनाः प्रायः पदं संपदाम् ।

किं त्वेकं शतपत्रलोचन महच्चित्रं यदस्मादधः
पाता पुण्यतमा विमुक्तिनगरीनिःश्रेणिका स्वर्धुनी ॥ ६१ ॥
यत्पादाम्बु विधाय मूर्धनि चितावासः शिवत्वं हठा-
त्प्राप्तो भक्षितकालकूटनिकरो मृत्युंजयत्वं ययौ ।
दिग्वासा नृकपालमात्रविभवश्चाविन्ददीशानतां
स त्वं नन्दसि यस्य मन्दिरगतो नन्दाय तस्मै नमः ॥ ६२ ॥
धूलीधूसरितं मुखं तव शरत्पूर्णेन्दुनिन्दावहं
व्यालोलालककुण्डलद्युति चलन्नेत्रश्रिया प्रोल्लसत् ।
यालोक्यार्द्रविलोचना स्मितमुखी प्रस्यन्दमानस्तनी
पाणिभ्यामवलम्ब्य चुम्बितवती तां नन्दजायां भजे ॥ ६३ ॥
पीत्वा स्तन्यविषं सहासुपवनैः संपातिते पूतना-
देहे वै भवता जनार्दन तृणावर्ते च नीते क्षयम् ।
राहून्मुक्तसुधामयूखसुषमा यादृक्चकोरालिभि-
र्याभिस्त्वद्वदनद्युतिश्चुलुकिता ता गोपकन्याः स्तुमः ॥ ६४ ॥
यद्बन्धस्य विधित्सयापि विवशः कीनाशपाशैर्दृढं
बद्धः सानुगपुत्रबान्धवजनो दुर्योधनोऽन्तं गतः ।
तं त्वां येन निबध्य नन्ददयिता वृन्दारकैर्वन्दिता
जातानन्दमयी मुकुन्द महते भावाय तस्मै नमः ॥ ६५ ॥
निर्भिन्ने यमलार्जुनेऽतिचकितास्तूर्णं गृहान्निर्गताः
पीत्वा दृक्चषकैस्त्वदक्षततनूरूपामृतं निर्वृताः ।
त्वामादाय विधाय नेत्रसलिलैः सिक्तं त्वरामाश्रिता
ये वृन्दावनमागताः कृतधियस्तान्गोपवृद्धान्स्तुमः ॥ ६६ ॥
कृत्वा कालियदन्दशूकदमनं त्वय्यास्थिते ताण्डवं
तस्योत्तब्धसमस्तमस्तकमणिस्तोमे समुत्तस्थुषि ।
येनालम्भि विभातभास्करस्फुरत्प्राग्भारशोभास्फुर-
द्रत्नाम्भोजसुगन्धिभिः प्रतिपदं तत्तेऽङ्घ्रियुग्मं भजे ॥ ६७ ॥

उत्फुल्लैः परिपीय कर्णपुटकैर्वंशीनिनादामृतं
तच्च घ्राणमुदस्य दत्तकवलं प्रोद्भिन्नरोमाङ्कुरम् ।
निःस्पन्दैर्नयनैरमन्दमधुरैः श्यामं महस्तावकं
येनोद्वीक्षितमम्बुजेक्षण भजे तद्गोकदम्बं तव ॥ ६८ ॥

जम्भारेः स्फुरदायुधस्य भवता दम्भाद्रिविद्रावणं
कृत्वा वामभुजेन सप्तदिवसान्योऽसौ धृतः पर्वतः ।
सोऽस्तु स्निग्धतमालसारघटितस्तम्भैकसंभावित-
प्रासादद्युतिनिन्दकः प्रतिपदं भव्याय गोवर्धनः ॥ ६९ ॥

त्वद्बाहूद्धृतपर्वतार्पितदृशः प्रेक्ष्य प्रियायाः स्खल-
द्वासःपीनपयोधरक्षितिधरौ दोःस्तम्भकम्पे तव ।
शैले चञ्चलतां गते व्रजपते त्रासाकुले गोकुले
नन्दे मन्दमुखद्युतौ जयति ते मन्दाक्षमन्देक्षणम् ॥ ७० ॥

पौगण्डं मदखण्डनं बलभिदः किं ते हरे स्तूयते
कौमारं चरितं यतो विजयते व्यामोहनं ब्रह्मणः ।
किं स्तव्यं तव यौवनं त्रिपुरजिद्यद्बाणयुद्धे जितः
संमोहं गमितास्त्वया यदबला भावेऽपि नेत्रश्रिया(?) ॥ ७१ ॥

पीते दावहुताशने निजजनत्राणैकहेतोस्त्वया
निःस्पन्दं पशुपौघपक्षिपशुभिः पेपीयमाने[1] त्वयि ।
प्रेमार्द्राण्यतिनिर्मलानि दिविषच्चित्तानि सत्यं मुहु-
स्त्वद्गात्रे नु वितीर्यमाणकुसुमव्याजेन भान्ति प्रभो ॥ ७२ ॥

कङ्केल्लिस्तबकं मुहुः कमलिनीकान्तं प्रतीचीगतं
पर्यालोच्य विलोक्य धूमपटलं गोधूलिबुद्ध्याकुलाः ।
उच्चैः कोकिलकूजितं च मुरलीनादं विदित्वा गृहा-
त्त्वां या वीक्षितुमागताः पथि गवां गोपाङ्गनास्ताः स्तुमः ॥७३॥

सायाह्ने समुदञ्चति श्रुतिपथं वंशीनिनादे हठा-
न्नेपथ्यस्य समापनेन शपथैरालीजनैः प्रार्थिते ।

---

१. सादरं विलोक्यमाने.

पाणिभ्यामवलम्ब्य नीविरशना निर्गम्य तूर्णं बहि-
र्दृग्भ्यां ते मुखसौरभं चुलुकितं याभिर्भजे ता जनीः ॥ ७४ ॥
यत्राघासुरकेशिधेनुकबकारिष्टप्रलम्बादयः
क्रोधाग्नौ भवता हुता दितिसुताः संतर्पिता देवताः ।
यस्मिंस्ते पदपङ्कजद्वयरजः पद्मोद्भवप्रार्थितं
भेजुर्गोमृगपक्षिभूरुहलता वृन्दावनं तद्भजे ॥ ७५ ॥
देवेन्द्रस्य पराभवं किमपरं व्यामोहनं ब्रह्मणः
संपश्यन्नपि वैभवं व्रजकुलोत्तंस प्रचेतास्तव ।
नन्दं यत्पितरं जहार भवतः स्थाने जलात्मन्यदः
स्थाने तादृशि ते बभूव न मनाक्क्रोधस्य लेशोऽपि तत् ॥ ७६ ॥
मञ्जीरद्वयकङ्कणावलिलसत्काञ्चीघटाशिञ्जिते
वीणावेणुमृदङ्गझर्झरकरोत्ताले दिशश्चुम्बति ।
कामं पूर्णकलानिधौ विलसति अश्यत्पटे स्वर्वधू-
वृन्दे वर्षति दैवते सुमनसो रासस्तवास्तां मुदे ॥ ७७ ॥
नृत्यद्भ्रूनयनोत्पलस्मितमुखस्विद्यत्कपोलस्थलं
लीलाचञ्चलकुण्डलं भुजलतान्दोलक्कणत्कङ्कणम् ।
त्रुट्यत्कञ्चुकबन्धमुन्नतकुचं तिर्यक्त्रिकं प्रस्खल-
न्नीवि व्यञ्जितशिञ्जितं जयति ते रासः प्रियाभिः सह ॥ ७८ ॥
आकुञ्चद्वदनं क्वचिद्विलसिताम्भोजास्यशोभं क्वचि-
न्मन्दस्यन्दिविलोचलं क्वचिदलं दृक्चापलं कुत्रचित् ।
काप्युद्दाममदान्धसिन्धुरगतं कुत्रापि विद्युल्लता-
चाञ्चल्यं सरवर्धनं विजयते लास्यं प्रियाणां तव ॥ ७९ ॥
अध्यास्योरुतलं वपुः पुलकितं स्विद्यत्कपोलस्थलीं
दोर्वल्लीमपि तावकांसमिलितां कम्पाकुलां बिभ्रति ।
प्रोद्यत्पूर्णकलानिधावरुचिरे स्मेरे मुहुःसीत्कृते
राधा धन्यतमा दधार वदने ताम्बूलकल्कं तव ॥ ८० ॥

---

१. वध्वः. २. युक्तम्.

यस्यां तुङ्गतरङ्गसंगमवशाद्भीता भुजंगभ्रमा-
दालिङ्गन्ति वराङ्गनास्तव जलक्रीडाजुषोऽङ्गं हठात् ।
सा नित्यं दलितेन्द्रनीलनिकरश्रीतस्करा भास्कर-
स्यापत्यं तटिनी शिवं दिशतु मे गोपालभूपालज ॥ ८१ ॥

उत्फुल्लाम्बुजमाकलय्य दयितास्मेराननं विभ्रम-
द्भृङ्गश्रेणिमनङ्गभङ्गुरदृशस्तस्याः कटाक्षच्छटाम् ।
शैवालं परिगृह्य कुन्तलधिया द्राक्चुम्बनायोद्यत-
स्त्वं यस्यां हसितः प्रियाभिरभितस्तां भानुकन्यां भजे ॥ ८२ ॥

पुष्पं त्वय्यवचिन्वति प्रियतमावृन्देन सार्धं मुदा
वृन्दारण्यमहीरुहस्य निकरे कम्पाकुले निर्भरम् ।
तस्मिन्वर्षति कौतुकेन कुसुमान्युच्चैः पुनर्दैवत-
स्तोमेऽपि व्रजभूपते विजयते तैस्तैश्चितं ते वपुः ॥ ८३ ॥

कान्ताकोटिकलाकुलस्य भवतः संतोष्य रासे स्मर-
क्षीणां वीक्ष्य निशां निशाकरकरस्तोमे परं मुञ्चति ।
सातङ्कं समुपागतस्य सदनाद्यान्तं शयाने जने
कीरस्यापि गिरा जयन्ति परितः पर्याकुला दृष्टयः(?) ॥ ८४ ॥

उद्यन्नेव भवानिव व्रजभुवां सर्वापदां संहति-
ध्वान्तस्तोममनुत्तमन्तमनयत्कान्तः सरोजन्मनाम् ।
सोल्लासानि सरोरुहाणि नयनानीव त्वदालोकने
लोकानां किल नन्दवंशतिलक स्वापस्य नायं क्षणः ॥ ८५ ॥

मित्रेणेह तमस्विनीं विनिहतां नाथ त्वया पूतनां
व्याधूतामिव कैरवेष्वपि भवद्विद्वेषिवक्त्रद्युतिम् ।
आशां पश्य पुरंदरस्य दयितां रक्ताम्बरालंकृतां
सिन्दूरान्वितकुम्भमम्बरमणेर्बिम्बं वहन्तीं पुरः ॥ ८६ ॥

गीतज्ञाः कवयो नटा बहुकलाशिक्षासु दक्षाः परे
विप्रेन्द्राः कुशपाणयोऽपि भवनद्वारेषु सन्त्युत्सुकाः ।

तल्पं मुञ्च ददस्व लोचनफलं त्वं देहभाजामिति
प्रातर्बन्दिगिरो जयन्ति भवतः संबोधने नित्यशः ८७ (विशेषकम्)
भानोर्मण्डलमाविरस्ति पुरतो नाद्यापि निद्राहतिः
किं ते तात बलानुजेति जननीवाग्वीचिमाचामतः ।
अर्धोन्मीलितपाटलाक्षियुगलं पर्यस्तनीलालकं
जृम्भारम्भविशेषशोभि वदनाम्भोजं भजामस्तव ॥ ८८ ॥
मुञ्चन्तं शयनं भवन्तमभितः संगम्य गोपाङ्गना-
स्तैलाभ्यञ्जनमञ्जनादि दधतीः संवीक्ष्य देव्यश्चिरम् ।
उज्झन्त्यः सुमनोम्बराणि सुमनोभावा वरं संगताः
प्रायो गोपवधूत्वलब्धिमनसैवाकाशसाम्यं दधुः(?) ॥ ८९ ॥
प्रातर्भोजनमारचय्य विपिनं प्रस्थातुकामे त्वयि
प्रायो गोपवधूलतासु मिलितः कंदर्पदावानलः ।
यद्गोधूलिमिषादुदेति परितो धूमालिरभ्रंलिहा
तासामश्रुरसाः स्रवन्ति च मुहुर्दन्दह्यमानेऽन्तरे ॥ ९० ॥
पञ्चास्ये चतुरानने दशशतीनेत्रादिपूर्वे गवा-
मध्वन्यध्वनि लोकपालनिवहे भूमीलुठन्मूर्धनि ।
तद्व्याघ्राजिनभूषणादिभिरलं त्रस्ते समस्ते पशौ
गोपाः कोपवशाद्गृहीतलगुडा हीहीरवाः स्युर्मुदे ॥ ९१ ॥
तिग्मांशौ तपति क्वचिज्जलमुचां स्तोमे जलं मुञ्चति
प्रेमार्द्रः प्रतनोति यः स्ववपुषा चित्रातपत्रं तव ।
सोऽयं भास्करकोटिभास्वरमहःसंभारपाटच्चरः
पारीन्द्रोऽसुरदन्तिनां दिशतु मे भव्यं भुजंगान्तकः ॥ ९२ ॥
मध्याह्ने यमुनातटे विटपिनां मूले वयस्यैः समं
दध्यन्नान्युपभुज्य रज्यति पुनस्तत्क्रीडने च त्वयि ।
देवेन्द्रस्त्रिपुरान्तकः कमलभूरन्ये च नाकालयाः
काकाकारजुषो मुहुः कवलयन्त्युच्छिष्टमिष्टं तव ॥ ९३ ॥

१. सिंहः. २. गरुडः.

निद्राणे त्वयि शीतले तरुतले तल्पे दलैः कल्पिते
संवीक्ष्याम्बुजपत्रमन्दमरुता संवाहिते पादयोः ।
रुद्रब्रह्ममहेन्द्रतर्जनविधौ गोपार्भकाणां कर-
व्याधूतानि जयन्ति भङ्गुरदृशां कान्तिश्च शोणायिता ॥ ९४ ॥

स्फूर्जन्तस्तपसा पुलस्त्यपुलहागस्त्याः सदुर्वाससः
सन्त्युच्चैर्यशसः परेऽपि स परं धन्यो मुनिर्नारदः ।
यस्य त्वद्गुणगानमग्नमनसो व्यापादिते केशिनि
प्रालेयाद्रिविनिःसृतामरधुनीधारायतेऽस्रावलिः ॥ ९५ ॥

लक्ष्माणि ध्वजवज्रपङ्कजयवच्छत्रोर्ध्वलेखायुता-
न्यालक्ष्याम्बुरुहाक्ष ते चरणयोः क्षोणीतलेऽह्नाय यः ।
ध्यायत्युत्पुलकत्युदञ्चति लुठत्याक्रन्दति प्रीयते
कोऽन्यो धन्यतमस्ततस्त्रिभुवने स्याद्गान्दिनीनन्दनात् ॥ ९६ ॥

धन्यं तस्य जनुस्तथैव पितरौ धन्यं तदीयं कुलं
धन्या तेन वसुंधरा किमधिकं तेनैव धन्यं जगत् ।
यः कंसैकनिदेशवर्त्यपि भवत्पादाम्बुजालोकना-
दक्रूरोऽश्रुनिरुद्धकण्ठकुहरः प्रेमाब्धिमग्नोऽजनि ॥ ९७ ॥

पर्यावृत्त्य पशूनशेषसखिभिः साकं त्वया स्वीकृते
गोपीलोचनपङ्कजालिनिचिते सायं गवामध्वनि ।
जीयासुर्दयिताननेषु नितरां साकूतनृत्याकुलाः
कालिन्दीसदृशाः सितेन सुरसास्त्वच्चक्षुषोः कान्तयः ॥ ९८ ॥

यो वाचो मनसोऽपि नैव विषयस्तं त्वां विधायात्मजं
याभ्यङ्गस्नपनाशनप्रभृतिभिः संलालयत्यन्वहम् ।
नो दानेन न चेज्यया न तपसा नो सांख्ययोगादिभि-
र्यल्लभ्यं तदवाप गोपदयिता सास्तां यशोदा मुदे ॥ ९९ ॥

पूर्णे दानपतेर्मनोरथशतैः सार्धं प्रलम्बारिणा
तल्पे निन्दितदुग्धसिन्धुसुषमासारे त्वया स्वीकृते ।

---

१. अक्रूरः.

संदष्टोष्ठमुदश्रु मर्दितकरं तच्चेष्टितं शृण्वतः
कंसध्वंसमभीप्सतो जयति ते भ्राता समं मन्त्रणा ॥ १०० ॥
या संव्याप्य सुवर्णभूधरपदं जाता गिरीशार्चिता
स्वच्छा हंसकविप्रिया कमलमुद्गाम्भीर्यमभ्यञ्चति ।
येयं कृष्णपदाब्जभक्तिवसुधापातालमालम्बिता
सा तापं मम सर्वतः प्रशमयत्वानन्दमन्दाकिनी ॥ १०१ ॥
ये पाण्डित्यकवित्वसूनुधरणीधर्मार्थकामाणिमा-
दीशित्वेन्द्रपदाप्तिमोक्षमथवा वाञ्छन्ति भक्तिं हरौ ।
संभूतां मधुसूदनप्रपदतः सन्तो भजन्त्वादरा-
त्ते संसारदवाग्नितापशमनीमानन्दमन्दाकिनीम् ॥ १०२ ॥

इति श्रीमन्नन्दनन्दनपदद्वन्द्वसमुदञ्चन्नखचन्द्रचन्द्रिकाचयदत्तचित्तचकोर-
श्रीमधुसूदनसरस्वतीविरचितानन्दमन्दाकिनी संपूर्णा ।

---

## श्रीशंकराचार्यकृतम्

# अम्बाष्टकम् ।

टिप्पणसहितम् ।

चेटीभवन्निखिलखेटी कदम्बतरुवाटीषु नाकिपटली-
कोटीरचारुतरकोटीमणीकिरणकोटीकरम्बितपदा ।
पाटीरगन्धिकुजशाटी कवित्वपरिपाटीमगाधिपसुता
घोटीकुलादधिकधाटीमुदारमुखवीटीरसेन तनुताम् ॥ १ ॥

अगाधिपो हिमाद्रिस्तत्सुता । ममेति शेषः । मम कवित्वस्य कवितायाः परिपाटीमतिपरिचितिमुदारः कवित्वादिगुणप्रसरकर्ता चासौ मुखवीटीरसस्तेन स्वमुखचर्विततताम्बूलरसेन तनुतां विस्तारयतु । कीदृश्यगाधिपसुता । कदम्बतरूणां वाटीषूद्यानेषु चेटीभवन्त्यो दासीभवन्त्यो निखिलाः सर्वाः खेट्यो गगनचारिण्यः सिद्धचारणविद्याधरादिस्त्रियो यस्याः सा । पुनः कीदृशी । नाकिनां देवानां पटली समूहस्तस्याः कोटीराणि मुकुटास्तेषां चारुतरा अतिसुन्दराश्च ताः कोटीमणयोऽग्रभागस्थितरत्नानि तासां किरणकोट्योऽसंख्याः किरणास्ताभिः करम्बिते व्यामिश्रे पदे यस्याः सा । पुनः कीदृशी । पाटीरस्य चन्दनस्येव गन्धो यस्या एतादृशी कुचशाटी कञ्चुकी यस्याः सा । कीदृशीं कवित्वपरिपाटीम् । घोटीनां [वडवानां] कुलं समूहस्तस्मादधिका धाटी घोरणी यस्यास्ताम् ॥

कूलातिगामिभयतूलावलिज्वलनकीला निजस्तुतिविधा-
कोलाहलक्षपितकालामरी कुशलकीलालपोषणनभाः ।
स्थूला कुचे जलदनीला कचे कलितलीला कदम्बविपिने
शूलायुधप्रणतिशीला विभातु हृदि शैलाधिराजतनया ॥ २ ॥

अमरी देवी । शैलाधिराजस्य हिमाद्रेस्तनया पार्वती हृदि विभातु स्फुरतु । कीदृशी । कूलं सीमा । कूलमतीत्य गच्छन्तीति कूलातिगामीनि तानि च तानि भयानि तान्येव तूलावलयः कार्पासराशयस्तासां ज्वलने प्रदीपने कीलेवाग्निज्वालेव । पुनः कीदृशी । निजा चासौ स्तुतिस्तस्या विधा विधानं तस्या यः कोलाहलस्तेन क्षपितो दूरीकृतः कालो मृत्युलक्षणादिर्दुष्टसमयो यया सा । पुनः कीदृशी । कुशलमेव कीलालं जलं तेन पोषणं पालनं तद्विषये नभा मेघ इव । 'मेघश्रावणवृष्टिषु । नभः' इति रत्नकोषः । पुनः कीदृशी । कुचे स्थूला । पीनस्तनीत्यर्थः । कचे केशपाशे जलदनीला । नीलालकेत्यर्थः । कदम्बविपिने कलिता कृता लीला यया सा । पुनः कीदृशी । शूलायुधस्य शिवस्य प्रणतौ शीलं यस्याः सा ॥

यत्राशयो लगति तत्रागजा वसतु कुत्रापि निस्तुलशुका
सुत्रामकालमुखसत्राशनप्रकरसुत्राणकारिचरणा ।
छत्रानिलातिरयपत्राभिरामगुणमित्रामरीसमवधूः
कुत्रासहन्मणिविचित्राकृतिः स्फुरितपुत्रादिदाननिपुणा ॥ ३ ॥

अमरीभिः समं सहवर्तमाना वधूः शक्तिः । ब्राह्म्यादिभिः सहिता शक्तिरित्यर्थः । एतादृश्यगजा पार्वती । ममेति शेषः । आशयश्चित्तवृत्तिर्यत्र शब्दस्पर्शादौ लगति विषजति तत्र कुत्रापि वसतु । शब्दादिविषयचिन्तनावसरे स्वरूपाविर्भावं करोत्वित्यर्थः । कीदृश्यगजा । निस्तुलोऽनुपमः शुको यस्याः सा । अर्थाद्धस्ते । पुनः कीदृशी । सुत्रामा इन्द्रः, कालो यमः, तौ मुखे प्रारम्भे येषां ते च ते सत्राशना यज्ञभुजो देवास्तेषां प्रकरः समूहस्तस्य सुत्राणं रक्षणं तत्करणशीलौ चरणौ यस्याः सा । पुनः कीदृशी । अनिलाद्वायोरप्यतिवेगवत्पत्रं सिंहरूपं वाहनं यस्याः सा । छत्रोपलक्षिता चासावनिलातिरयपत्रा च । पुनः कीदृशी । अभिरामाश्च ते गुणाः सौन्दर्यादयश्च ते मित्राणि यस्याः सा । पुनः कीदृशी । कोः पृथिव्यास्त्रासं हन्तीति कुत्रासहा विष्णुस्तस्य मणिः कौस्तुभस्तद्वद्देदीप्यमाना विचित्राकृतिराकारो यस्याः सा । स्फुरितानां कीर्त्यादियुक्तानां पुत्रादीनां दाने निपुणा ॥

द्वैपायनप्रभृतिशापायुधत्रिदिवसोपानधूलिचरणा
पापापहस्वमनुजापानुलीनजनतापापनोदनिपुणा ।

नीपालया सुरभिधूपालका दुरितकूपादुदञ्चयतु मां
रूपाधिका शिखरिभूपालवंशमणिदीपायिता भगवती ॥ ४ ॥

शिखरिणः पर्वतास्तेषां भूपालोऽधिपतिस्तस्य वंशः संततिस्तत्र रत्नदीपवदाचरिता भगवती मां दुरितलक्षणात्कूपादुदञ्चयतु बहिर्निष्कासयतु। कीदृशी भगवती। द्वैपायनप्रभृतयो व्यासाद्या ये शापायुधा मुनयस्तेषां त्रिदिवं स्वर्गं प्रति गन्तुं सोपानमिव धूलिर्ययोस्तादृशौ चरणौ यस्याः सा। पुनः कीदृशी। पापं हन्तीति तादृशश्चासौ स्वमनुः स्वकीयो मन्त्रस्तस्य जापे जपकर्मण्यनुलीनास्तत्परा ये जनास्तेषां तापापनोदे निपुणा। पुनः कीदृशी। नीपेषु कदम्बवनेष्वालयो यस्याः सा। सुरभिश्चासौ धूपस्तद्वासिता अलकाश्चूर्णकुन्तला यस्याः सा। 'सुरवधूपालिका' इति वा पाठः। पुनः कीदृशी। रूपेण सौन्दर्येणाधिका॥

यालीभिरात्मतनुताली सकृत्प्रियकपालीषु खेलति भय-
व्यालीनकुल्यसितचूलीभरा चरणधूलीलसन्मुनिवरा।
बालीभृति श्रवसि तालीदलं वहति यालीकशोभितिलका
सालीकरोतु मम काली मनः स्वपदनालीकसेवनविधौ ॥ ५ ॥

सा काली मम मनः स्वपदनालीकयोरात्मीयचरणकमलयोः सेवनविधावलीकरोतु भ्रमरीकरोतु। सा का। यालीभिः सखीभिः सकृत्। सहेत्यर्थः। प्रियस्य शिवस्य कपालीषु कण्ठमालास्थकरोटिष्वात्मना स्वभावेन तनुः सूक्ष्मा ताली करेणास्फालनं यस्याः सा। एतादृशी सती खेलति क्रीडति। पुनः कीदृशी। भयमेव व्याली सर्पिणी तस्या नकुलीव नकुली। भयापहारिणीत्यर्थः। पुनः कीदृशी। असितचूलीभरा कृष्णकेशपाशा। पुनः कीदृशी। चरणधूल्यां लसन्तो मुनिवरा यस्याः सा। या देवी बालीं कर्णभूषणविशेषं बिभर्ति तादृशे श्रवणे तालीदलं ताटङ्कपत्रं वहति दधाति। पुनः कीदृशी। अलीके ललाटे शोभमानस्तिलको यस्याः सा॥

न्यङ्काकरे वपुषि कङ्कादिरक्तपुषि कङ्कादिपक्षिविषये
त्वं कामनामयसि किं कारणं हृदय पङ्कारिमेहि गिरिजाम्।
शङ्काशिलानिशितटङ्कायमानपदसंकाशमानसुमनो-
झंकारिभृङ्गततिमङ्कानुपेतशशिसंकाशिवक्त्रकमलाम् ॥ ६ ॥

हे हृदय, त्वं वपुषि शरीरे कामनां लुब्धतामयसि गच्छसि। किं कारणम्। अत्र किं प्रयोजनमित्यर्थः। पङ्कारिं पापनाशकर्त्रीं गिरिजां प्रत्येहि शरणं गच्छ। कीदृशे वपुषि। नियतमकन्तीति न्यङ्का कृम्यादयः। 'अति कुटिलायां गतौ'। तेषामाकरे। कङ्कादिपक्षिणां रक्तेन पुष्यते तस्मिन्। रक्तपदं मांसाद्युपलक्षणम्। पुनः कीदृशे। कङ्कादिपक्षिणां विषये। 'पङ्कादिभक्ष्यविषये' इति वा पाठः। कीदृशीं गिरिजाम्। शङ्का एव

शिलास्तासां भेदकलेन टङ्कायमानं यत्पदं तस्मिन्संकाशमानाः सुमनसः पुष्पाणि तत्र झंकारिणी मृङ्गततिर्यस्याः सा । पुनः कीदृशे । अङ्केनानुपेतो रहितो यश्चन्द्रस्तद्वत्संकाशि वक्त्रकमलं यस्याः सा । निष्कलङ्कचन्द्रवद्रमणीयमुखाम्बुजेत्यर्थः । ताम् ॥

कुम्बावतीसमविडम्बा गलेन नवतुम्बाभवीणसविधा
शं बाहुलेयशशिबिम्बाभिराममुखसंबाधितस्तनभरा ।
अम्बा कुरङ्गमदजम्बालरोचिरिह लम्बालका दिशतु मे
बिम्बाधरा विनतशम्बायुधादिनिकुरम्बा कदम्बविपिने ॥ ७ ॥

अम्बा शं म इह ददातु । कीदृश्यम्बा । कुम्बा कण्टकादिना भित्तिस्थाने कृतं सुगहनमावरणम् । अरण्यवासिलात्तसास्त्यस्य कुम्बावाञ्शबरः । तस्य स्त्री कुम्बावती शबरी तया समस्तुल्यो विडम्बो यस्याः । शबर्यनुकारिणीत्यर्थः । पुनः कीदृशी । गलेन कृत्वा नवा चासौ तुम्बा तुम्बफलं तेनाभाति सा नवतुम्बाभा सा चासौ वीणा च तया समाना विधाः स्वरप्रकारा यस्याः सा । वीणास्वनतुल्यकण्ठरवेत्यर्थः । पुनः कीदृशी । कस्तूरीकर्दमशरीरकान्तिः । पुनः कीदृशी । लम्बालका दीर्घकेशा । बाहुलेयस्य कार्तिकेयस्य शशिबिम्बवदभिरामं मुखं तेन कृत्वा संबाधितः सुदृढमाकृष्टस्तनभरो यस्याः सा । बिम्बाधरा । पुनः कीदृशी । कदम्बविपिने शम्बायुध इन्द्र आदिर्येषां ते निकुरम्बा देवगणास्ते विनता यस्याः ॥

इन्धानकीरमणिबन्धा भवे हृदयबन्धावतीवरसिका
संधावती भुवनसंधारणेऽप्यमृतसिन्धावुदारनिलया ।
गन्धानुभावमुहुरन्धालिवीतकचबन्धा समर्पयतु मे
शंधाम भानुमपि रुन्धानमाशु पदसंधानमप्यगसुता ॥ ८ ॥

अगसुता पदसंधानं मय्यर्पयतु । कीदृश्यगसुता । इन्धन्ते प्रकाशन्ते, इध्यते प्रकाश्यते यैस्ते वा इन्धानाः । ते च कीरवर्णमणयो हरिन्मणयो गारुत्मताख्यास्तेषां बन्धो हाररचना यस्यां सा । यस्याः कण्ठ इत्यर्थः । पुनः कीदृशी । हृदयबन्धौ भवे शिवेऽतीव रसिका । भुवनसंधारणे लोकपालने संधावती प्रतिज्ञायुक्ता । पुनः कीदृशी । अमृतसिन्धावुदारो महान्निलयो यस्याः सा । गन्धस्य अर्थाद्गुपरिगुम्फितपुष्पाणाम् । अनुभावोऽनुभवस्तेन मुहुरन्धा मत्तास्ते च तेऽलिनो भ्रमरास्तैर्वीतो व्याप्तः कचबन्धो यस्याः सा । कीदृशं पदसंधानम् । शं सुखं तस्य धाम । 'शम्' इति सुखार्थेऽव्ययम् । पुनः कीदृशम् । भानुमपि रुन्धानम् । सूर्यादप्यधिकतेजस्वीत्यर्थः ॥

इति श्रीशंकराचार्यविरचितमम्बाष्टकं टिप्पणसहितं समाप्तम् ।

---

# मुकुन्दमुक्तावलिः ।

नवजलधरवर्णं चम्पकोद्भासिकर्णं
विकसितनलिनास्यं विस्फुरन्मन्दहास्यम् ।

कनकरुचिदुकूलं चारुबर्हावचूलं
कमपि निखिलसारं नौमि गोपीकुमारम् ॥ १ ॥
मुखजितशरदिन्दुः केलिलावण्यसिन्धुः
करविनिहितकन्दुर्बल्लवीप्राणबन्धुः ।
वपुरुपसृतरेणुः कक्षनिःक्षिप्तवेणु-
र्वचनवशगधेनुः पातु मां नन्दसूनुः ॥ २ ॥
ध्वस्तदुष्टशङ्खचूड बल्लवीकुलोपगूढ
भक्तमानसाधिरूढ नीलकण्ठपिच्छचूड ।
कण्ठलम्बिमञ्जुगुञ्ज केलिलब्धरम्यकुञ्ज
कर्णवर्तिफुल्लकुन्द पाहि देव मां मुकुन्द ॥ ३ ॥
यज्ञभङ्गरुष्टशक्रनुन्नघोरमेघचक्र-
वृष्टिपूरखिन्नगोपवीक्षणोपजातकोप ।
क्षिप्तसव्यहस्तपद्मधारितोच्चशैलसद्म
गुप्तगोष्ठ रक्ष रक्ष मां तथाद्य पङ्कजाक्ष ॥ ४ ॥
मुक्ताहारं दधदुडुचक्राकारं सारं गोपीमनसि मनोजारोपी ।
कोपी कंसे खलनिकुरम्बोत्तंसे वंशे रङ्गी दिशतु रतिं निःसङ्गी ॥ ५ ॥
लीलोद्दामा जलधरमालाश्यामा क्षामा कामारभिरचयन्ती रामाः ।
सा मामव्यादखिलमुनीनां स्तव्या गव्यापूर्तिः प्रभुरघशत्रोर्मूर्तिः ॥ ६ ॥
पूर्ववर्तुलशर्वरीपतिगर्वरीतिहराननं
नन्दनन्दनमिन्दिराकृतवन्दनं धृतचन्दनम् ।
सुन्दरीरतिमन्दिरीकृतकंदरं धृतमन्दरं
कुण्डलद्युतिमण्डलप्लुतकंदरं भज सुन्दरम् ॥ ७ ॥
गोकुलाङ्गनमङ्गलं कृतपूतनाभवमोचनं
कुन्दसुन्दरदन्तमम्बुजवृन्दवन्दितलोचनम् ।
सौरभाकरफुल्लपुष्करविस्फुरत्करपल्लवं
दैवतव्रजदुर्लभं भज बल्लवीकुलवल्लभम् ॥ ८ ॥
तुण्डकान्ति दण्डितोरुपाण्डुरांशुमण्डलं
गण्डपालिताण्डवालिशालिरत्नकुण्डलम् ।

फुल्लपुण्डरीकखण्डक्लृप्तमाल्यमण्डनं
चण्डबाहुदण्डमत्र नौमि कंसखण्डनम् ॥ ९ ॥
उत्तरङ्गदङ्गरागसंगमातिपिङ्गल-
स्तुङ्गशृङ्गसङ्गपाणिरङ्गनालिमङ्गलः ।
दिग्विलासिमल्लिहासिकीर्तिवल्लिपल्लव-
स्त्वां स पातु फुल्लचारुचिल्लिरद्य बल्लवः ॥ १० ॥
इन्द्रनिवारं व्रजपतिवारं निर्धुतवारं कृतघनवारम् ।
रक्षितगोत्रं प्रीणितगोत्रं त्वां धृतगोत्रं नौमि सगोत्रम् ॥ ११ ॥
कंसमहीपतिहृद्गतशूलं संततसेवितयामुनकूलम् ।
वन्दे सुन्दरचन्द्रकचूलं त्वामहमखिलचराचरमूलम् ॥ १२ ॥
मलयजरुचिरस्तनुजितमुदिरः पालितविबुधस्तोषितवसुधः ।
मामतिरसिकः केलिभिरधिकः सितसुभगरदः कृपयतु वरदः ॥ १३ ॥
उररीकृतमुरलीरुतभङ्गं नवजलधरकिरणोल्लसदङ्गम् ।
युवतिहृदयधृतमदनतरङ्गं प्रणमत यामुनतटकृतरङ्गम् ॥ १४ ॥
नवाम्भोदनीलं जगत्तोषिशीलं मुखासङ्गिवंशं शिखण्डावतंसम् ।
करालम्बिवेत्रं वराम्भोजनेत्रं धृतस्फीतगुञ्जं भजे लब्धकुञ्जम् ॥ १५ ॥
हृतक्षोणिभारं कृतक्लेशहारं जगद्गीतसारं महारत्नहारम् ।
मृदुश्यामकेशं लसद्वन्यवेशं कृपाभिर्निदेशं भजे बल्लवेशम् ॥ १६ ॥
उल्लसद्बल्लवीवाससां तस्करस्तेजसानिर्जितप्रस्फुरद्भास्करः ।
पीनदोःस्तम्भयोरुल्लसच्चन्दनः पातु वः सर्वतो देवकीनन्दनः ॥ १७ ॥
संसृतेस्तारकं तं गवां चारकं वेणुना मण्डितं क्रीडने पण्डितम् ।
धातुभिर्वेषिणं दानवद्वेषिणं चिन्तय स्वामिनं बल्लवीकामिनम् ॥ १८ ॥
उपात्तकवलं परागशबलं सदेकशरणं सरोजचरणम् ।
अरिष्टदलनं विकृष्टललनं नमामि तमहं सदैव तमहम् ॥ १९ ॥
विहारसदनं मनोज्ञरदनं प्रणीतमदनं शशाङ्कवदनम् ।
उरःस्थकमलं यशोभिरमलं करात्तकमलं भजस्व तमलम् ॥ २० ॥

दुष्टध्वंसः कर्णिकारावतंसः खेलद्वंशीपञ्चमध्वानशंसी ।
गोपीचेतःकेलिभङ्गीनिकेतः पातु स्वैरी हन्त वः कंसवैरी ॥ २१ ॥

वृन्दाटव्यां केलिमानन्दनव्यां कुर्वन्नारीचित्तकंदर्पधारी ।
नर्मोद्गारी मां दुकूलापहारी नीपारूढः पातु बर्हावचूडः ॥ २२ ॥

रुचिरनखे रचय सखे वलितरतिं भजनततिम् ।
त्वमविरतिस्त्वरितगतिर्नतशरणे हरिचरणे ॥ २३ ॥

रुचिरपटः पुलिननटः पशुपगतिर्गुणवसतिः ।
स मम शुचिर्जलदरुचिर्मनसि परिस्फुरतु हरिः २४ ॥

केलिविहितयमलार्जुनभञ्जन सुललितचरित निखिलजनरञ्जन ।
लोचननर्तनजितचलखञ्जन मां परिपालय कालियगञ्जन ॥ २५ ॥

भुवनविसृत्वरमहिमाडम्बर विरचितनिखिलखलोत्करसंवर ।
वितर यशोदातनय वरं वरमभिलषितं मे धृतपीताम्बर ॥ २६ ॥

चिकुरकरम्बितचारुशिखण्डं भालविनिर्जितवरशशिखण्डम् ।
रदरुचिनिर्धुतमुद्रितकुन्दं कुरुत सदा हृदि सपदि मुकुन्दम् ॥ २७ ॥

यः परिरक्षितसुरभीलक्षस्तदपि च सुरभीमर्दनदक्षः ।
मुरलीवादनखुरलीशाली स दिशतु कुशलं तव वनमाली ॥ २८ ॥

शमितनिखिलडिम्बे वेणुपीतोष्ठबिम्बे
हतखलनिकुरम्बे बल्लवीदत्तचुम्बे ।
भवतु महितनन्दे तत्र वः केलिकन्दे
जगदविरलतुन्दे भक्तिरुर्वी मुकुन्दे ॥ २९ ॥

पशुपयुवतिगोष्ठीचुम्बितश्रीमदोष्ठी
स्मरतरलितदृष्टिर्निर्मितानन्दवृष्टिः ।
नवजलधरधाम्नः पातु वः कृष्णनाम्नो
भुवनमधुरवेषा मालिनी मूर्तिरेषा ॥ ३० ॥

इति श्रीमुकुन्दमुक्तावलिः समाप्ता ।